Caṇḍamāruta Mahācārya Granthamālā - 2

चण्डमारुत-महाचार्य-विरचिते

वेदान्तविजये प्रथमः

# गुरूपसदनविजयः

# GURŪPASADANAVIJAYAḤ

of

Caṇḍamāruta-Mahācārya



Critically Edited by

**Dr. K.K.C.S. Badhri Narayanan**

Vyakarana Siromani, M.A., M. Phil, B.Ed, Ph.D

&

**Dr. K.K.C. Lakshmi Narasimhan**

Vyakarana Siromani, M.A., B.Ed, Ph.D

Śrī U.Ve. K.K.C. Rāmānuja Doḍḍayācārya Svāmin's
125th Janma-nakṣatra Commemoration Volume



श्रीमते रामानुजाय नमः

श्रीदाशरथिगुरवे नमः

श्रीश्रीनिवासमहागुरवे नमः

# चोलसिंहपुरम्
# कोयिल् कन्दाडै चण्डमारुतम्

रामानुजाचार्यः

सम्पत्कुमाराचार्यः



अस्मत्परमाचार्यवर्याः



अस्मदाचार्यवर्याः

Caṇḍamāruta Mahācārya Granthamālā - 2

चण्डमारुत-महाचार्य-विरचिते

वेदान्तविजये प्रथमः

# गुरूपसदनविजयः

# GURŪPASADANAVIJAYAḤ

of

Caṇḍamāruta-Mahācārya

Critically Edited by

**Dr. K.K.C.S. Badhri Narayanan**

Vyakarana Siromani, M.A., M. Phil, B.Ed, Ph.D

&

**Dr. K.K.C. Lakshmi Narasimhan**

Vyakarana Siromani, M.A., B.Ed, Ph.D

Foreword & Mahācārya Vaibhavam

by

Tirunarayanapuram

Araiyar Srirama Sharma Svami

CAṆḌAMĀRUTA MAHĀCĀRYA
GRANTHASAṂRAKṢAṆA SAṂSTHĀ

16/1, Sannidhi Street, Kuzhippanthandalam
Kancheepuram Dist., Tamil Nadu - 603105

**DEVOTEDLY OFFERED**
**TO**



**AND**
**ALL OUR PŪRVĀCĀRYAS**



हस्तैर्बिभ्रत् सरसिजगदाशंखचक्राणि विद्यां पद्मादर्शौ कनककलशं मेघविद्युद्विलासम्।
वामे तुङ्गस्तनमविरलाकल्पमाश्लेषलोभात् एकीभूतं वपुरवतु वः पुण्डरीकाक्षलक्ष्म्योः ।।

## ACKNOWLEDGEMENT

We, on behalf of Caṇḍamāruta Mahācārya Granthasaṁrakṣaṇa Saṁsthā, are happy to publish our second volume of the works of Caṇḍamarutam Mahācārya (renowned Caṇḍamārutam Doḍḍācārya), one of the stalwarts on Viśiṣṭādvaita School of Śrī Rāmānuja, on the special occasion of 125th birthday celebrations of our Paramācārya Śrīman. U. Ve. Rāmānuja Doḍḍayācārya Svāmin, our grand-father.

The Present publication of Gurūpasadanavijaya (also known as Gurūpasattivijaya) is the first part of Vedāntavijaya authored by Caṇḍamāruta Mahācārya (Doḍḍayācārya). One can notice a distinct style and method of Mahācārya in his works. In this work of Gurūpasadavijaya too, he follows the same way. To avoid the length of the treatise, he advises us to refer some sections in his other works viz., Brahmavidyāvijaya, Sadvidyāvijaya, Advaitavidyavijaya and Pārāśasyavijaya.

Śrī Ubhayavedāntācārya Tirunarayanapuram Araiyar Sriramasarma Svamin has given his kind helping hand by way of correction and citations. This way, we have tried out best to present this critical edition. Maximum original quotations are provided in the footnotes for the easy and convenient reading and understanding of the textual context. We are grateful to this Svamin.

We are thankful to the authorities of Sri Venkateshwara Oriental Research Institute (Tirupati), Ananthacharya Indological Research Institute (Mumbai), Oriental Research Institute (Mysuru), Adyar Library & Research Centre (Adyar, Chennai) and Madras Oriental Manuscripts Library (Chennai), for permitting us to use the manuscripts in their custody. We are also thankful to all our friends who helped in this project in different ways, in addition to M/s Flash Offset, Thindal (Erode) for neatly printing this book.

Advaitavidyāvijaya is in progress. With the benevolent grace of our Lord Śrimannārāyaṇa, all the treatises are to be published with translation in near future.

**K.K.C. LAKSHMI NARASIMHAN**
**General Editor & Publisher**

# विषयसूचिका
**(CONTENTS)**


प्रस्तावना (**Foreword)** vi

**Caṇḍamāruta Mahācārya Vaibhava** viii

उपयुक्तग्रन्थानां संकेतसूची **(Abbreviations)** xi

गुरूपसदने उपयुक्तमुख्यग्रन्थाः **(Select Bibliography)** xiv

गुरूपसदनविजयग्रन्थमातृकाकोशविवरणम्
**(List of Manuscripts consulted)** xvi

गुरूपसदनविजयविषयाः

१. शब्दप्रत्यक्षभङ्गः **1**

२. श्रवणस्य विधेयत्वभङ्गः **34**

३. साधनचतुष्टयपूर्ववृत्तत्वभङ्गः **53**

४. शास्त्रभेदभङ्गः **61**

५. कर्मज्ञानस्यानुष्ठानद्वारकत्वभङ्गः **91**

६. अवेद्यत्वभङ्गः **97**

७. निर्विशेषस्य जिज्ञास्यत्वभङ्गः **122**

८. देवतान्तरोपास्यत्वभङ्गः **146**

९. अवाच्यत्वभङ्गः **231**

श्रीश्रीनिवासमहागुरवे नमः

# प्रस्तावना

## (श्रीमान् उभयवेदान्ताचार्याः तिरुनारायणपुरम् अरैयर् श्रीरामशर्मणः, मेलुकोटे )

श्रीमान् समस्तकल्याणगुणामृतमहोदधिः।
यतिराजकुमारो नः पायाद्यदुगिरीश्वरः।।
(इति बालधन्विसिङ्गराचार्यस्य)

वाधूलकौशिकपरम्परयाप्ततत्वः श्रीरामशर्मविबुधः स्वगुरून् प्रणम्य।
अस्मन्महार्यगुरुवर्यकृतं प्रबन्धं विज्ञान् गुरूपसदनं नयति प्रकामम्।।

श्रीमान् वेङ्कटनाथार्यः शुद्धदर्भाग्रहारजः। श्रुतप्रकाशिकाधर्ता स्वपुत्रेण जयत्यलम्।।
पुत्रो वरदनाथस्तु निरपत्योऽष्टकान्वयः। वैश्वामित्रस्तु श्रीवत्सं ज्ञानपुत्रं चकार सः।।
स हस्तिगिरिनाथाख्यः प्रतिवादिभयङ्करः। वाधूलं शिक्षयांचक्रे विद्वत्समरपुङ्गवम्।।
तस्य शिष्यप्रधानस्तु श्रीनिवासाह्वयो महान्। श्रीभाष्यतूलिकाकारवंश्यवाधूलसंभवः।।
अप्पलाचार्यपुत्रस्तु यादवाद्रेर्विनिर्गतः। घटिकाचलमुख्येषु सञ्चरन् समवस्थितः।।
साऽनपत्यः स्वानुजस्य पौत्रं तं सिंहविक्रमम्। स्वीकृत्यापत्यरूपेण महागुरुपदे न्यधात्।।
धूल्यक्षरात् सर्ववेदशास्त्रवेदान्तशिक्षया। प्रथमस्तु महाचार्यः श्रीनिवासो ह्यभूत् कुले ।।
वन्दे वेदान्तकर्पूरवासितस्वान्तमन्वहम्। वाधूलकुलजीवातुं श्रीनिवासमहागुरुम्।।
द्वितीयस्तु महाचार्यः षष्ठो वेदान्तदेशिकात्। वेदान्तविजयग्रन्थं चक्रेऽसौ चण्डमारुतम्।।
वेदान्तकञ्चुकानां तु नवीनानां तु मायिनाम्। मायाप्रलापान् विजयग्रन्थैरयमपाहरत्।।
शतदूषणिकाचूर्णं वेदान्ताचार्यकल्पितम्। विकिरन् मायिसैन्यानां भीकरञ्चण्डमारुतम्।।
श्रुतप्रकाशिकाटीकां श्रीभाष्यं च ररक्षयत्। वेदान्तार्यपदं धत्ते पारम्परिकमेककः।।
शतदूषणिकाधूलीधूनिता नवमायिनः। भस्मावलेपव्याजेन वैष्णवं ज्वरमादधुः।।
श्रीप्रपन्नामृतग्रन्थे चण्डमारुतवेगतः। अद्वैतदीपिकाग्रन्थो निर्वाण इति वर्णितम्।।
दीक्षिताऽयं महार्यार्यो जयन्नात्मार्यदीक्षतम्। वेदान्तविजयं चक्रे पुरा वेङ्कटनाथवत्।
पराजयो न विप्रस्य स्वस्य वा विजयो न च। कर्तव्यः खलु विप्रेण वेदान्तविजयो ह्यसौ।।
वेदान्तविजयग्रन्थे पञ्चभागाः प्रकीर्तिताः। तत्र प्रथमभागस्तु गुरूपसदनाभिधः।।

गुरूपसत्तिविजये नवभङ्गाः प्रकीर्तिताः। नवीन इति चोक्ते यः शिवभागवताग्रजः।।
तदुक्तानां तु वेदान्तविरुद्धानां हि भञ्जनम्। प्राचीनवैदिकानां हि सूक्तिभिः कृतमित्यलम्।।
तत्र युक्तिशरीराणि न्यायचक्रा स्रवन्ति च। महार्यार्यस्य दृश्यन्ते साङ्गोपाङ्गसुदर्शनैः।।
अस्य शिष्या महार्यस्य भारते विश्रुतास्तथा। मया तु पञ्च ज्ञायन्ते प्रधानाः ग्रन्थवृत्ततः।।
तत्र वेदान्तविजयमङ्गलार्थैव दीपिका। सुदर्शनेन गुरुणा कृता सङ्ग्रहसारतः।।
सा चात्र योजनीया चेत् सौलभ्यं विषये भवेत्। या यादवाद्रियतिराण्मुनिना प्रकटीकृता।।
श्रीमानुभयवेदान्ताचार्योऽयं चण्डमारुतः। वेदान्तं पूर्वतः पश्चात् ज्ञानवर्षैस्तु पुष्यति।।
विशिष्टाद्वैतसिद्धान्ते वेदान्तगुरुराडयम्। श्रीरामानुजसाम्राज्ये विरोधिशमनोऽभवत्।।
पदवाच्यप्रमाणेषु निस्तन्द्रो वेदवाङ्मयम्। सुप्रमाणं दृढं चक्रे साङ्गोपाङ्गोपबृंहणैः।।
मन्त्रव्याख्याकृद्दाचार्यो यो महान् घटिकाचलात्। सप्तर्षिशिखरालीनो नृसिंह इव दीव्यति।।
शुद्धवेदान्तसाम्राज्ये भगवद्गरुडायितः। निरस्याहिभयं विप्रो महाचार्यो जयत्यसौ।।

घटिकाचलयादवाद्रिशृङ्गद्वययोगस्थितसिंहरूपविष्णुः।
नखरैर्गुरुसूक्तिवज्रसारैः अभिनन्मायिगजान् हिरण्यतुल्यान्।।

गुरूपसत्तिविजयमधीत्य गुरुवन्दनैः। गुरूपसत्तेस्तु फलं प्राप्नुयुर्वैष्णोत्तमाः।।
वाधूलश्रीनिवासार्यतनयं विनयाधिकम्। प्रज्ञानिधिं प्रपद्येऽहं श्रीनिवासमहागुरुम्।।
चण्डमारुतवेदान्तविजयादिस्वसूक्तिभिः। वेदान्तरक्षकायास्तु महाचार्याय मङ्गलम्।।

**।। शुभमस्तु ।।**

# Mahācārya Vaibhavam*

Mahācārya, renowned Doḍḍayācārya, had been twelfth generation Ācārya in lineage of the celebrated Dāśarathi (Mudaliyāṇḍān), the nephew of Śrī Rāmānujācārya.

Toḻapparappai, hailed in the lineage of Dāśarathi, has two sons viz. Śrīnivāsācārya (Periyappan known as also Maḥācārya) and Devarājācārya (Siriyappan). Devarājācārya had two sons. The younger son was born in a small village Erumbi, near Cholasimhapuram (presently Sholinghur), in the month of Kumbha on the constellation of Uttarāṣāḍha in the year of Śubhakṛt corresponding to February 1 of 1543 A.D.

सर्वसिद्धित्रयोदश्यां लग्ने वेदप्रदाह्वये ।
जातं कुम्भोत्तराषाढे महाचार्यमहं भजे ।।

The child Śrīnivāsācārya, by his attractive, majestic and auspicious physical characteristics and features, was renamed as Mahācārya by his father Devarājācārya and, later on, for the continuity of the lineage of family, was adopted by his father's elder brother (Perippan or Śrīnivāsācārya), the author of the famous treatise Tūlika, a brief of Śrībhāsya of Śri Rāmānuja.

In due course of time, Mahācārya got all spiritual rituals like upanayana etc. and initiated into the learning of all Śāstras. Married in time, Mahācārya learnt and mastered both Vedānta (Śrībhāṣya and Divya-prabandha tradition) with the grace of Periyappan (Śrīnivāsācārya).

Mahācārya, well-versed in all śāstras, was extremely devoted to the Lord of Ghaṭikācāla (Ghaṭikā hill) and attained special powers from the Lord. Hearing his greatness, the ruler of that region viz. Acyutarāya, hailed in the lineage of Kṛṣṇadevarāya, became the ardent disciple of Mahācārya. With his support, Māhācārya modified the forest on the eastern side of Erumbi into a celebrated known as Cholasimhapuram (present Sholinghur). It is evident that Mahācārya was the key for the formation of Cholasimhapuram.

Earlier, the town Padmanābhapuram near Ghaṭikācala was the place where the utsava-mūrti of the Lord Narasimha was in worship in a temple. Later, during the Muslim invasion, the utsava-mūrti disappeared from the

---

* English rendering of Sanskrit version of Śrī U. Ve. Tirunarayanapuram Araiyar Sriramasarma Svamin, Melukote

temple and got hidden somewhere. When Mahācārya got worried about this, the cakra (Sudarśana) of the Lord Narasimha had appeared in the dream of Mahācārya and had identified the hidden place of Utsava-mūrti. The next day, Mahācārya reached the place and got the utsava-mūrti which was once again consecrated in the temple built in the middle of Cholasimhapuram.

Later on, Mahācārya desired to visit Tirumala hills and, on the way, he prayed to Lord Govindarāja in Tirupati as:

पद्माभूमिकराब्जलालितपदं काञ्चीपरीताम्बरं
पद्मालङ्कृतनाभिमध्यमुरसि भ्राजिष्णुपञ्चायुधम् ।
बाहुद्वन्द्वविराजिचक्रजलजं पद्मोपमास्येक्षणं
गोप्तारं जगतामहीन्द्रशयनं गोविन्दराजं भजे ।।

On Tirumala Hills, Mahācārya was blessed by the Lord Śrīnivāsa, the presiding Deity of Veṇkaṭa Hills, through the words of the priest of the temple to stay there itself to continue his services to sampradāya by way of discourses (kālakṣepa) on Ubhaya-vedānta. Hence, Mahācārya lived at Tirupati for twenty years and rendered his services to Śrībhāṣyakāra sampradāya, by teaching and discoursing on the spiritual literature. During this time, the ruler of Candragiri, a place adjacent to Tirumalā, approached Mahācārya and became his ardent disciple.

It is well-known that, during his stay at Tirupati, Mahācārya was blessed, in dream, by Śrī Rāmānuja in three ways:

1. In the hands of Mahācārya, Śrī Rāmānuja presented the long and old Śrībhāṣya manuscript kept in the hands of Lord Śrīnivāsa, the deity of the temple at Erumbi village. Further Śrī Rāmānuja said:

   वाधूलश्रीनिवासार्य तनयं विनयाधिकम् ।
   प्रज्ञानिधिं प्रपद्येऽहं श्रीनिवासमहागुरुम् ।।

   By this, the name Mahāguru or Mahācārya was obtained by him. This dream of Ayyan Appanaiyyangār confirmed the first blessing to Mahācārya.

2. Śrī Rāmānuja appeared in the dream of Śrībhāṣyam Tirumalai Ayyangār of Tirukkannapuram, informed about the greatness of Mahācārya and instructed him to hand over the manuscript of Śrībhāṣya to Mahācārya. Moreover, he blessed thus:

   श्रुतप्रकाशिकोक्तेन तृतीयेनैव हेतुना ।
   व्याख्यास्यत्यखिलान्वेदमौलिभागान्महागुरुः ।।

3. Once Śrī Rāmānuja, appearing in the dream of Mahācārya addressing the latter 'Rāmānujadāsa' and told:

त्वादीयानपराधौघान् त्वत्संबन्धिकृतानपि ।
क्षमाम्यहं दाशरथेः संबन्धान्मा व्यथां कृथाः ।।

Thus, thereafter, Mahācārya got to be known by also another name 'Rāmānujadāsa.'

Later on, Mahācārya moved to Cholasimhapuram and continued his samradāya teaching. Once, Varadarāja, the deity of Kancheepuram appeared in Mahācārya's dream in the form of a prince and told to wake up his father/Ācārya from the sleep. Mahācārya felt it improper to wake up the sleeping ācārya and remained reluctant. Then the Lord bet him with the whip. Suddenly, he woke up from the sleep and realized the prince was none other than the Lord Himself. Later, he went to Kanchipuram and prayed to the Lord.

When Mahācārya was in Cholasimhapuram teaching his disciples, he had to write a rejoinder to the Vedāntadīpikā, authored by Nṛsimhāśramī, a scholar of Advaita philosophy. The rejoinder is known as 'Caṇḍamārutam' a commentary on Śatadūṣaṇī of Vedantācārya (Veṇkaṭanātha). Thus, Mahācārya became prominent as 'Caṇḍamārutam Mahācārya.' He had philosophical disputes and dialogues with also Appayya Dīkṣita, another stalwart in Advaita philosophy, and remained victorious.

Mahācārya wrote a number of treatises on Viśiṣtādvaita philosophy. Pārāśaryavijaya is a commentary on Śrībhāsya, of which first Adhyāya is alone available. Vedāntavijya consists of five parts viz. Gurūpasadanavijaya, Brahmavidyāvijaya, Sadvidyāvijaya, Advaita-vidyāvijaya and Vijayollāsa which includes Parikaravijaya. Upaniṣaṇmaṇgaladīpikā, a commentary of ten major Upaniṣads, is not available now. His stotras are Ghaṭikācala suprabhātam, Devarāja-pañcaka, Kūranātha-stuti and Vedāntadeśika-vaibhavaprakāśikā.

Once, Mahācārya could not attend the annual function (Mahotsava) of the Lord Varadarāja of Kanchipuram, especially on the day of Garuḍa-sevā. He prayed to the Lord on the bank of water-pond (known as Takkan-kulam currently) in Cholasimhapuram. The Lord appeared on Garuḍa before Mahācārya for a very little short time. Then, he praised the Lord with Devarāja-pañcakam consisting of five ślokas.

During his vijaya tour and stay at Śrīmuṣṇam, Mahācārya attained the lotus feet of his ācārya on Kṛṣṇapakṣa Aṣṭamī in Tula month combined with Punarvasū in the year Plavaṇga (3.10.1609, Saturday).

# उपयुक्तग्रन्थानां संकेतसूची

**(Abbreviations)**

| **ग्रन्थनाम** | **संकेतः** |
|---|---|
| अथर्ववेदः | अथर्व |
| अथर्वशिखोपनिषत् | अथर्वशिखा.उप |
| अमरकोशः | अमर |
| आपस्तम्बगृह्यसूत्रम् | आप.गृ.सू |
| आपस्तम्बश्रौतसूत्रम् | आप.श्रौ.सू |
| आयुष्यसूक्तम् | आयुष्य.सू |
| ईशावास्योपनिषत् | ईश.उ |
| उणादिसूत्रम् | उणादि .सू |
| ऋग्वेदसंहिता | ऋग्वेद |
| कठोपनिषत् | कठ.उ |
| कूर्मपुराणम् | कूर्म.पु |
| केनोपनिषत् | केन.उ |
| कौषीतकिब्राह्मणोपनिषत् | कौषी.ब्रा.उ. |
| छान्दोग्योपनिषत् | छा.उ |
| ताण्ड्यमहाब्राह्मणम् | ताण्ड्य.ब्रा |
| तैत्तिरीयब्राह्मणम् | तै.ब्रा |
| तैत्तिरीयसंहिता | तै.सं |
| तैत्तिरीयारण्यकम् | तै.आरण्य |
| तैत्तिरीयोपनिषत् | तै.उ |
| नरसिंहपुराणम् | नृ.पु |
| नारदपुराणम् | नारद.पु |
| नारायणाथर्वोपनिषत् | ना.अथर्व.उ |
| नारायणोपनिषत् | ना.उ. |
| नृसिंहपूर्वतापनीयोपनिषत् | नृ.पू.ता.उ |
| नृसिंहोत्तरतापनीयोपनिषत् | नृ.उ.ता.उ |
| पराशरपुराणम् | पराशर.पु |

| ग्रन्थनाम | संकेतः |
|---|---|
| पाणिनिसूत्रम् | पाणिनि.सू |
| पाद्मपुराणम् | पाद्म.पु |
| पाद्मसंहिता | पाद्म.सं |
| पाद्मसंहिता चर्यापादम् | पाद्म.सं.चर्या |
| पुरुषसूक्तम् | पु.सू |
| प्रश्नोपनिषत् | प्र.उप |
| बृहदारण्यकोपनिषत् | बृ.उ |
| बोधायनगृह्यसूत्रम् | बो.गृ.सू |
| बोधायनश्रौतसूत्रम् | बो.श्रौ.सू |
| ब्रह्मपुराणम् | ब्रह्म.पु |
| ब्रह्मसूत्रम् | ब्र.सू |
| ब्रह्माण्डपुराणम् | ब्रह्मा.पु |
| भगवद्गीता | भ.गी |
| भागवतमहापुराणम् | भा.पु |
| मत्स्यपुराणम् | मत्स्य.पु |
| मनुस्मृतिः | मनु.स्मृ |
| महानारायणोपनिषत् | म.ना.उ |
| महाभारते आदिपर्व | महा.आदि |
| महाभारते आनुनासिके | महा.आनु |
| महाभारते आश्वमेधिके | महा.आश्व |
| महाभारते उद्योगपर्व | महा.उद्योग |
| महाभारते भीष्मपर्व | महा.भीष्म |
| महाभारते शान्तिपर्व | महा.शान्ति |
| महाभारते सभापर्व | महा.सभा |
| मार्कण्डेयपुराणम् | मार्क.पु |
| मीमांसाकोशः | मी.कोश |
| मीमांसासूत्रम् | मी.सू |
| मीमांसासूत्रम् सङ्कर्षकाण्डः | मी.सू.सङ्कर्ष |

| **ग्रन्थनाम** | **संकेतः** |
|---|---|
| मुण्डकोपनिषत् | मुण्डक |
| मुद्गलोपनिषत् | मुद्गल.उ |
| मैत्रायणीयोपनिषत् | मै.उप |
| यजुर्वेदः | यजुर्वेद |
| यजुस्संहिता | यजु.सं |
| याज्ञवल्क्यस्मृतिः | याज्ञ.स्मृ |
| लक्ष्मीतन्त्रम् | लक्ष्मीतन्त्र |
| लिङ्गपुराणम् | लिङ्ग.पु |
| वराहपुराणम् | वराह.पु |
| वाधूलस्मृतिः | वाधू.स्मृ |
| वामनपुराणम् | वामन.पु |
| वाल्मीकिरामायणम् | रामायण |
| विशिष्टाद्वैतकोशः | वि.कोश |
| विष्णुधर्मोत्तरपुराणम् | विष्णु.ध.पु |
| विष्णुपुराणम् | विष्णु.पु |
| विष्णुसूक्तम् | विष्णु.सू |
| विष्णुस्मृतिः | विष्णु.स्मृ |
| व्यासस्मृतिः | व्यास.स्मृ |
| शङ्खस्मृतिः | शंख.स्मृ |
| शतपथब्राह्मणम् | शत.ब्रा |
| श्रीसूक्तम् | श्री.सू |
| श्वेताश्वतरोपनिषत् | श्वे.उप |
| सामवेदसंहिता | साम.सं |
| सुबा™ोपनिषत् | सु.उ |
| सूर्यसिद्धान्तः | सू.सि.भू |
| स्कन्धपुराणम् | स्क.पु. |
| हरिवंशपुराणम् | ह.वं |

## गुरूपसदनविजये उपयुक्तमुख्यग्रन्थाः
## (Select Bibliography)


| | |
|---|---|
| अथर्ववेदः | Yug Nirman Yojana, Mathura,2005. |
| अमरकोशः | Kendriya Sanskrit Vidyapeetha, Tirupati,1981 |
| आपस्तम्बगृह्यसूत्रम् | Oriental Institute, Mysuru |
| आपस्तम्बश्रौतसूत्रम् | Asiatic society, Culcutta,1889 |
| ईशावास्योपनिषत् | Academy of Sanskrit Research, Melukote, 1991 |
| उपनिषत्संग्रहः | Motilal Banarsidass, Chennai, 1970, 2006 |
| ऋग्वेदसंहिता | Gita Press, Gorakhpur |
| कूर्मपुराणम् | Gita Press, Gorakhpur, 1990. |
| केनोपनिषत् | Academy of Sanskrit Research, Melukote, 1986 |
| केनोपनिषत्पुरुषसूक्तश्रीसुक्तभाष्यम् | UbhayaVedanta Grantamala,Madras,1972 |
| छान्दोग्योपनिषत् (१-२) | Academy of Sanskrit Research, Melukote, 2009 |
| ताण्ड्यमहाब्राह्मणम् | Ganesh Press, Culcutta,1874. |
| तैत्तिरीयब्राह्मणम् | The Baptist mission press, Calcutta,1862 |
| तैत्तिरीयसंहिता | Anandasrama Press, 1946-47 |
| तैत्तिरीयारण्यकम् | The Baptist mission press, Calcutta,1872 |
| तैत्तरीयोपनिषत् | Academy of Sanskrit Research, Melukote, 2005. |
| नारदपुराणम् | Samskriti samsthan, Bareli, 1971 |
| नारसिंहपुराणम् | Eastern book Leniem, Delhi |
| पराशरपुराणम् | Sampurnanand Sanskrit University Press, Varanasi, 1990 |
| पाणिनिसूत्रम् | Chowkhamba Vidyabhavan, Varanasi. |
| पाद्मपुराणम् | Anandasrama Press, Pune |
| पाद्मसंहिता | Pancaratra Parisodhana Parisad,Madras,1974 |
| ब्रह्ममहापुराणम् | Shri Venkateswar's team Press, Mumbai |
| ब्रह्मविद्याविजयः | Candamaruta Mahacharya Grantasamraksana Samstha, 2017. |
| ब्रह्मसूत्रम् | Academy of Sanskrit Research, Melukote, 1989 |
| ब्रह्माण्डपुराणम् | Krishnadas Academy, Varanasi, 2000 |
| बृहदारण्यकोपनिषत् | Academy of Sanskrit Research, Melukote, 1995 |
| बोधायनगृह्यसूत्रम् | The Government Branch Press, Mysore, 1904 |
| बोधायनश्रौतसूत्रम् | The Baptist mission press, Calcutta, 1904,1907 |
| भगवद्गीता | Gita Press, Gorakhpur, 2000 |
| भागवतमहापुराणम् | Nag Publishers, Delhi, 2004-2007 |

| | |
|---|---|
| मत्स्यपुराणम् | Chowkhamba Vidyabhavan, Varanasi, 2002 |
| मनुस्मृतिः | Academy of Sanskrit Research, Melukote, 2006 |
| महाभारतम् | Gita Press, Gorakhpur. |
| मार्कण्डेयपुराणम् | Nag Publishers, Delhi, 1983,1989 |
| मीमांसाकौस्तुभः | Chowkhamba Sanskirt series Office, Varanasi. |
| मुण्डकोपनिषत् | Academy of Sanskrit Research, Melukote, 2005 |
| यजुर्वेदः | Gita Press,Gorakhpur |
| यजुस्संहिता | Gita Press,Gorakhpur |
| याज्ञवल्क्यस्मृति | Nag Publishers, Delhi, 1988 |
| लक्ष्मीतन्त्रम् | The Theosophical Society, Adyar,1975 |
| लिङ्गपुराणम् | Samskriti Samsthan, Bareli |
| वराहपुराणम् | Lachhmandas, Delhi, 1984. |
| वाचस्पत्यम् | Chowkhamba Sanskirt series Office, Varanasi. |
| वामनपुराणम् | Nag Publishers, Delhi, 1985 |
| वाल्मीकिरामायणम् | Gita Press, Gorakhpur, Fourth Edition |
| विशिष्टाद्वैतकोशः | Academy of SR, Melukote. |
| विष्णुपुराणम् | Gita Press, Gorakhpur, 1990. |
| विष्णुस्मृतिः | Chowkhamba Vidyabhavan, Varanasi, 1962 |
| वैजयन्तीकोशः | Chowkhamba Bharati Academy,2008. |
| व्यासस्मृतिः | Nag Publishers, Delhi, 1988 |
| शतपथब्राह्मणम् | Satya Press, Calcutta |
| श्रीभाष्यम् | Academy of Sanskrit Research, Melukote, 1985 |
| सामवेदसंहिता | Ganesh Press, Calcutta |
| सूर्यसिद्धान्तम् | Siddheswara press, Calcutta, 1891 |
| स्कन्धपुराणम् | Gopal Printing press, Calcutta,1962 |
| स्मृतिसन्दर्भः | Nag Publishers, Delhi, 1988 |
| श्रीभाष्यम् | Academy of Sanskrit Research, Melukote, 1985 |
| हरिवंशपुराणम् | Nag Publishers, Delhi, 1998 |
| Concordance to the Principal Upanishads and Bhagavadgita | G.A. Jacob, Motilal Banarasidass, Delhi, 1999 |

## गुरूपसदनविजयग्रन्थमातृकाकोशविवरणम्

**(Manuscripts consulted in the Critical Edition)**

(१) श्रीवेङ्कटेश्वर प्राच्य शोधसंस्था, तिरुपति (Sri Venkateshwara Oriental Research Institute, Tirupati) ग्रन्थलिप्यां वर्तमानः तालपत्रकोशः संपूर्णश्च (संख्या – ३१) । प्रधानतया स्वीकृतः।

(२) अनन्ताचार्य भारतीयशोधसंस्था, मुंबापुरी (Ananthacharya Indological Research Institute, Mumbai) ग्रन्थलिप्यां वर्तमानः, संपूर्णश्च (संख्या – १९८) । 'क' संज्ञितः।

(३) राजकीय प्राच्यकोशागारः, मैसूरु (Oriental Research Institute, Mysore) तेलुगुलिप्यां वर्तमानः तालपत्रकोशः असंपूर्णश्च। (संख्या – ६५६४) । 'ख' संज्ञितः।

(४) अडयार् शोधसंस्था ग्रन्थालये (Adyar Library & Research Centre, Adyar, Chennai) वर्तमानः तालपत्रकोशः असंपूर्णश्च (संख्या – ७०७५५) । 'ग' संज्ञितः।

(५) मद्रास् प्राच्यतालपत्रकोशागारे (Madras Oriental Manuscripts Library) देवनागरिलिप्यां वर्तमानः कागजपत्रात्मकः, संपूर्णः। (संख्या – D-५०१९)। 'घ' संज्ञितः।

**वाधूलश्रीनिवासार्यतनयं विनयाधिकम्। प्रज्ञानिधिं प्रपद्येऽहं श्रीनिवासमहागुरुम्।।**
**चण्डमारुतवेदान्तविजयादिस्वसूक्तिभिः। वेदान्तरक्षकायास्तु महाचार्याय मङ्गलम्।।**

**चण्डमारुत-महाचार्यविरचिते वेदान्तविजये प्रथमः**

# गुरूपसदनविजयः

## १. शाब्दप्रत्यक्षभङ्गः

**वक्त्रांभोजान्मुरारेरुदयमधिगतां सम्यगद्वैतविद्यां**
**दिव्यां सिन्धुं ध्रुवाद्या इव पदसरितं व्यस्तृणन् ये धरायाम्।**
**व्यासो नाथो यतीन्द्रः श्रुतिशिखरगुरुश्श्रीमहाचार्यवर्यो**
**वाधूलश्रीनिवासो गुरुरिति महितांस्तानिमानाश्रयामः।।**

**त्रैविक्रमं दितिजनिर्जयमाप्तहर्षस्सूनुर्यथाम्बुजभुवः प्रथयांबभूव।**
**सानन्दमौपनिषदं तदुदारभावप्रत्यर्थिनिर्जयमहं प्रथयामि तद्वत्।।**

**त्रिविक्रमजयो यथा जलजजन्मनस्सूनुना**
**जितं भगवता जगन्निखिलमित्यजोऽघुष्यत।**
**तथोपनिषदामिदं कुमतिगर्वमर्मच्छिदां**
**विनिर्जययशो रमानिधिसुतेन जोघुष्यते।।**

**परस्परविरोधेन निरस्ताः प्रतिवादिनः।**
**तेन वेदान्तसिद्धान्तस्संपन्नो निरुपद्रवः।।**

‘**स्वाध्यायोऽध्येतव्य**’[१] इत्यध्ययनविधेरध्ययनगृहीताङ्गपरिकर्मितस्वाध्यायसमधिगतानन्तस्थिरफलकर्मब्रह्मावबोधस्य तत्प्रसूत[२]वेदान्तार्थश्रवणाभिलाषस्य मीमांसितपूर्वभागस्य तत्संपादिताल्पास्थिरस्वर्गपश्वादिफलकर्मावबोधस्य ब्रह्मजिज्ञासोत्पत्तिं पूर्वभागार्थनिर्णयसहितापरभागार्थापातप्रतीतिप्रसूतां समीक्ष्य ब्रह्मजिज्ञासोर्गुरूपसदननियमं विदधाति -

---

[१] यदीं शृणोत्यलकं शृणोति न हि प्रवेद सुकृतस्य पन्थामिति तस्मात् **स्वाध्यायोऽध्येतव्यो** यं यं क्रतुमधीते तेन तेनास्येष्टं भवति। (तै.आ.२.१५)

[२] क - ख - वेदार्थ।

[1]"**परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्।**
**नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्**' इति।

अर्थश्रवणस्याविधेयत्वं तत्प्रवृत्ते रागाधीनत्वं मीमांसामात्रं प्रति स्वाध्यायाध्ययनस्य, ब्रह्ममीमांसां प्रति स्वकर्ममीमांसायाश्च पूर्ववृत्तत्वं ब्रह्मणो वेद्यत्वं सविशेषस्यैव जिज्ञास्यत्वं भगवतः पुरुषोत्तमस्यैव विज्ञानविषयतां वाच्यत्वञ्च प्रतिपाद्य तस्यैव सर्वविद्यावेद्यत्वं ब्रूते भगवतीयमुपनिषत्।

अत्र ब्राह्मणशब्दोऽधीतवेदोपलक्षकस्सन् त्रैवर्णिकपरः। कर्मपरीक्षायोग्यत्रैवर्णिकमात्रस्य निर्वेदविद्ययोस्सत्वेन विशिष्य ब्राह्मणोक्त्ययोगात् मन्त्रेषु कर्माणीति विद्याङ्गतया विहितस्यानभिसंहितकर्मणो विधायिष्यमाणानामुपासनतत्स्थानगुणादीनां च [2]विशेषश्रवणात् [3]संदंशनीन्यायादयं विधिस्त्रैवर्णिकविषयः।

किञ्च न ब्राह्मण्यस्य निमित्ततयान्वयः। विज्ञानार्थमिति कामनाधिकारलाभात्। न च जातेष्टिवत् संवलिताधिकारः निमित्तत्वे निमित्तसप्तमी। यच्छब्दाद्यभावात् यत्पदाभावेऽपि प्रकृतत्वात्तच्छब्देन परामर्शः। [4]"**स्योनं ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि**' [5]"**तस्मिन् सीदामृते प्रतितिष्ठ**' इत्यत्र तच्छब्देनेवाविरुद्धः।

न च तच्छब्देन ब्राह्मणपरामर्शाद्विशिष्टविधिः [6]"**राजा राजसूयेन स्वाराज्यकामो यजेत**' इत्यत्रेवेति वाच्यम्। विशिष्टविधौ गौरवाद्राजसूयवाक्ये राजपदवैयर्थ्यप्रसङ्गात्। तथेह तु [7]विज्ञानार्थतानिमित्तनिर्वेदप्रयोजकाध्ययनोपस्थापकत्वसंभवान्न वैयर्थ्यम्। तस्मादवदानशेषभूतवाक्ये [8]"**ब्राह्मणस्त्रिभी ऋणवा जायते**' इतिवत् ब्राह्मणः पाण्डित्यं

---

[1] मुण्डक.१.२.१२.

[2] क - ख - अविशेषश्रवणात्

[3] क - संदंश

[4] **स्योनं ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि** त इति पात्र्यामुपस्तीर्यार्द्रः प्रथस्नुर्भुवनस्य गोपाः शृत उत्स्नाति जनिता मतीनामित्यपर्यावर्तयन् पुरोडाशमुद्वास्य। (आप.श्रौ.सू.२.१०.६)

[5] वेदेन भस्म प्रमृज्य **तस्मिन् सीदामृते प्रतितिष्ठ** व्रीहीणां मेध सुमनस्यमान इति पात्र्यां प्रतिष्ठापयति। (आप.श्रौ.सू.२.११.१)

[6] राजा स्वर्गकामो राजसूयेन यजेत।(आप.श्रौ.सू.१८.८.१)

[7] क - ख - विज्ञानार्थिता

[8] जायमानो वै **ब्राह्मणस्त्रिभी ऋणवान् जायते**।

निर्विद्येतिवच्च ब्राह्मणशब्दस्त्रैवर्णिकपरः। हेतूपस्थापनेन प्रयोजनत्वसिद्धयेऽधीतवेदपरो न द्विजातिपरः।

यद्वा 'अणति पठति' इति व्युत्पत्तौ पचाद्यजन्तोऽण् शब्दः। ब्रह्मणो वेदस्याणो ब्राह्मणः। षष्ठी च संबन्धसामान्ये शकंध्वादिः प्रज्ञादित्वात् स्वार्थिकाणन्तः।

यथा[1] आदित्यं पश्यतीत्यत्रेवानभिधानादण्यप्रवृत्तेः पचाद्यच्। ततश्च [2]जातिकर्मत्व-विवक्षायामपि न दोषः। यद्वा अण्येव [3]'**संज्ञापूर्वको विधिरनित्य**' इति वृद्ध्यभावः। यद्वा 'ब्रह्म अणं यस्य स ब्राह्मण' इति बहुव्रीहिः। 'घञर्थे क' इति कर्मणि कः। आचार्यैस्तु टिलोपाभावस्य छान्दसत्वाभिप्रायेण [4]'**तदधीत**' इत्यणित्यनुगृहीतम्। '**अधीतवेदः पुरुषः**' [5]'**अक्षय्यं ह वै चातुर्मास्ययाजिनस्सुकृतं भवति**' [6]'**अपामसोमममृता अभूम**' [7]'**अनन्तमपारमक्षय्यं लोकं जयति योऽग्निं नाचिकेतं चिनुते**' [8]'**ब्रह्म वेद ब्रह्मैव भवति**' [9]'**ब्रह्मविदाप्नोति परम्**' [10]'**स एको ब्रह्मण आनन्दः**' [1]'**यतो वाचो निवर्तन्ते**'

---

ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः।। (गोविन्दराजीयाम्)
देवर्षिभूताप्तनृणा पितृणां न किंकरो नायमृणी च राजन्।
यः शरणं शरण्यं गतो मुकुन्दं परिहृत्य कृत्यम्।। (भा.पु.११.५.४१)
ऋणैस्त्रिभिर्द्विजो जातो देवर्षिपितृणां प्रभो।
यज्ञाध्ययनपुत्रैस्तान्यनिस्तीर्य त्यजन्पतेत्।। (भा.पु.१०.८४.३९)

[1] क - ख - यद्वा

[2] क - ख - कर्मत्व

[3] तनादिभ्यस्तथासोः (पा.सू.२.४.७९) इति सूत्रस्थवार्तिकम्।

[4] तदधीते तद्वेद। (पाणिनि.सू.४.२.५९)

[5] आप.श्रौ.सू.८.१.१; २२.८.१.

[6] भूस्ते आदिर्मध्यं भुवस्ते स्वस्ते शीर्षं विश्वरूपोऽसि ब्रह्मैकस्त्वं द्विधा त्रिधा बद्धस्त्वं शान्तिस्त्वं पुष्टिस्त्वं हुतमहुतं दत्तमदत्तं सर्वमसर्वं विश्वमविश्वं कृतमकृतं परमपरं च त्वम्। **अपामसोमममृता अभूम**, अगन्म ज्योतिरविदाम देवान्। (अथर्वशिखा.उप.३) (तै.सं.३.२.५)

[7] त्रिनाचिकेतस्त्रयमेतद्विदित्वा य एवं विद्वाँश्चिनुते नाचिकेतम्।
स मृत्युपाशान्पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके।। (कठ.उ.१.१८)

[8] स यो ह वै तत् परमं **ब्रह्म वेद ब्रह्मैव भवति।**
तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति। (मुण्डक.३.२.९)

[9] तै.उ.२.१.१.

[10] तै.उ.२.८.१.

[२]‘**परमं साम्यमुपैति**’ [३]‘**न च पुनरावर्तत**’ इत्यादिभिरनन्तस्थिरफलापातप्रतीत्या वेदविचारोन्मुखः पाठक्रमात् त्रिवर्गे प्रथमप्रावण्याच्च पूर्वभागविचारे प्रवृत्तः श्रुतिलिङ्गाद्यवगतैर्विनियोगैस्सिद्धाभ्यां तत्तत्कर्मविशेषेष्वङ्गभूयस्त्वाल्पत्वाभ्यां क्वचित् प्रकृतिविकृतिभावावगता[४]। उत्तरक्रतुषु सोमावृत्त्या [५]‘**अयनेषु चोदनान्तरम्**’ इत्यत्राधिकरणे [६]‘**दाक्षायणयज्ञेन स्वर्गकाम**’ इत्यत्र विधेयत्वेन निर्णीतयावृत्त्या च सिद्धाभ्यां प्रधानभूयस्त्वाल्पत्वाभ्याञ्चैकस्मिन् स्वर्गाख्ये फले साधनतयावगतेषु कर्मसु गुरुलघुविकल्पासंभवेन फले तारतम्यम्। [७]‘**फलस्य कर्मनिष्पत्तेस्तेषां लोकवत् परिमाणतः फलविशेषस्स्यात्**’ इत्यर्थवादाधिकरणोक्तरीत्या कालस्वरूपाभ्यामवगम्य कर्मसाध्येषु [८]दुःखोदर्कत्वं दुःखसंभिन्नत्वञ्च [९]अवधार्य कर्मणानेन किं मया प्रयोजनं लभ्यते। स्वर्गादिकमनन्तस्थिरफलकामस्य न मे पुरुषार्थः। यश्च पुरुषार्थोऽनन्तस्थिर-फलरूपः प्राप्यतयोत्तरभागादापाततोऽवसितः स कृतेन कर्मणा न लभ्यत इति निर्वेदं प्राप्तो ब्रह्मभागावगतानन्तस्थिरफलप्राप्तये यदिदमनन्तस्थिरफलं भवति। यदि चावगतेन साधनेन तत्प्राप्येत तदैतदेव तेन मया साधनीयम्। अतस्तदिदानीं मया मीमांसितव्यमिति न्यायोपेतवाक्येन ‘सोपायं ब्रह्म निर्दिधारयिषुः गुरुमुखादेव तथा निर्धारयेत्, न तु स्वातन्त्र्येण’ इत्यर्थः। गुरूपसदनस्य दृष्टार्थत्वे संभवत्यदृष्टार्थत्वायोगात् [१०]‘**फलस्य कर्मनिष्पत्तेः**’ इति सूत्रविवक्षितन्यायस्तु यदि ह्यल्पान्महतश्च समं फलं जायेत ततो

---

[१] तै.उ.२.४.१;२.९.१.

[२] यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्।
तदा विद्वान् पुण्यपापे विधूय निरञ्जनः **परमं साम्यमुपैति**। (मुण्डक.३.१.३)

[३] तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्य आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधदात्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्याहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते न च पुनरावर्तते। (छा.उ.८.१५.१.)

[४] क - ख - भावाङ्गतया

[5] मी.सू.१.३.५.

[६] आप.श्रौ.सू.३.१७.४.

[७] मी.सू.१.२.१७.

[८] क - दुःखोदर्कम्; ख - दुःखोदर्कत्वम्

[९] क - अवगम्य; ख - अवधार्य

[१०] मी.सू.१.२.१७.

## १. शाब्दप्रत्यक्षभङ्गः

[१]‘**अत्के चेन्मधु विन्देत**’ इत्यनेन न्यायेनाल्पेन सिद्धे महति न कश्चित् प्रवर्तेत। तत्र विधिशक्तिबाधस्स्यादिति। इदं त्वयनेष्वित्याद्यधिकरणशरीरं [२]‘**दाक्षायणयज्ञेन स्वर्गकामो यजेत**’ इत्यत्र सन्देहः। किं प्रकृतदर्शपूर्णमासयागात् कर्मान्तरमिदमुत तत्रैव गुणविधिरिति। तत्रैवंसंज्ञिकस्य[३] गुणस्याप्रसिद्धत्वात् कर्मनामधेयं दाक्षायणशब्दः।

अतो नामधेयात्कर्मान्तरमिति पूर्वपक्षे राद्धान्तः - दक्ष उत्साही यजमानः तस्यर्त्विजो दाक्षास्तेषामयनमावृत्तिः। अयनशब्दस्य गवामयनमित्यादिष्वावृत्तिवाचित्व-दर्शनात्। अतोऽवयवप्रसिद्ध्या तत्रैवावृत्तिलक्षणस्य गुणस्य विधेर्न कर्मान्तरमिति। एतत् सर्वमभिप्रेत्याचार्यैः [४]‘**आवृत्तिविधानादिभिः**’ इत्यनुगृहीतम्। अत्र निर्वेदवतो विज्ञानार्थित्वानुवादात् श्रवणे रागतः प्रवृत्तिरित्यवगम्यते। तेन श्रोतव्य इत्यस्यापूर्व-विधित्वाभावस्सिद्धः। निर्वेदवतः श्रवणरूपवेदजन्यज्ञानार्थितानियमस्य स्वरसतोऽवगमेन पुराणादौ प्रवृत्त्यभावावगमात् न [५]नियमविधिरित्यपि सिद्धम्।

[६]‘**परीक्ष्य**’ इति प्रागभिधानेनौचित्याद्युपसर्गाच्च विज्ञानशब्दश्श्रवणपरः ‘ब्राह्मण’ इत्यधीतवेदत्वाभिधानाद्वेदान्ताश्श्रोतव्या एव नाध्येतव्या इति शेषान्तरनिवृत्तिफलपरिसंख्या-विधेः। परीक्ष्येति पूर्वभागविचारावगमात् ‘वेदान्ता एव श्रोतव्याः न पूर्वभाग’ इति शेष्यन्तरनिवृत्तिफलकपरिसंख्याविधेश्चाभावोऽवगम्यते। प्रकारान्तराभावात् परिसंख्या-भावोऽपि सिद्धः। निर्वेदाधीनरागप्रवृत्त्युपपादनादेव श्रवणस्याध्ययनविध्यधीनत्वमपि निरस्तम्। एवं श्रवणस्य विधेयत्वाभावो रागात्तत्प्रवृत्तिश्च त्रय्यन्तराद्धान्तः।

तमिममसहमानाः केचिच्छ्रवणविध्यादि वर्णयन्तः स्वयमेव परस्परप्रहारनिरताः त्रय्यन्तमहोत्सवमङ्गलतूर्यमुद्घोषयन्ति।

तथाहि केचिदाहुर्माध्वाः - आपातदर्शनभिन्नं प्रतिवाक्यं ‘अयमस्य वाक्यस्यार्थ’ इति सिद्धार्थोक्तिरूपेण गुरूपदेशेनानेकशाखास्थवाक्यार्थग्रहणश्रवणम्। तच्चाज्ञानमात्र-

---

[१] **अत्के चेन्मधुविन्देत किमर्थं पर्वतं व्रजेत्।**
इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत्।। (मी.शाबरभाष्यम्.१.२.४)

[२] आप.श्रौ.सू.३.१७.४.

[३] क - ख - संज्ञकस्य

[४] प्रथममहाचार्यैरनुगृहीतः

[५] नानासाधनसाध्यक्रियायामेकसाधनप्राप्तावप्राप्तस्यापरसाधनप्रापको विधिर्नियमविधिः। (वि.कोश.६)

[६] मुण्डक.१.२.१२.

विरोधि, न तु मननवत्संशयविरोधि। मननन्तु 'अयमेव वाक्यार्थो युक्तो नान्य' इति निर्णयहेतुः युक्त्यनुसन्धानम्। निरन्तरध्यानं निदिध्यासनम्। इत्थमेव श्रवणादीनां भेदः विचारादिविधिस्त्वपूर्वविधिः। ब्रह्मज्ञाने वेदविचारहेतुताया अत्यन्ताप्राप्तत्वात्। यद्यपि ब्रह्मपरवेदविचार एव ब्रह्मविचारः स च प्राप्तः तथापि न ब्रह्मविचाररूपेण विधानम्, किन्तु वेदविचाररूपेण। एवञ्च यथा घटादावितरभेदे सिद्धेऽपि पृथिवीत्वोपहिते तदसिद्धेः। 'पृथिवी इतरेभ्यो भिद्यत' इत्यत्र न सिद्धसाधनता। यथा वा [१]स्थानप्रकरणाधिकरणोक्तरीत्या राजसूयान्तर्गतेष्टिपशुसोमेषु प्रातिस्विकरूपचोदकत इतिकर्तव्यताप्राप्तावपि राजसूये तदप्राप्तिः। तदा वेदविचारत्वोपहिते ब्रह्मज्ञानहेतुताया अप्राप्तेरपूर्वविधिता। न हि कर्मकाण्डेन ब्रह्मकाण्डेऽप्यवान्तरकारणादिवाक्येन चापाततोऽपि ब्रह्मधीरस्ति।

यद्वा निदिध्यासनस्याव्यक्तस्वभावब्रह्मसाक्षात्कारहेतुनान्यतः प्राप्तेति तावत् अपूर्वविधिः[२]। श्रवणमननयोर्निदिध्यासितव्यगुणविषये वस्तुसामर्थ्यरूपलिङ्गात् प्राप्तावपि तदन्यगुणविषयेऽप्राप्तेस्तद्विधिरप्यपूर्वविधिः। एवञ्च श्रवणमननयोर्निदिध्यासितव्यगुणांशे दृष्टद्वारेणान्यत्रादृष्टद्वारेण निदिध्यासनाङ्गतेति।।

अपरे तु तदेकदेशिनः प्राहुः - '**द्रष्टव्यः**' '**श्रोतव्य**' इत्यादयो मोक्षोद्देशेन दर्शनादीनां विधायकाः। [३]'**आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम्**' इत्युपक्रम्य तदुपसंहारे [४]'**एतावदरे खल्वमृतत्वम्**' इति 'एतावत्' शब्देन प्रकृतदर्शनादि

---

[१] क - ख - स्थानप्रकरणोक्तरीत्या।

[२] अप्राप्तप्रापको विधिः अपूर्वविधिः। यस्य यदर्थत्वं प्रमाणान्तरेणाप्राप्तं तस्य तदर्थत्वेन यो विधिः सोऽपूर्वविधिः। (वि.कोश.१)

[३] आत्मा वा अरे **द्रष्टव्यः श्रोतव्यो** मन्तव्यो निदिध्यासितव्यः।
**मैत्रेय्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम्**।। (बृ.उ.६.५.६)

[४] यत्र हि द्वैतमिव भवति - तदितर इतरं पश्यति, तदितर इतरं जिघ्रति,(तदितर इतरँ रसयते) तदितर इतरमभिवदति, तदितर इतरँ शृणोति, तदितर इतरं मनुते,(तदिदर इतरं स्पृशति) तदितर इतरं विजानाति। यत्र त्वस्य सर्वमात्मैवाभूत् - तत् केन कं पश्येत्, तत् केन कं जिघ्रेत्,(तत् केन कं रसयेत्) तत् केन कमभिवदेत्, तत् केन कं शृणुयात्, तत् केन कं मन्वीत,(तत् केन कं स्पृशेत्) तत् केन कं विजानीयात्। येनेदँ सर्वं विजानाति, तं केन विजानीयात्। (स एष नेति नेत्यात्मा। अगृह्यो न हि गृह्यते, अशीर्यो न शीर्यते, असङ्गो न हि सज्यते, असितो न व्यथते न रिष्यति) विज्ञातारमरे

चतुष्टयं परामृश्य तस्य लाङ्गलं जीवनमितिवदुपचारेणाविशेषणामृतत्वसाधनत्व-प्रतिपादनात्। ते च 'दर्शपूर्णमासाभ्याम्' इति द्वन्द्वेन 'एतावत्' शब्देन परामृश्य तुल्यवत् फलसंबन्धप्रतिपादनात् समप्रधानाः। तेषाञ्चोत्तरोत्तरद्वारा मोक्षसाधनत्वम्। तथाप्युत्तरोत्तरं प्रति शेषत्वाभावात् क्रतूपकारकाधानवत् प्राधान्याविरोधः। ध्यानस्याव्यक्तस्वभाव-ब्रह्मसाक्षात्कारहेतुताया लोकसिद्धत्वाभावेऽपि दृष्टत्वेन मोक्षे जनयितव्ये ब्रह्म-दर्शनस्यैव ध्यानं प्रति द्वारत्वं कल्प्यते। यद्यपि मुमुक्षोः श्रवणमनने ध्यानविधिनैव ध्येय-गुणेषु प्राप्ते तथापि तदन्यगुणविषयेऽत्यन्ताप्राप्तेः [१]'**श्रोतव्यो मन्तव्य**' इत्यपूर्वविधिः। अत्र च श्रवणस्य दृष्टं मननमेव द्वारम्। मननस्य तु ध्येयांशे दृष्टमन्यत्रादृष्टमिति।

मायिनां तु केचित् -अपूर्वविधिरेवायमप्राप्तत्वाद्वेदान्तश्रवणं ब्रह्मसाक्षात्कारहेतुरिति मानान्तरादनवगमात्। कृतेऽपि श्रवणे तदनुत्पत्त्या वामदेवस्य श्रवणं विनापि गर्भस्थस्यैव तदुत्पत्तेरुभयतो व्यभिचारादन्वयव्यतिरेकाभ्यां ग्रहीतुमशक्यत्वादिति।

अन्ये तु - नायमपूर्वविधिः। अपरोक्षवस्तुगोचरप्रमाणत्वावच्छेदेन साक्षात्कार-हेतुत्वस्य विचारमात्रस्य विचार्यनिर्णयहेतुत्वस्य च प्राप्तत्वेन विचारितवेदान्तस्य निर्णयरूपब्रह्मसाक्षात्कारहेतुतायाः प्राप्तेस्सहकारिवैकल्यजन्मान्तरीयश्रवणसंभवान्नोभयतो व्यभिचारः। अन्यथा साधनत्वबाधैरपूर्वविधिरपि न स्यादिति नियमविधिरेवायमिति नियमविधिवादिनोऽपि परस्परं निघ्नन्ति।

केचिदाहुर्माध्वाः - '**श्रोतव्यो मन्तव्य**' इति नियमविधिः। संभवति च शब्दयुक्ति-जन्यज्ञानवाचिभ्यां श्रोतव्यमन्तव्यपदाभ्यां दुरागमरूपशब्दाभासतदनुग्राहकन्यायाभासजन्य-ज्ञानव्यावर्तनमिति हि।

मायिनां तु केचिदाहुः - यथा किञ्चिद्वस्तु चक्षुषा वीक्षमाणस्तत्र स्वागृहीते सूक्ष्मविशेषान्तरे केनचित्कथिते तदवगमाय तस्यैव चक्षुषस्सप्रणिधानव्यापारे प्रवर्तते, तथा मनसा ग्राह्यमाणे आत्मनि वेदान्तैरापाततो निर्विशेषरूपम् आकर्ण्य तदवगमाय मनस एव सप्रणिधानम्। तत्र निधाने कदाचित् प्रवर्तेतेति वेदान्तश्रवणे प्रवृत्तिः पाक्षिकी स्यादिति नियमविधिरिति।

---

केन विजानीयादिति। उक्तानुशासनासि मैत्रेयी **एतावदरे खल्वमृतत्वमिति** होक्त्वा याज्ञवल्क्य विजहार। (बृ.उ.६.५.१५)

[१] आत्मा वा अरे द्रष्टव्यः **श्रोतव्यो मन्तव्यो** निदिध्यासितव्यः। (बृ.उ.४.४.५;६.५.६)

अपरे तु - [१]‘**जुष्टं यदा पश्यत्यन्यमीशम्**’ इति श्रवणादिभिन्नात्मज्ञानस्य मोक्षसाधनत्वभ्रमसंभवान्मुक्तिसाधनज्ञानाय भिन्नात्मविचाररूपशास्त्रान्तरश्रवणेऽपि कदाचित् प्रवर्तेतेत्यद्वितीयार्थश्रवणादिविधिरयम्। इहात्मशब्दस्य [२]‘**इदं सर्वं यदयमात्मा**’ [३]‘**आत्मनि**’ [४]‘**विज्ञाते सर्वमिदं विज्ञातम्**’ इत्यादि प्रकरणपर्यालोचनया अद्वितीयात्मपरत्वात्।

न हि वस्तुतत्साधनान्तरप्राप्तावेव नियमविधिरिति नियमः। किन्तु यत्र विधित्सितस्य साधनस्य पाक्षिक्यप्राप्तिर्विधिना निवारयितुं न शक्यते तत्र नियमः। तच्चासाधनस्यापि साधनत्वेन संभाव्यमानस्य पक्षे प्राप्त्या भवतीति।

अपरे तु - गुरुमुखानधीनस्वतन्त्रविचारो व्यावर्त्य इति नियमविधिरिति। ‘**श्रोतव्य**’ इति श्रुतैरेव वेदान्तैरात्मा ज्ञातव्य इति श्रुतवेदान्तानां नियम्यमानत्वादितिहासपुराणाद्यनुमितं वेदान्तवाक्यमेव व्यावर्त्यमस्त्विति मतान्तरम्। [५]‘**श्रोतव्य श्रुतिवाक्येभ्य**’ इति स्मृत्यनुसारात् पुराणवाक्यमेव स्वातन्त्र्येण व्यावर्त्यमस्त्वित्यपरं मतम्। रण्डागीतादिकं व्यावर्त्यमिति केचित्। ‘**श्रोतव्य**’ इति विचारितवेदान्तैरेव ‘**ज्ञातव्य**’ इति वेदान्तांशे नियमः। मनःप्रमाणं व्यावर्त्यम्।

एवञ्च [६]निदिध्यासानन्तरं ब्रह्मसाक्षात्कारार्थिनो मनःप्रमाणसद्भावबुद्ध्या अद्वैतवाक्यप्रतिसन्धानाप्रवृत्त्या तत्पाक्षिकताप्रसङ्गे [७]तत्पुराणार्थनियमविधिना पुनस्तत्प्रतिसन्धाने प्रवृत्तिर्भवेदिति नियमविधिबलाच्चान्यत्र प्रमाणस्यापि मनसो निर्विशेषात्मसाक्षात्कारे न जनकत्वमिति मतान्तरम्।

---

[१] समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः।
जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः।।(मुण्डक.३.१.२)(श्वे.उ.३.४.७)

[२] इदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमानि भूतानि **इदं सर्वं यदयमात्मा**। (बृ.उ.६.५.७; ४.४.६)

[३] बृ.उ.६.५.६

[४] शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ।
कस्मिन्नु भगवो **विज्ञाते सर्वमिदं विज्ञातं** भवतीति।। (मुण्डक.१.१.३)

[५] **श्रोतव्य श्रुतिवाक्येभ्यः** मन्तव्यश्चोपपत्तिभिः। मत्वा च सततं ध्येयः एते दर्शनहेतवः।।
(विद्यारण्यकृते विवरणप्रमेयसंग्रहे)

[६] क - ख - निदिध्यासनानन्तरम्

[७] क - तत्पुराणार्थि; ख - तत्पुराणार्थ

## १. शाब्दप्रत्यक्षभङ्गः

केचित्तु - ब्रह्मज्ञानार्थं वेदान्तश्रवणे प्रवृत्तस्य चिकित्साज्ञानार्थं चरकसुश्रुतादिश्रवणे प्रवृत्तस्येव मध्ये मध्ये व्यापारान्तरेऽपि प्रवृत्तिः प्रसज्यत इति तन्निवृत्त्यर्थं श्रोतव्य इति [१]परिसंख्याविधिरिति वदन्ति।

एवं श्रवणविधिक्लृप्तेऽपि[२] विवदन्ते। तत्रापूर्वविधिपक्षे केचिन्माध्वाः श्रवणविधेः मोक्षं फलमाहुः। अपरे माध्वा मायिनश्च ब्रह्मसाक्षात्कारम्। नियमविधिपक्षे केचित् शाब्दापरोक्षं ज्ञानं फलमित्याहुः।

अपरे तु - शब्दस्यापरोक्षज्ञानजनकत्वमनङ्गीकृत्य साक्षात्कारकरणमनः सहकारितया मानससाक्षात्कार एव फलमित्याहुः। अपरे त्वपरोक्षज्ञानगताविद्यानिवर्तन-शक्तिः फलमित्याहुः। केचित्त्वविद्यानिवर्तको मानससाक्षात्कारः निर्विचिकित्सपरोक्षनिर्णयः फलमित्याहुः।

इतरे तु - तात्पर्यनिर्णयानुकूलन्यायविचारात्मकचेतोवृत्तिविशेषः श्रवणम्। तस्य च न ब्रह्मणि परोक्षमपरोक्षज्ञानं वा फलम्। किन्तु तात्पर्यनिर्णयद्वारा तात्पर्यभ्रमादिरूप-पुरुषापराधनिवृत्तिः अतस्तादर्थ्येनैव नियमविधिः।

न च तदुभयान्यतरद्वारा ब्रह्मज्ञानं फलमस्त्विति वाच्यम्। तात्त्पर्यनिश्चयस्य शाब्दज्ञानाहेतुत्वात् प्रतिबन्धकाभावस्य क्वाप्यहेतुत्वात् [३]द्वारत्वानुपपत्तिः। द्रष्टव्य इति दर्शनार्हत्वेन स्तुतिमात्रं न तु फलमित्याहुः। एतत्प्राप्तावप्यपरोक्षवस्तुविषयक-प्रमाणत्वावच्छेदेनापरोक्षवस्तुत्वस्य[४] अविचारमात्रे विचार्यनिर्णयहेतुत्वस्य च क्लृप्तत्वाद्विचारितवेदान्तानां ब्रह्मापरोक्षे प्राप्तिः[५] इत्येके।

अन्ये तु - यद्यपि शब्दस्य स्वभावतो नापरोक्षज्ञानजनकत्वमथापि विधुर-परिभावितकामिनीसाक्षात्कारस्थले भावनाप्रचयसहकृतज्ञानकारणत्वावच्छेदेनापरोक्षज्ञान-

---

[१] उभयस्य युगपत् प्राप्तौ इतरव्यावृत्तिपरः परिसंख्याविधिरिति। (वि.क्लेश.७)

[२] क - ख - फलेऽपि

[३] क - ख - द्वारत्वानुपपत्तेः।

[४] क - ख - हेतुत्वस्य; घ -वस्तुत्वस्य

[५] क - ब्रह्मापरोक्षप्राप्तिः; ख - ब्रह्मापरोक्षे प्राप्तिः

जनकत्वस्य क्लृप्तत्वात् [1]ब्रह्मसाक्षात्कारप्राप्तिः। युक्तञ्चैतत्। स्वतोऽसमर्थस्यापीन्द्रियस्य संस्कारसाहित्यात् [2]सत्तासाक्षात्कारहेतुत्वदर्शनात् [3]इत्यर्थः[4]।

आगमाचार्योपदेशजमात्मज्ञानमेव श्रवणम्। तच्च ज्ञानत्वादविधेयम्। अस्तु वा तात्पर्यनिर्णयानुकूलविचारश्रवणम्। तथापि तस्य तात्पर्यनिर्णयद्वारा तद्भ्रमसंशयरूपप्रतिबन्धकनिरास एव फलम्। न ब्रह्मावगमः। तत्र च लोकत एव तत्प्राप्तं साधनान्तरञ्च न प्राप्तमिति न तत्र कोऽपि विधिः। एवञ्च श्रवणविध्यभावात् कर्मकाण्डविचारवत् ब्रह्मकाण्डविचारोप्यर्थावबोधपर्यन्ताध्ययनविध्याक्षिप्त इति केचिदाहुः।

तत्र प्रथमपक्षस्तावदनुपपन्नः। तथा हि श्रवणविधौ तावत् गुरुशाखयोर्नान्तर्भावः। '**श्रोतव्य**' [5]इत्येतद्वाचकपदाभावाच्छ्रोत्रग्राह्यत्वार्थकेन श्रोतव्यपदेन शब्दादन्यस्यात्मनः श्रोत्रग्राह्यत्वासंभावाच्छब्दग्राह्यत्वमात्रमेव हि विवक्ष्यते। युज्यते हि श्रोत्रजन्यज्ञानवाचिना शृणोतिना तद्योग्यशब्दजन्यज्ञानलक्षणा।

यच्च विचारविध्यात्मकस्वाभिमतमननविधिसमर्थनम्। तत्र 'ब्रह्मज्ञानाय वेदविचारः कर्तव्य' इति वचनव्यक्तिरनुपपन्ना। '**आत्मा मन्तव्य**' इति हि विधिः। तत्रात्मविचारः कर्तव्य इति वचनव्यक्तिस्सिध्यति, न तु वेदविचारः कर्तव्य इति। अर्थात्तु वेदान्तविचारस्सिद्ध्यति तस्यात्मप्रमाणत्वात्।

यदि च वेदस्यात्मप्रमाणत्वाद्वेदविचारसिद्धिः तदा वाक्यस्यात्मनि प्रामाण्यात् वाक्यविचारस्सिद्ध्येत्। तथा च पूर्वभागवल्लौकिकवाक्यस्यापि विचार्यत्वप्रसङ्गः। सर्ववेदानामाराध्यब्रह्मपरत्वेन ब्रह्मणि प्रमाणत्वविवक्षायान्न विधेयता, रागादेव प्रवृत्तेः।

'**श्रोतव्य**' इत्यत्र श्रुतिपदेनैक्यधातूत्पन्नत्वरूपसाधर्म्यलक्षणस्य भ्रमनिदानस्य सत्वात् चाकचक्यसाधर्म्यनिबन्धनभ्रम इव तद्गोचरभ्रमे न विस्मयामहे। '**मन्तव्य**' इत्यत्र तु तादृशनिबन्धनादर्शनात् तद्गोचरभ्रमः कथं संजात इति भृशं विस्मयामहे। किञ्च मनने

[1] क - ख - ब्रह्मसाक्षात्कारे प्राप्तिः

[2] क - ख - तत्तत्साक्षात्कार

[3] क - ख - इत्याहुः; घ - इत्यर्थः

[4] यो गुणो यदीन्द्रियग्राह्यस्तन्निष्ठाजातिरपि तदिन्द्रियग्राह्या इति हि नैयायिकाः।

[5] क - ख - इत्यत्र तद्वाचक ; घ - इत्येतद्वाचक

विहिते श्रवणस्य तादर्थ्यं लोकत एव पक्षे प्राप्तमिति तद्विधिर्नियमविधिरेव स्यात्, न त्वपूर्वविधिः।

किञ्च पूर्वभागार्थस्य मन्तव्यत्ववन्निदिध्यासितव्यत्वमपि स्यात्। न चेष्टापत्तिः। इतोऽतिरिक्ताशनिपातासिद्धेः। तेषामतिबाहुल्येन तद्ध्यानस्य ब्रह्मध्यानस्य चानवकाश-प्रसङ्गाद्विद्याभेदविरहप्रसङ्गाच्च सर्वविषयत्वहेत्वभावो मननेऽपि तुल्यः। यदि श्रवणसमानविषयत्वं मननस्य वाच्यं तर्हि तन्निदिध्यासनेऽपि।

अपि चैवमेकदेशेऽनुवादः एकदेशे विधिरिति स्यात्। तच्चायुक्तम्। अत एव [१]'**तत्प्रकृत्यर्थं यथान्येऽनारभ्यवादा**' इत्यधिकरणे पर्णताया जुहूद्वारेणाधानस्याग्निद्वारा क्रत्वर्थत्वे पूर्वपक्षिते [२]'**वसन्ते ब्राह्मणोऽग्निमादधीत**' इत्याधाने वसन्तविधेः सोमाङ्गे अनुवादत्वम्। तत्र वसन्तविधेरन्यत्र विधित्वं दर्शपूर्णमासयोश्च वसन्तानुष्ठानेऽनुवादत्वं कालान्तरे प्रयोगे विधित्वमिति विध्यनुवादवैरूप्यप्रसङ्गात् तन्निरासः कृतः।

अत एव च [३]'**अनुप्रसर्पिषु सामान्यात्**' इत्यधिकरणे दर्शपेयेराजसूयान्तर्गते क्रतौ राजाधिकारिके '**दशदशैकैकचमसमनुप्रसर्पन्ति**' इत्यत्र चमसभक्षकतृविधिः[४]। '**शतं ब्राह्मणाः पिबन्ति**' इत्यनुवादः। अन्यथा स्वामिचमसे विधिरन्यत्रानुवाद इति वैरूप्यप्रसङ्गः। तस्माद्राज्ञोऽपि चमसभक्ष इति पूर्वपक्षिते '**शतं ब्राह्मणा**' इत्यत्र लक्षणाप्रसङ्गाद्विधिरेव। तथा च वचनाद्यजमानबाधः प्राकृतभक्षकार्ये संख्याविशिष्ट-कर्तृविशिष्टभक्षणान्तरविधेर्न वैरूप्यमिति विशिष्टविधिस्वीकारेण राद्धान्त उक्तः।

यच्च मन्यसे ब्रह्मविचारस्यापि वेदविचारत्वेन वेषेण ब्रह्मज्ञानहेतुत्वाप्राप्तेः तदवच्छिन्नविधिरिति। तत्र किं सर्ववेदविचारत्वं विवक्षितमुत वेदविचारत्वमेव। नाद्यः, सर्वत्वबोधकपदाभावात्। किञ्च किं सर्वत्वं वेदविशेषणं विचारविशेषणं वा। नाद्यः, प्रामाण्यविचारादेव विधेयत्वप्रसङ्गात्। न द्वितीयः, सर्वविचाराणां यौगपद्यासंभवेनातीतानां

[१] मी.सू.३.६.१४.

[२] **वसन्ते ब्राह्मणोऽग्निमादधीत**। वसन्तो वै ब्राह्मणस्यर्तुः। स्व एवैनमृतावाधाय। ब्रह्मवर्चसी भवति। मुखं वा एतदृतूनाम्। (तै.ब्रा.१.१.२.६)

[३] मी.सू.३.५.५२.

[४] फलचमसो नैमित्तिको भक्षविकारः श्रुतिसंयोगात्। (मी.सू.३.५.४७)

कारणत्वायोगान्न सर्वत्वं कारणतावच्छेदकम्। अतीतानामदृष्टद्वारकत्वे च कर्मविचारस्य मननशब्दार्थत्वकल्पना व्यर्था। ब्रह्मविचारेणैवातीतेनापूर्वविधित्वोपपादनसंभवात्।

नापि द्वितीयः, एकेनैव विचारेण चारितार्थ्यात्। न हि ज्योतिष्टोमस्य विधाने सर्वव्यक्तय उपसंहार्याः। उक्तानुमानदृष्टान्तश्च विषमः पक्षतावच्छेदकावच्छेदेन साध्यसिद्धिपक्षे तादृशोद्देश्यप्रतीतिजननसामर्थ्यहेतोरस्त्येव। इह तु तदुद्देश्यप्रतीतिजनन-समर्थं किमपि वाक्यं न पश्यामः। राजसूयदृष्टान्तश्च विषमः।

इदं हि तदधिकरणशरीरम्। राजसूये बहव इष्टिपशुसोमयागास्सर्वे फलवन्तः समप्राधानाः। तत्राभिषेचनीयो नाम सोमयागः। तत्सन्निधौ विदेवनादयः समाम्नाताः। ते किं सर्वस्य राजसूयस्याङ्गमुताभिषेचनीयस्यैवेति। यदि सन्निधिर्बलीयान् [1]अभिषेचनीयाङ्गम्, अथ प्रकरणतो राजसूयस्येति। तत्र सन्निधिविशेषादभिषेचनीयाङ्गत्वे प्राप्तेऽभिधीयते प्रकरणाविशेषात् सर्वार्थता। नन्वभिषेचनीयस्याप्यस्त्येव फलवत्वात् प्रकरणम्। यदप्यस्ति, तदप्यन्येषामस्तीति तादर्थ्यमपि युक्तम्। यदि परमविशेषतः सर्वेषामाकाङ्क्षायामपि यावत् सन्निधिविशेषादभिषेचनीयस्य विशेषत आकाङ्क्षां कल्पयित्वा [2]तादवस्थ्यं स्यात्। ततश्च विप्रकर्षः सर्वार्थता हि क्लृप्ताकाङ्क्षातस्सुखं गम्यते। अभिषेचनीयस्य विशेषत आकाङ्क्षा तु कल्पनीयेति।

इह सन्निधेः [3]प्रकरणबलवत्वं व्युत्पाद्यते, न तु तत्राकारान्तरेण। आकाङ्क्षा-निवृत्तावपि आकारान्तरेणाकाङ्क्षा व्युत्पाद्या। यदपि शास्त्रदीपिकायामुक्तम्। अपि च नास्त्यभिषेचनीयस्य प्रकरणं प्राकृतेनेत्थंभावेन कथमाकाङ्क्षापूरणात् ।

नन्वन्येषामपीष्टिपशुसोमानां विकृतित्वान्नास्त्येव प्रकरणम्। सत्यं प्रातिस्विकरूपेण नास्ति। राजसूयात्मना त्वस्त्येव। कथं श्रुत्यादिविहिताङ्ग सन्दंशात्तद्वशेन निवृत्ताप्याकाङ्क्षा पुनरुत्थाप्यते। पवित्रादारभ्य क्षत्रस्य धृतिं यावदङ्गविधिषु प्रायेण '**राजसूयाय ह्येनानुत्पुनाति। राजसूयेनेजानस्सर्वमायुरेति**' इति राजसूयपरामर्शात्तावन्तं देशमनुवृतो राजसूयकथंभावः शक्नोति। तन्मध्यपतितानि विदेवनादीनि ग्रहीतुमिति।

[1] क - ख - अभिषेचनीयाङ्गत्वप्रकरणं ततो

[2] क - ख - तादर्थ्यम्

[3] क - प्रकरणस्य बलवत्वम्; ख - प्रकरणं च बलवत्वम्

## १. शाब्दप्रत्यक्षभङ्गः

तत्रापि राजसूये प्रकरणाभावमाशङ्क्य सन्दंशन्यायात्तत्समर्थने तात्पर्यं [१]नेत्याकारान्तरेण धर्मप्राप्तावप्याकारान्तरेणाप्राप्तौ[२] आकाङ्क्षाप्रतिपादने तात्पर्यम्। तथा सति किमुत्थापिताकाङ्क्षोपयोगित्वेनाकारान्तरेणोपन्यासः किं वा स्वारसिकाकाङ्क्षा प्रयोजकत्वेन।

नाद्यः - आतिदेशिकाङ्गान्वयेन निराकाङ्क्षत्वेऽप्यौपदेशिकाङ्गान्वयार्थं तेनैवाकारेणाकाङ्क्षोत्थापनस्य बहुशो दर्शनात्। न द्वितीयः। सन्दंशवशेन निवृत्ताप्याकाङ्क्षा पुनरुत्थाप्यत इत्युक्तिविरोधाद्राजसूयात्मना त्वस्त्येवेति तु विदेवनादीनां समुदायान्वयरूपसिद्धान्तसिध्यर्थं समुदायाकाङ्क्षाप्रतिपादनपरम्। अन्यथा सोमाङ्गत्वादिना प्राप्तावप्याधानत्वेन प्राप्तेः तथैव विधिरिति विध्यनुवादवैरूप्याभावात् तत्प्रकृत्यर्थाद्यधिकरणोच्छेदः। किञ्च, वेदान्तविचारांशे लोकत एव प्रवृत्तिसिद्धेस्तदंशेन विधेः प्रयोजकत्वम्। किन्तु पूर्वभागविचारांश एवेति विधेर्विधेयैकदेशप्रयोजकत्वमस्वरस-मापद्येत। एतेन यद्वेत्यादिकमपि दत्तोत्तरम्। एतेनैवापरे त्वित्युक्तपक्षोऽपि दत्तोत्तरः।

किञ्च 'श्रवणस्य दृष्टं मननमेव द्वारम्' इति वदता स्वयमेव श्रवणविध्यसंभवे हेतुरुपन्यस्तः। मोक्षार्थताया अप्राप्तत्वात् [३]तादर्थ्यविधिसंभवे मननस्य ध्येयेतरगुण-विषयत्वकल्पनं व्यर्थम्। तत्कल्पनं हि विवक्षिताधिकारिणस्तद्विधिं विनापि तदनुष्ठान-सिद्धेर्विधिवैयर्थ्यात्। तथा च श्रवणविध्यसंभवो दुर्वारः। आपातदर्शनादपि मननसंभवात् तद्व्यावृत्त्यर्थत्वेनापूर्वविधिता।

किञ्च '**आत्मा श्रोतव्य**' इत्यत्र सकलगुणविशिष्ट आत्मा ज्ञातव्य इत्यर्थो वाच्यः। आप्नोतीति व्युत्पत्त्या सकलगुणवैशिष्ट्यविवक्षासंभवात् तथैव मन्तव्य इत्यत्रापि। अन्यथा श्रवणमननयोः सकलगुणविषयत्वाभावात्[४]। एवञ्चास्यैवात्मशब्दस्य निदिध्यासितव्यो द्रष्टव्य इत्यत्राप्यन्वयात् तस्य तत्रार्थान्तरकल्पनानुपपत्तेः सकलगुण-विशिष्टदर्शननिदिध्यासनयोर्विधिरिति वाच्यम्। ततश्च विद्याभेदोच्छेदः। तादर्थ्यस्य लोकत एव प्राप्तत्वाच्छ्रवणमननयोरविधेयत्वञ्च। दर्शनस्याविधेयत्वादेव न द्रष्टव्य इति विधिः। तत्साधनविधौ च ध्यानविधिरेव स्यात्।

---

[१] क - ख - नत्वाकारान्तरेण; घ - नेत्याकारान्तरेण

[२] क - ख - घ - प्राप्तेः

[३] क - ख - तादर्थ्येन विधिसंभवे; घ - तादर्थ्यविधिसंभवे

[४] क - ख -विषयत्वालाभात्; घ - विषयत्वाभावात्

यदुक्तं [१]'**एतावदरे खल्वमृतत्वम्**' इत्यादिना चतुर्णां मोक्षसाधनत्वेन विधानमिति, तन्न। प्रयोजकत्वमात्रेण तत्र सामानाधिकरण्योपपत्तेः लाङ्गलञ्जीवनमितिवत्। न हि लाङ्गलं साक्षाज्जीवनहेतुः। अपि तु कर्षणादिबहुव्यापारव्यवधानेनैव। किञ्च एतावदिति वाक्यं न नियोज्यसमर्पकं [२]किमिति पदाभावात्। अपि तु किमिति[३] पदाभावात् '**अरे खलु**' इति प्रयोगाच्चार्थवादः। ततश्च यत्रैव नियोज्याकाङ्क्षा तत्रैव [४]कमिपदं कल्पयितुमुचितमिति। '**द्रष्टव्यो निदिध्यासितव्य**' इत्यत्रैव तत्कल्प्येत। न तु '**श्रोतव्यो मन्तव्य**' इत्यनयोस्तयोर्ध्यानफलकत्वस्य लोकत एवावगमेन निराकाङ्क्षत्वात् निदिध्यासने [५]मोक्षार्थविहिते लोकसिद्धतत्साधनभावयोः श्रवणमननयोर्लोकत एव प्रवृत्त्युपपत्तौ तत्राप्यकस्मादेव गुरुभूतविधिव्यापारकल्पनानुपपत्तेः। यदुक्तं निदिध्यासनस्य दृष्टपरमात्मदर्शनद्वारत्वं कल्प्यत इति तन्न, स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः। [६]'**तस्मिन् दृष्टे परावरे**' '**भिद्यते हृदयग्रन्थिः**' इत्युभयत्रापि तुल्यवन्मोक्षसाधनत्वप्रतिपादनात् दृष्टद्वारत्वसंभवे तद्ग्राह्यत्वमिति[७] चेन्न, त्वयैव तदसंभवस्योक्तत्वात्। ध्यानस्याव्यक्त-स्वभावब्रह्मसाक्षात्कारहेतुताया लोकसिद्धत्वाभावेऽपीति ह्यवोचः। [८]तज्जन्यस्यादृष्टत्वेऽपि तत्स्वरूपं दृष्टमिति चेन्न। यत्र तज्जन्यत्वं तत्फलजननस्वरूपयोग्यत्वं च दृश्यते तत्र ह्येतन्न्यायप्रवृत्तिः। दृष्टमेवावहननस्य तुषविमोकसाधनत्वं तुषविमोकश्च योग्य एव। पुरोडाशादिष्वन्यत्र न तन्न्यायप्रवृत्तिसंभवः। अदृष्टकल्पनाभीत्या दृष्टद्वारं कल्पयतस्तदर्थं पुनरदृष्टकल्पनापातात्। दृष्टद्वारकल्पनादशायां न तदुपस्थितिरिति चेन्न। दृष्टं हि द्वारत्वेन कल्प्यते न स्वरूपेण। तथा कल्पनायाञ्च तज्जनकादृष्टोपस्थितिः अनिवार्या। तस्मात् ध्यानभक्तिप्रत्यक्षात्मकमेकमेव ज्ञानं मोक्षसाधनमित्यनुगृह्णन्ति वेदान्तरहस्यवेदिनः।

---

[१] बृ.उ.६.५.१५.

[२] क - ख - कमिपदाभावात्

[३] क - ख - कमिति

[४] क - ख - किमिपदम्

[५] क - ख - मोक्षार्थं विहिते; घ - मोक्षार्थविहिते

[६] **भिद्यते हृदयग्रन्थिश्**छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि **तस्मिन् दृष्टे परावरे**।। (मुण्डक.२.२.९)

[७] क - ख - घ - तद्ग्राह्यमिति

[८] क - ख - तज्जन्यत्वस्यादृष्टत्वेऽपि

## १. शाब्दप्रत्यक्षभङ्गः

तथा हि न तावद्द्रष्टव्य इति दृशिधातुमुख्यार्थस्य चाक्षुषज्ञानस्य विधिः। तस्य विध्यनर्हत्वात् ब्रह्मणस्तदयोग्यत्वाच्च। नापि प्रत्यक्षलक्षणया मानसापरोक्षस्य विधिः। तस्यापि विध्यनर्हत्वादेव। न च दर्शनफलोद्देशेन ध्यानविधिः। दर्शनस्यापुरुषार्थत्वात् कमिपदसाध्यसाधनप्रतीत्योरसिद्धेश्च। [१]‘**अमृतत्वस्य तु नाशास्ति वित्तेन**’ [२]‘**एतावदरे खल्वमृतत्वम्**’ इति प्रकरणपर्यालोचनया परमपुरुषार्थभूतस्यामृतत्वस्यैवेह साध्यतया प्रतीयमानस्य फलतयामृतत्वकामस्यैवेह नियोज्यतया कल्पनस्य उचितत्वात्।

एवञ्च ‘**द्रष्टव्य**’ इति दर्शनसमानाकारत्वपरः तस्य विशेष्याकाङ्क्षायां सन्निहितं निदिध्यासनमेव विशेष्यार्हमिति। ‘**द्रष्टव्यो निदिध्यासितव्य**’ इति दर्शनसमानाकारता विशिष्टध्यानविधिः।

दहरादिविद्यानामपि मोक्षसाधनतया विधानात्। ततो भिन्नस्यैव दर्शनसमानाकार-ध्यानस्य विधाने गुरुलघुविकल्पप्रसङ्गात् सर्वासामपि विद्यानां दर्शनसमानाकारध्यान-रूपतासंभवेन ग्रहणाग्रहणयोरिव शक्ताशक्तव्यवस्थितविकल्पाश्रयणस्यान्याय्यत्वाच्च दहरादिविद्यानां निदिध्यासनरूपतावगम्यते। तव्यप्रत्ययद्वयस्वारस्यानुरोधे तु ध्यानदर्शनयोः गुरुलघुभूतयोर्विकल्पप्रसङ्गात् तयोः पृथग्विधानासंभवात् दहरादिविद्यासु गुणद्वयविधी स्याताम्। प्रत्यक्षसमानाकारश्च वैशद्यम् कामिनिभावनायां चक्षुषा पश्यामीति चाक्षुषत्वारोपो यादृशसादृश्यदर्शनेन तदेव सादृश्यं वैशद्यम्।

ननु मानसे कामिनि भावनाजन्यप्रत्यक्ष एव वैशद्यम्। तत्रैव चाक्षुषत्वारोप इति चेन्न, सन्निकर्षासंभवेन मानससाक्षात्कारासंभवात्। न च [३]उपनयतः सन्निकर्षः समानविषये ज्ञानप्रत्यासत्तिघटितप्रत्यक्षसामग्र्यास्तदघटितज्ञानसामग्रीमात्रस्य बलवत्वात्। अन्यथा स्मृतिसन्तानात्मकध्यानानुपपत्तिः। द्वितीयादिज्ञानानां प्रत्यक्षत्वापातादनुमितिशाब्दज्ञानादि स्थले तत्प्रसङ्गश्च। प्रत्यभिज्ञायां तु समानविशेष्ये बलवत्याः [४]लौकिकसामग्र्या प्रतिबन्धात् स्मृतिसामग्री नेति ज्ञानप्रत्यासत्तिघटितसामग्र्या तत्ताप्रत्यक्षमुपपद्यते।

---

[१] सा होवाच मैत्रेयी, यन्नु म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्, कथं तेनामृता स्यामिति। नेति होवाच याज्ञवल्क्यः, यथैवोपकरणवतां जीवितम्। तथैव ते जीवितं स्यात्। **अमृतत्वस्य तु नाशास्ति वित्तेनेति**। (बृ.उ.४.४.२)

[२] बृ.उ.६.५.१५.

[३] क - ख - उपनयः

[४] क - ख - लौकिकप्रत्यक्षसामग्र्या; घ - लौकिकसामग्र्या

भक्तिरूपत्वञ्च [१]'**यमेवैष वृणुते तेन लभ्य**' इति वाक्येन प्रियतम एव हि वरणीयो भवति। 'यस्यायं निरतिशयप्रियः स एवास्य प्रियतमो भवती'ति न्यायसहकृतेन [२]'**भक्त्या लभ्यस्त्वनन्यया**' [३]'**प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय**' इत्यादि वचनोपबृंहितेनावगम्यते। यमित्यनेन वरणीयताहेतुगुणपरामर्शात्। तत्रापि गुरुलघु-विकल्पानुपपत्तेः भक्त्यैकलभ्यत्वानुपपत्तेश्च ध्यानस्यैव भक्तिरूपत्वसिद्धेश्च।

ननु भगवद्ध्यानस्य विषयसारस्येन सुखरूपत्वात्तत्रापि रागत एव प्रवृत्तेर्न विधिर्युक्त इति चेन्न। क्षीरपाने रागतः प्रवृत्तावपि पित्तरोगं निराचिकीर्षोः तन्निवृत्तिसाधनता-ज्ञानं विना तादर्थ्येन प्रवृत्तिवन्निदिध्यासनस्य मोक्षसाधताज्ञानं विना मुमुक्षोः मोक्षार्थितया तत्र नियतप्रवृत्त्यनुपपत्तेः।

तत्र[४] [५]विषयानुभवप्रयोज्याया भावनाया एव प्रचयमाह - आत्म्येन तादृश-रागसहकाराद्वैशद्यं दृष्टम्। इह कथं तदुपपत्तिः पूर्वविशदानुभवासिद्धेरिति चेन्न, उपासनप्रीतभगवत्प्रसादादेव वैशद्योपपत्तेः। अत एव

[६]'**तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।**
**ददामि बुद्धियोगं तं येन मामुपयान्ति त**' इति भगवतैवानुगृहीतम्।

ननु विहितकर्माङ्गतया विहिताचमनादिप्राप्त्यर्थो विधिरस्तु। प्राप्तेऽप्यर्थे प्रयोजनवशाद्विधिदर्शनात्। तथाहि '**अथातोऽग्निमग्निष्टोमेनानुयजति**' इत्यग्निष्टोमाङ्ग-तयाग्निनामकस्थण्डिलविशेषं विधायाम्नातस्य [७]'**तमुक्थ्येन**' '**तद्विरात्रेण**' इत्यादि

---

[१] नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन।
**यमेवैष वृणुते तेन लभ्य**स्तस्यैष आत्मा विवृणुते तनूँ स्वाम्।। (कठ.उ.१.२.२३)

[२] पुरुषः सः परः पार्थ **भक्त्या लभ्यस्त्वनन्यया**।
यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम्।। (महा.भीष्म.३२.२२)(भ.गी.८.२२)

[३] तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते।
**प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः**।। (महा.भीष्म.३१.१७)(भ.गी.७.१७)

[४] क - ख - ननु

[५] क - ख - विशदानुभव

[६] महा.भीष्म.४३.१०; भ.गी.१०.१०.

[७] यद्यग्निष्टोमः सोमः परस्तात् स्यादुक्थ्यं कुर्वीत। यद्युक्थ्यः षोडशिनम्। यदि षोडश्यतिरात्रम्। यद्यतिरात्रो द्विरात्रम्। यदि द्विरात्रस्त्रिरात्रम्। यदि त्रिरात्र एकस्तोत्रमेव। (आप.श्रौ.सू.१४.१९.८)

## १. शाब्दप्रत्यक्षभङ्गः

वाक्यस्योक्थ्यादिष्वतिदेशतः प्राप्तिसंभवेऽप्यग्निविधायकत्वं प्रयोजनवशादुक्तम्। अतिदेशतः प्राप्तावग्न्याश्रितानां फलार्थाकृतिविशेषरूपगुणानामनङ्गत्वादप्राप्तेः। तत्राप्यग्निविधौ तूपदेशादेव प्राप्तेरिति।

उच्यते - चोदकतः प्रागेव विधेः शीघ्रप्रवृत्तेः, प्रवृत्तस्य चोदकत एव विधित्सितार्थस्य प्राप्तिसंभवे किमर्थो विधिरिति प्रयोजनाकाङ्क्षायां नियमपरिसख्ययोरिव अत्रापीदं प्रयोजनमित्यवगम्यते, न तु प्रयोजनबलाद्विधिः कल्प्यते। तथा सत्याचमनादि-सिद्धय एव '**कृषिमत् कृषस्व**' इत्यादौ कृष्यादेरपि विधिप्रसङ्गात्। तथा चात्र स्वाध्यायाध्ययनापातप्रतीत्यैव परमपुरुषार्थतत्साधननिर्णिनिषया विचारकर्तव्यताबुद्धौ सञ्जातायामर्थनिर्णयार्थं न्यायापेक्षया विलम्बितमलब्धाधिकारञ्च। श्रोतव्य इति वाक्यं कुतो विदध्यात्। विधेरेवासिद्धौ कुतः प्रयोजनाकाङ्क्षा, कुतस्तमां विहितकर्माङ्गतया विहिताचमनादिप्राप्तिः। यदि विचारदशायामाचमनाद्यनुष्ठानस्य शिष्टैः प्रवर्त्यमानस्य किन्निबन्धनमिति [1]प्रसज्येत तदा तदेव तन्निबन्धनमित्युत्तरम्, कथमन्यथा प्रमाणभूत आचार्यो 'दर्भपवित्रपाणिश्शुचाववकाशे प्राङ्मुख उपविश्य सूत्राणि प्रणयति स्म' इत्यादिभाष्योपपत्तिः। न हीदं वाक्यं तद्विषयं, गुरूपसदनविधानाच्च शौचं सिद्धम्।

किञ्चाशुचिना मनसापि वेदोच्चारणस्य निषिद्धत्वात् कथं तद्विषयविचारे शौचाप्राप्तिः। निदिध्यासनं न ज्ञानं विधेयत्वात्। अतः कथं तत्र ज्ञानधर्मवैशद्यस्योपपत्तिः। मैवम्। होमादौ क्रियात्वयत्नसाध्यत्वयोरिव निदिध्यासनेऽपि ज्ञानत्वयत्नसाध्यत्वयोः दुरपह्नवत्वात्। कस्यचिज्ज्ञानस्य यत्नसाध्यत्वस्य कस्यचिज्ज्ञानस्यायत्नसाध्यत्वस्य चानुभवे सति, यत्नसाध्यत्वाज्ज्ञानत्वनिरासे तदभावाद्वा, तन्निरासोऽन्यत्र कथं न स्यात्। तस्मात् ज्ञानमेव ध्यानं विधेयञ्चेति। अन्यथा स्वत्यागात्मकबुद्धिविशेषस्य यागस्याप्यविधेयत्वप्रसङ्गात्।

माध्वो - नियमविधिरप्यनुपपन्नः[2] शब्दन्यायाभासत्वज्ञाने तत एव ततो निवृत्त्या विधिवैयर्थ्यात्, तदज्ञानेन च विधिनापि निवृत्त्यसंभवात्।

मायिनामपूर्वविधिस्तु नियमवादिना निरस्त एव। निदिध्यासनविधाने श्रवणमननयो रागादेव प्रवृत्त्युपपत्तेर्न विधिगौरवं युक्तमित्युक्तयुक्तेश्च। नियमपरिसंख्येऽप्यनुपपन्ने

---

[1] क - ख - पृच्छ्येत

[2] इतः परं 'क' कोशे अधिकः पाठः - न्यायानुसन्धानस्याप्रामाणत्वात् तत्सहकारिकमानं प्रवृत्त्यापि

न्यायानुसन्धानस्याप्रमाणत्वात् तत्सहकारिकामनाप्रवृत्त्या च ज्ञानहेतुताया अप्राप्तेः। तत्सहकृतशब्दस्यापि परोक्षनिर्णयहेतुत्वमेव, न त्वपरोक्षज्ञानजनकत्वम्। तत्र तस्यायोग्यत्वादत्रापि शाब्दापरोक्ष्योपपादने मुष्टामुष्ट्या चरन्ति।।

केचिदाहुः - आत्मा तावत् स्वतोऽपरोक्षः। [१]'**यत्साक्षादपरोक्षात्**' इति श्रुतेः। घटादिकं चापरोक्षात्मनि [२]अध्यस्तमिति। स एव तदपरोक्षता, तदपरोक्षत्वानुभवस्य तत् सत्तानुभवस्येव तदधिष्ठानात्मगोचरत्वात्।

न च घटादेर्जडस्य सर्वदा अपरोक्षत्वप्रसङ्ग इति वाच्यम्। प्रमातृचैतन्य-तादात्म्यस्य सदासत्वात्। अत एव देवदत्तस्य घटापरोक्षतादशायां तं प्रति रसगुरुत्वादिर्नापरोक्षः। चाक्षुषवृत्तेः रसाद्यनभिव्यञ्जकतयावृतस्य रसचैतन्यस्य प्रमातृ-चैतन्यात् भिन्नत्वात् सुखादिकञ्चानावृतसाक्ष्याध्यासाद्वृत्तिं विनैवाभिव्यक्तमिति तदपरोक्षधर्मादिकं साक्ष्यध्यस्तमप्यनुद्भूतत्वादप्रत्यक्षम्। तस्माद्यज्जडमुद्भूतं तं यदा यदभिन्नचैतन्याभिन्नं तत्तदा तस्यापरोक्षतादात्म्याद्भवत्यपरोक्षं ज्ञानापरोक्षत्वञ्च चैतन्यस्य स्वस्मिन् स्वरूपेणानात्मनि त्वपरोक्षार्थविषयत्वं वृत्तेस्त्वपरोक्षार्थविषयत्वमेव सर्वत्र न चेदं चैतन्येऽप्यस्त्विति वाच्यम्। तस्य सुखसाक्षात्कारत्वाभावप्रसङ्गात् इति।

ननु अपरोक्षार्थविषयानुमितेरः [३]अपरोक्षं स्यादिति चेन्न, इष्टापत्तेः। अत एव पर्वतांशेऽनुमितिः साक्षात्करोमीत्यनुभूयते।

नन्वेवमहङ्काराद्यतिरिक्तात्मानुमितिरप्यपरोक्षा स्यादिति चेत् यद्यपरोक्षार्थ-विषयत्वमापद्यते तर्हि अथानुमितिविषयस्य तस्य साक्षात्करोमीति [४]अनुभवविषयत्वं

---

[१] अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ। याज्ञवल्क्येति होवाच, **यः साक्षादपरोक्षाद्ब्रह्म** य आत्मा सर्वान्तरः, तं मे व्याचक्ष्वेति। एष त आत्मा सर्वान्तरः। (बृ.उ.५.४.१)

स होवाचोषस्तश्चाक्रायणो यथा विबूयादसौ गौरसावश्च इति एवमेवैतद्व्यपदिष्टं भवति, **यदेष साक्षादपरोक्षाद्ब्रह्म** य आत्मा सर्वान्तरः तं मे व्याचक्ष्वेति। एष त आत्मा सर्वान्तरः। (बृ.उ.५.४.२)

अथ हैनं कहोलः कौषीतकेयः पप्रच्छ। याज्ञवल्क्येति होवाच, **यदेव साक्षादपरोक्षाद्ब्रह्म** य आत्मा सर्वान्तरः, तं मे व्याचक्ष्वेति। एष त आत्मा सर्वान्तरः। (बृ.उ.५.५.१)

[२] क - अभ्यस्तमिति; ख - अध्यस्तमिति

[३] क - ख - आपरोक्ष्यम्

[४] क - अनुभूति; ख - अनुभव

## १. शाब्दप्रत्यक्षभङ्गः

तदस्त्वेव चैतन्यं साक्षात्करोमीत्यनुभवात्। न चैवम् [१]अनुमितिसाक्षात्कारतयानुभव-प्रसङ्गः, अपरोक्षार्थविषयज्ञानत्वस्याप्यनुभूयमानत्वात्। घटादिविषयेन्द्रियजन्यताज्ञाने इतोऽतिरिक्तसाक्षात्कारताननुभवात्। न चैवमनुमित्यापि [२]आपत्तिनिवृत्तिप्रसङ्गः, देहातिरिक्तात्मानुमितिगोचरसाक्षिविषयाभानाभावात्[३] पूर्णब्रह्मविषयाभानस्य[४] भिन्न-विषयानुमित्या [५]अनिष्टत्वसंभवात्। [६]दृष्टे सत्यज्ञानानन्दात्मनि ब्रह्मणि पक्षसाध्यादि-वैशिष्ट्यगोचरानुमितिर्न संभवत्येव।

[७]'**तत् त्वमसि**' आदिवाक्यसान्निध्यादेव[८] '**तस्य तावदेव चिरं यावन्न विमोक्ष्ये**'[९] इति श्रवणात्, [१०]'**वेदान्तविज्ञानसुनिश्चितार्थ**' इति वचनाच्च श्रुतिजन्यज्ञानस्यैव मुक्तिसाधनत्वावगमाच्च। न चैवमात्मानुमितेरपि प्रत्यक्षप्रमात्वेन व्यवहारप्रसङ्गः, प्रत्यक्षव्यवहारस्येन्द्रियजन्यमात्रगोचरत्वात्।

न चानुमाने चक्षुरादाविवापरोक्षप्रमाणव्यवहारापत्तिः। आत्मानुमानं हि अन्यतस्सिद्धापरोक्षता विशिष्टार्थविषयतया दैवादपरोक्षम्। नत्वर्थस्यापरोक्षताया निमित्तं चक्षुरादिकं तु [११]अपरोक्षतायाः प्रयोजकमित्यनेनैव विशेषेण तन्मात्रगोचरापरोक्षव्यवहारः[१]।

---

[१] क - ख - अनुमितेरपि; घ - अनुमिति

[२] क - ख - अविद्या; घ - आपत्ति

[३] क - ख - विषयाज्ञानाभावात्; घ - विषयाभानाभावात्

[४] क - ख - विषयाज्ञानस्य; घ - विषयाभानस्य

[५] क - ख - अनिवृत्त्यसंभवात्; घ -अनिष्टत्वसंभवात्

[६] क - ख - शुद्धे; घ - दृष्टे

[७] स य एषोऽणिमा। ऐतदात्म्यमिदँ सर्वम्। तत्सत्यम्। स आत्मा। **तत् त्वमसि** श्वेतकेतो इति। भूय एव मा भगवान् विज्ञापयत्विति। तथा सोम्येति होवाच। (छा.उ.६.८.७; ६.९.४; ६.१०.३; ६.११.३; ६.१२.३; ६.१३.३; ६.१४.३; ६.१५.३;)

[८] क - ख - सन्निधावेव; घ - सान्निध्यादेव

[९] तस्य यथाऽभिनहनं प्रमुच्य प्रब्रूयादेतां दिशं गन्धारा एतां दिशं व्रजेति, स ग्रामात् ग्रामं पृच्छन् पण्डितो मेधावी गन्धारानेवोपसम्पद्येत। एवमेवेहाऽऽचार्यवान् पुरुषो वेद। **तस्य तावदेव चिरं यावन्न विमोक्ष्ये** अथ सम्पत्स्य इति। (छा.उ.६.१४.२)

[१०] म.ना.उ.१०.६; मुण्डक.३.२.६.

[११] क - ख - अपरोक्षतायाम्; घ - अपरोक्षतायाः

तन्मात्रगोचरापरोक्षव्यवहारः[१]। एवञ्च सर्वदा सर्वपुरुषचैतन्याभिन्नत्वात् स्वत एवापरोक्षं ब्रह्म। तस्मात् तत्त्वमस्यादिवाक्यजन्यज्ञानं न परोक्षमपरोक्षार्थविषयत्वाच्चाक्षुषज्ञानवत्।

न चेन्द्रियजन्यत्वमुपाधिः, त्वदभिमतेऽजन्यप्रत्यक्षे सुखादिप्रत्यक्षे दशमस्त्वमसीति ज्ञाने च साध्याव्यापकत्वात्। न च जन्यज्ञानस्य [२]अपरोक्षत्वाभावे इन्द्रियजन्यत्वमुपाधिः। जन्यज्ञानपरोक्षत्वे लिङ्गजन्यत्ववत् तस्याप्यप्रयोजकत्वात्। अपरोक्षार्थविषयत्वस्यैव वृत्तावपरोक्षतारूपत्वेन तस्य परोक्षत्वाभावव्याप्तञ्च[३]। अत एव न शब्दाजन्यत्वमुपाधिः। अन्यथा तत्त्वमसिवाक्यात् परोक्षज्ञाने [४]अविद्यानिवृत्त्यभावात् अनिर्मोक्षप्रसङ्गाच्चेति।

इतरे तु - अपरोक्षार्थविषयत्वं यदि [५]ज्ञानस्यापरोक्षं तदा स्वरूपज्ञाने स्वसुखापरोक्षात्मके व्याप्तिः, स्वप्रकाशस्य चिद्विषयत्वविरोधात्। किन्त्वर्थस्य स्वव्यवहारानुकूलचैतन्याभेदापरोक्षम्[६]। तत्तदर्थव्यवहारानुकूलचैतन्यस्य [७]तत्तदर्थाभेदे ज्ञानापरोक्षम् तथा चेदं चैतन्यस्यैव धर्मो नान्तःकरणवृत्तेः। अत एव सुखादिप्रकाशात्मक-साक्षिणि स्वरूपसुखप्रकाशरूपचैतन्ये [८]चापरोक्षम्। न च वृत्तावापरोक्षानुभवविरोधः, तस्य तदवच्छिन्नचिद्विषयत्वात्।

ननूक्तं ज्ञानार्थयोरापरोक्ष्यम्। हृदयादिगोचरशब्दज्ञानतद्विषययोरतिप्रसक्तम्। तत्र दैवात् कदाचिद्वृत्तिविषयसंसर्गे सति वृत्त्यवच्छिन्नविषयावच्छिन्नचैतन्ययोरभेदाभिव्यक्तेः अवर्जनीयत्वादिति चेन्न। परोक्षवृत्तेर्विषयावच्छिन्नचैतन्यगताज्ञाननिवर्तनाक्षमतया तत्राज्ञानावृतविषयचैतन्यस्यानावृतवृत्त्यवच्छिन्नचैतन्येनाभेदाभिव्यक्तेरभावात्। अत एव जीवस्य संसारदशायान्न ब्रह्मापरोक्षम्, अज्ञानावृतभेदसत्वात्। ईश्वरं प्रति त्वज्ञानस्यानावारकत्वेन तं प्रति जीवभेदानापादकत्वात्। न तस्य जीवापरोक्षासंभवः। यं प्रति यदज्ञानमावारकं तस्य तं प्रत्येव स्वाश्रयभेदापादकत्वात्। अत एव चैतन्यज्ञानेन

[१] क - ख - गोचरोऽपरोक्षव्यवहारः

[२] क - ख - परोक्षत्वाभावे; घ - अपरोक्षत्वाभावे

[३] क - ख - व्याप्तेश्च

[४] क - अविद्यानिवृत्त्यसंभवात्; ख - अविद्यानिवृत्त्यभावात्

[५] क - ख - ज्ञानस्यापरोक्ष्यम्

[६] क - ख - चैतन्याभेद आपरोक्ष्यम्

[७] क - ख - तत्तदर्थाभेदो ज्ञानापरोक्ष्यम्

[८] क - ख - चापरोक्ष्यम्

तस्य घटाज्ञाने निवृत्ते अनिवृत्तं मैत्राज्ञानं मैत्रं प्रत्येव विषयचैतन्यस्य भेदापादकमिति। न चैत्रस्य [१]घटापरोक्षानुपपत्तिरपि।

नन्वेवं वृत्तिविषयावच्छिन्नचैतन्याभेदाभिव्यक्तिलक्षणापरोक्षस्य[२] विषयचैतन्यगताज्ञाननिवृत्तिप्रयोज्यत्वे तस्याज्ञाननिवृत्तिप्रयोजकत्वायोगाज्ज्ञानमात्रमज्ञाननिवर्तकं स्यादिति चेन्न। यज्ज्ञानमुत्पद्यमानं स्वकारणमहिम्ना विषयसंसृष्टमेवोत्पद्यते तदेवाज्ञाननिवर्तकमिति विशेषणादैन्द्रियिकज्ञानानां तथात्वात्। एवञ्च शब्दादुत्पद्यमानमपि ब्रह्मज्ञानं सर्वोपादानभूतस्वविषयब्रह्मचैतन्यसंसृष्टमेवोत्पद्यत इति तस्याज्ञाननिवर्तकत्वम्। अज्ञाननिवृत्तौ तन्मूलभेदप्रविलयादापरोक्षं चेत्युपपद्यते।

नन्वेवमध्ययनजन्यब्रह्मज्ञानेऽपि मूलाज्ञाननिवृत्त्यापरोक्ष्यं किं न स्यात्। न च [३]तत्समाननिश्चयरूपत्वाभावादनिवर्तकमिति वाच्यम्। तथापि कृतश्रवणस्य [४]अनिर्विचिकित्सशाब्दज्ञानादेव निवृत्तिप्रसङ्गादिति चेन्न। [५]चित्तविज्ञेयदोषेण प्रतिबन्धात् [६]निर्विचिकित्सज्ञानेनाप्यज्ञानानिवृत्तेः। मनननिदिध्यासननियमविध्यनुष्ठानस्यार्थवत्वात् भवान्तरीयमननाद्यनुष्ठाननिरस्तचित्तविक्षेपस्योपदेशमात्रादेव [७]ब्रह्मापरोक्षस्य इष्यमाणत्वाच्चेत्याहुः।

परे तु वृत्त्यवच्छिन्नचैतन्यस्य विषयावच्छिन्नचैतन्यादभेदो ज्ञानापरोक्ष्यम्। न च स्वकीयधर्माधर्मयोः शब्दादिना [८]ज्ञाने [९]धर्मसद्विषयवृत्त्योरेकदेशस्थत्वादवच्छिन्नचैतन्ययोरभेदादतिव्याप्तिः योग्यत्वस्यापि विषयविशेषणत्वात्। पर्वतो वह्निमानित्यादौ च पर्वतांशे वह्न्यंशे चान्तः करणवृत्तिभेदात् प्रत्यक्षत्वपरोक्षत्वयोरविरोधः। अत एव 'पर्वतं पश्यामि' 'वह्निमनुमिनोमि' इत्यनुभवः। विषयस्यापरोक्षत्वं तु प्रमातृभिन्नत्वम्। तच्च प्रमातृसत्तातिरिक्तसत्ताकत्वाभावः।

---

[१] क - ख - घटापरोक्ष्यानुपपत्तिरपि

[२] क - ख -परोक्ष्यस्य

[३] क - तत्समान ; ख - तत्सत्ता

[४] क - ख - निर्विचिकित्स

[५] क - ख - चित्तविक्षेपदोषेण; घ - चित्तविज्ञेयदोषेण

[६] क - ख - प्रतिबन्धानिर्विचिकित्स

[७] क - ख - ब्रह्मापरोक्ष्यस्य

[८] क - ज्ञाते; घ - ज्ञाने

[९] क - ख - धर्मतद्विषय; घ - धर्मसद्विषय

अतो नाहमिदं पश्यामीत्यनुभवविरोधः। न च धर्माधर्मयोः प्रत्यक्षतापत्तिः। योग्यत्वेन विशेषणात्। न च रूपप्रत्यक्षकाले परिमाणप्रत्यक्षतापत्तिः, तदुभयावच्छिन्न-चैतन्योत्पादात्[१] इति वाच्यम्। तदाकारवृत्त्युपहितत्वस्य प्रमातृविशेषणत्वात् वृत्तौ चानवस्थाभयात् [२]व्यक्त्यनन्तराङ्गीकारेऽपि स्वविषयत्वाङ्गीकारात् तद्विषयकत्वस्यैव तदाकारशब्देन विवक्षितत्वान्नाव्याप्तिः। अन्तःकरणतद्धर्मशुक्तिरजतादिषु[३] प्रवृत्त्यभ्युपगमात्[४] नाव्याप्तिः।

न च केवलसाक्षिविषयत्वाभ्युपगमविरोधः। इन्द्रियानुमानादिप्रमाणनैरपेक्ष्यस्य तत्र विवक्षितत्वात्। एवञ्च तद्विषयवृत्त्युपहितप्रमातृचैतन्यसत्तातिरिक्तसत्ताशून्यत्वे[५] सति योग्यत्वं विषयस्यापरोक्ष्यम्। तत्तदिन्द्रिययोग्यविषयावच्छिन्नत्वं ज्ञानापरोक्षक्त्वमिति। अपरे तु मूलाज्ञानमेव ब्रह्मावारकम्। अवस्थाज्ञानानां तु तत्तदवच्छिन्नचैतन्याश्रितानां तत्तज्जडमेव विषयः। एवञ्च तं प्रत्यनावृतत्वे सति तद्व्यवहारानुकूलसंविदभेदः अर्थापरोक्ष्यम्। घटसाक्षात्कारदशायां तु रसस्यावृतत्वात् नापरोक्ष्यमिति।

एके तु तिष्ठन्त्वेताः [६]पण्डितंमन्यानाप्तपूर्वकुसृष्टयः। इदं तु स्यात् [७]'**तरति शोकमात्मवित्**' इत्यादिशास्त्रादात्मज्ञानं मोक्षसाधनत्वेनावगतम्। अपरोक्षस्य[८] च कर्तृत्वाद्ध्यासाविद्यादेरपरोक्षज्ञानं विना [९]निवर्तनं युज्यते। औपनिषदेव च ब्रह्मणि [१०]न मानान्तरम् अस्ति। अतश्शब्द एव तत्र हेतुः। [११]स्वत्वं स्वतोऽसमर्थोऽस्यान्यथानुपपत्त्या[१]

---

[१] क - ख - चैतन्यैक्यात्; घ - चैतन्योत्पादात्

[२] क - ख - व्यक्त्यनन्तरानङ्गीकारेऽपि

[३] क - ख - रजतादिषु च

[४] क - ख - वृत्त्यभ्युपगमात्

[५] क - सत्तामात्रशून्यत्वे; ख - सत्ताशून्यत्वे

[६] क - पण्डितंमन्यमाना पूर्वाः ; ख - पण्डितंमन्यानामपूर्वाः

[७] सोऽहं भगवो मन्त्रविदेवास्मि; नात्मवित्। श्रुतं ह्येव मे भगवद्दृशेभ्यः **तरति शोकमात्मविदिति।** सोऽहं भगवः शोचामि, तं मा भगवाच्छोकस्य पारं तारयत्विति। तँ होवाच यद्वै किञ्चैतदध्यगीष्ठाः, नामैवैतत्। (छा.उ.७.१.३)

[८] क - ख - आपरोक्ष्यस्य

[९] क - ख - निवृत्तिर्न; घ - निवर्तकं

[१०] क - ख - न मानान्तरम्; घ - मानान्तरम्

[११] क - ख - स च; घ - स्वत्वम्

## १. शाब्दप्रत्यक्षभङ्गः

शास्त्रीयश्रवणमननपूर्वकप्रत्ययाभ्यां [२]सञ्जनितसंस्कारप्रचयलब्धचित्तैकाग्र्यानुगृहीतापरोक्ष-साधनमिति कल्पनीयम्। ततश्चापरोक्षज्ञानविषयत्वमेवापरोक्षत्वमिति।

कश्चित्तु - भावनाप्रचयसहकृतज्ञानकरणत्वावच्छेदेन पथिकपरिभावितप्रियतम-साक्षात्कारस्थले मनसः करणत्वावधारणाच्छब्दस्यापि तादृशस्य दृष्टानुरोधादेव साक्षात्कारजनकत्वमित्याह।

अत्रोच्यते - यद्यर्थगतम् [३]एवापरोक्षम् तर्ह्यपरोक्षज्ञानस्याविद्यानिवर्तकत्वन्न स्यादन्योऽन्याश्रयात्। आवरणनिवृत्तौ हि विषयावच्छिन्नचैतन्यस्य प्रमातृचैतन्याभेदः। तस्मिन् सति तद्विषयकत्वेनापरोक्षाज्ज्ञानादावरणनिवृत्तिरिति।

किञ्च पर्वतघटादिषु वृत्त्यवच्छिन्नविषयावच्छिन्नचैतन्ययोरभेदो दुर्वचः। नैरन्तर्ये सत्यपि निरन्तराङ्गुलिद्वयावच्छिन्नचैतन्ययोरिवावकुण्ठनपटघटावच्छिन्नचैतन्ययोरिव च भिन्नत्वात्।

किञ्च घटप्रत्यक्षदशायां तत्तत् स्पर्शगोचरशाब्दादिज्ञानस्यापरोक्षत्वप्रसङ्गः[४]। अज्ञायमानरसादेरपि [५]तदापरोक्षप्रसङ्गः। अन्तःकरणसन्देशात् हृदयादौ चातिप्रसङ्गः।

न च तद्दशायाम् आवृत्तस्य[६] स्पर्शाद्यवच्छिन्नचैतन्यस्यानावृतसाक्षिचैतन्येन नाभेद इति वाच्यम्। निर्गतान्तःकरणैक्योपाध्यवच्छेदादौ स्वस्य[७] अवजर्जनीयत्वात्। अन्यथा घटस्यापि भेदकत्वेन [८]अप्रत्यक्षत्वप्रसङ्गात्। घटावच्छिन्नचैतन्यस्य च [९]प्रमातृभेदे स्पर्शस्यापरोक्षता दुर्वारा। तस्यैव रसाद्यधिष्ठानचैतन्यत्वात्। घटावच्छिन्नरसाद्यवच्छिन्न-चैतन्ययोर्भेदे च गुणगुणिनोस्तादात्म्यानुपपत्तिः, भिन्नत्वे सत्यभिन्नसत्ताकत्वं हि

---

[१] क - ख - स्वतोऽसमर्थोऽप्यन्यथानुपपत्या; घ - स्वतोऽसमर्थोऽस्यान्यथानुपपत्या

[२] क - सञ्जनित; ख - घ - सजनित

[३] क - ख - एवापरोक्ष्यम्

[४] क - ख - ज्ञानस्यापरोक्ष्यत्वप्रसङ्गः

[५] क - ख - तदापरोक्ष्य

[६] क - ख - आवृतस्य

[७] क - ख - निर्गतान्तःकरणैक्योपाध्यवच्छेदादैक्यस्य

[८] क - ख - प्रत्यक्षत्व

[९] क - ख - प्रमातृभेदस्पर्शरसाद्यपरोक्षता; घ - प्रमातृभेदस्पर्शस्यापरोक्षता

तादात्म्यमुक्तम्। आवरणस्य प्रमातृचैतन्याद्भेदकत्वे च [१]ब्रह्मापरोक्षं न स्यात्। अतः 'कश्चन्द्र' इति प्रश्नकालीनानवधारणात्मकचन्द्रप्रत्यक्षानभ्यासदशापन्न-जलादिज्ञानानां प्रत्यक्षता न स्यात्। श्रवणात्पूर्वभाविब्रह्मज्ञानस्यानवधारणत्व-प्रतिबन्धकत्वादिकल्पनं व्यर्थं स्यादावरणकृतभेदेन तस्याप्रत्यक्षत्वात्।

किञ्चास्ति लौकिकानामपि घटप्रत्यक्षं जातमिदमिदानीं मम प्रत्यक्षमिति प्रतीतिव्यवहारश्च। न च प्रमातृचैतन्याभिन्नत्वं [२]घटे तैर्ज्ञायते प्रत्युत भेदः। न च प्रमातृचैतन्यतादात्म्यस्यैवाभेदत्वात्। तादात्म्यस्य च भिन्नत्वे सत्यभिन्नसत्ताकत्वात्मकत्वात् भेदज्ञानेऽपि न दोष इति वाच्यम्। तथाप्यभिन्नसत्ताकत्वाज्ञानाज्ज्ञाने च समानाधिकरण-व्यवहारापत्तेः।

नन्विन्द्रियजन्यज्ञानविषय एव लौकिकानां प्रत्यक्षत्वव्यवहार इति चेत्तर्हि ब्रह्मण्येव वैदिकानां प्रत्यक्षत्वव्यवहार इति जडे प्रकारान्तरेण प्रत्यक्षत्वोपपादनं व्यर्थम्।

किञ्च लौकिकानां प्रत्यक्षव्यवहारस्येन्द्रियजन्यज्ञानविषयगोचरत्वे तत्रैवापरोक्षादि-पदव्युत्पत्तेः यत्साक्षादपरोक्षादित्यत्रापीन्द्रियजन्यज्ञानविषयत्वमेवार्थ स्यात्। ततश्चेन्द्रिय-जन्यपदज्ञानसाध्यार्थज्ञानगोचरधर्मादेरिव न परंपरयेन्द्रियजन्यज्ञानविषयता। किन्तु साक्षादेवेति साक्षात्पदप्रयोजनं स्यात्। किञ्चैवं चैतन्यस्यापरोक्षव्यवहारो न स्यात्।

न च तत्र प्रमातृचैतन्याभेदादापरोक्ष्यव्यवहारः। अननुगमादपरोक्षज्ञानत्वेनाविद्या-निवर्तकताग्रहश्च न स्यात्। ब्रह्मघटज्ञानयोः अनुगतापरोक्षासिद्धेः[३]। धर्मादेश्चापरोक्षत्व-प्रसङ्गः। न चोद्भूतत्वेन विशेषणात्परिहारः, ईश्वरं प्रत्यपि तस्यापरोक्षत्वाभावापत्तेः।

ननु धर्मादिकमीश्वरं प्रत्युद्भूतमिति चेत्तथा सति तं प्रति अनावृतत्वात्[४] तत्प्रत्यक्षविषयत्वं तद्योग्यतावच्छेदकं चोद्भूतत्वमिति पर्यवस्यति। अन्यस्य सप्रतियोगिकस्यानिरुक्तेः। तत्र [५]बाह्ये पक्षे धर्मादेरुद्भूतत्वेऽनुद्भूतत्वे च तद्विशेषण-

१ क - ब्रह्मापरोक्षम्; ख - ब्रह्मापरोक्ष्यम्

२ क - ख - घटादौ

३ क - ख - अनुगतापरोक्ष्यासिद्धेः

४ क - ख - अनावृतत्वम्; घ - अनावृतत्वात्

५ क - ख - चाद्ये; घ - बाह्ये

वैयर्थ्यम् [१]इतरयोः अन्योऽन्याश्रयः, [२]ज्ञाननिबन्धनार्थापरोक्षप्रसङ्गो वा। किञ्च [३]प्रत्यययोग्यत्वं प्रत्यक्षजननयोग्यत्वं तदवच्छेदकञ्च [४]घटादौ अप्यस्ति। विषयतायाः प्रत्यक्षजनकतावच्छेदकं ब्रह्मण्यपि नास्तीति तस्य प्रत्यक्षता न स्यात्। किञ्चापरोक्ष-विषयानुमितेरपि [५]अपरोक्षत्वप्रसङ्गः।

यदुक्तं पर्वतांशेऽनुमितेः साक्षात्कारत्वानुभवादेः न इष्टापत्तिः इति तन्न। अव्यवहितेन्द्रियकप्रत्यक्ष एव तथानुभवात् पर्वतं पश्यामीति चाक्षुषत्वानुभववत्। अन्यथा भूतले रज्जुं घटे च तद्व्याप्यं पश्यतो घटे तदनुमितौ तत्र तदंशे अपरोक्षानुभवप्रसङ्गः। रजतमणिं रजततया लाक्षानुलिप्तचर्मासक्तरजतं स्वर्णतया रजतत्वव्याप्यवत्तया च पश्यतस्तत्र रजतत्वानुमितौ रजतत्वांशे अपरोक्षानुभवप्रसङ्गः। किञ्चात्मानुमितेः अपरोक्षत्वप्रसङ्गः। यदुक्तं शुद्धे अनुमितिर्न संभवतीति, तद्वेदान्ततात्पर्यगोचरो ब्रह्म, न तद्वाक्यस्य[६] पदशक्यमिति [७]अवाच्यत्वानुमानस्य स्वयमेव निर्धर्मकब्रह्म-विद्यात्वोपपादनादिरुक्तम्। किञ्च निदिध्यासनस्यापरोक्षार्थविषयसत्वादपरोक्षप्रसङ्गः। तत एव चाविद्यानिवृत्तिप्रसङ्गः। असंभावनादिप्रतिबन्धकानामपि निवृत्तत्वात्। न च ध्यानस्य ज्ञानसंभिन्नत्वादनिवर्तकत्वम्। तथापि [८]अपरोक्षत्वस्यानिवर्तकताप्रयोजकस्याक्षतेः [९]ज्ञानत्वस्यापि प्रवेशे गौरवात्। अविच्छिन्नस्मृतिरूपत्वेन ज्ञानत्वात् ब्रह्मनिदिध्यासनानन्तरं स्मृतेर्वानिवर्तकत्वप्रसङ्गः।

ननु श्रुतिजन्यज्ञानस्यैव मुक्तिसाधनत्वस्योक्तत्वान्नानुमितिर्निदिध्यासनम्। तदनन्तर-स्मृतिर्वाविद्यानिवृत्तिः हेतुः इति चेत् तर्ह्यद्वैतश्रुतिजन्यज्ञानत्वेन निर्वर्तकत्वस्यैव श्रुत्याव-बोधितत्वात्। तथा निवृत्तत्वस्य शुक्तिरजतादिष्वभावात्। ज्ञाननिवर्त्यत्वान्यथानुपपत्या मिथ्यात्वकल्पनं न स्यात्। ज्ञाननिवर्त्यत्वमात्रस्य पुरुषोत्तमदर्शननिवर्त्यपातकेऽपि स तेन

---

[१] क - ख - उत्तरयोः; घ - इतरयोः

[२] क - ख - ज्ञाननिबन्धनार्थापरोक्ष्य; घ - ज्ञाननिबन्धनार्थापरोक्ष

[३] क - ख - प्रत्यक्ष

[४] क - ख - धर्मादौ; घ - घटादौ

[५] क - अपरोक्षविषयत्व

[६] क - तद्वाक्यस्थ

[७] क - वाच्यत्वानुमानस्य

[८] क - अपरोक्षत्वस्य निवर्तकता

[९] क - ज्ञानत्वस्य

रूपान्तरेणानिवर्त्यत्वस्यैव मिथ्यात्वकल्पकत्वात् श्रुत्या च तदवबोधनात्। किञ्च तद्रूपान्तरं न तत्वसाक्षात्कारत्वम्। तस्य घटादिसाक्षात्कारेष्वतिप्रसक्ततया निवर्तकतानवच्छेदकत्वात्। न हि घटसाक्षात्कारः पटाज्ञाननिवर्तकः। नाप्यधिष्ठानतत्व-साक्षात्कारत्वम्। तदधिष्ठानं हि तत्कल्पना धर्मितदधिकरणत्वे सति तदत्यन्ताभाववदवाच्यम्[१] इति मिथ्यात्वघटितम्। तथा च न मिथ्यात्वकल्पकमात्माश्रयः। ततश्च शक्तिविशेषाद्यनपेक्षापरोक्षज्ञाननिवर्त्यत्वमेव मिथ्यात्वप्रयुक्तं तथा तत्कल्पकं वाच्यम्। दृष्टञ्चैतच्छुक्तिकारजतादौ। एवञ्च श्रुतिजन्यज्ञानस्यैवाविद्यानिवर्तकत्वे तस्य शक्तिविशेषविशिष्टतया निवर्त्तकत्वात् मिथ्यात्वे च तदनुपपत्तेः सत्यत्वसत्यत्वपर्यवसायं[२] स्यात् [३]पुरुषोनमार्गनिवर्त्यपापवत्।

ननु स्वातिरिक्तकारणानपेक्षज्ञाननिवृत्यत्वमेव[४] मिथ्यात्वकल्पकम्। न च [५]निवर्त्यसापेक्षत्वात् प्रपञ्चनिवृत्तावविद्यानिवृत्तेरप्यपेक्षिततत्वाच्च तदसंभवः। निवर्त्यातिरिक्तत्वसाध्यानपेक्षक्त्वस्य विवक्षितत्वात् प्रपञ्चनिवृत्त्यात्मकमुक्तौ च [६]‘**नान्यः पन्था**’ इति श्रुतेस्तत्सिद्धिः। अत एव कालोऽपि न कारणम्। प्रपञ्चेन सहैव निवर्त्यस्य कालस्याधिकरणत्वानुपपत्तेश्चाधिकरणत्वेन तस्य हेतुत्वात्। तत्र च व्यभिचारेणाकारणस्य कालस्य मिथ्यात्वनिवृत्तिमात्रे न हेतुत्वमिति मिथ्यारजतेऽपि तत्सिद्धमिति चेन्न, अन्योऽन्याश्रयणात् प्रपञ्चमिथ्यात्वे सिद्धे मिथ्यार्थनिवृत्तित्वावच्छेदेन कालजन्यत्वग्रहः। तद्ग्रहे च शुक्तिरजतेऽपि [७]तत्सिद्धिः तस्य मिथ्यात्वव्यापकत्वग्रहात् प्रपञ्चेऽपि मिथ्यात्वकल्पनमिति।

किञ्च शुक्तिरजते दृष्टत्वात् विशेषाच्छक्तिविशेषानपेक्षज्ञाननिवर्त्यत्वस्यापि मिथ्यात्वव्यापकत्वात्तन्निवृत्तौ प्रपञ्चः कथं मिथ्या स्यात्।

---

[१] क - तदत्यन्ताभाववद्वावाच्यम्

[२] क - पर्यवसानम्; घ - पर्यवसायम्

[३] क - पुरुषोत्तमदर्शन; घ - पुरुषोनमार्ग

[४] क - निवर्त्यत्वमेव; घ - निवृत्यत्वमेव

[५] क - निवर्त्तक; घ - निवर्त्य

[६] धाता पुरस्ताद्यमुदाजहार। शक्रः प्रविद्वान् प्रदिशश्चतस्रः।
तमेवं विद्वानमृत इह भवति। **नान्यः पन्था** अयनाय विद्यते।। (पु.सू.१७)

[७] क - तत्सिद्धेः; घ - तत्सिद्धिः

## १. शाब्दप्रत्यक्षभङ्गः

किञ्च वेदान्तविज्ञानेऽपि [1]"**तस्य तावदेव चिरम्**' इति च न साक्षात्साधनत्वमवगम्यते। प्रत्युत ब्रह्मलोके तु तावच्चिरमिति विलम्बश्रवणाच्छाब्दज्ञानस्योपयोगमात्रमन्यस्य कस्यचित् [2]साधनत्वं च गम्यते। किञ्चिदुच्यते तत्त्वमस्यादिवाक्योऽर्थज्ञानं मोक्षस्य साधनमिति स्मर्यत इति, तदपि न। परिकरमात्रेऽपि प्रयुज्यमानस्य साधनशब्दस्य [3]सिद्धसाध्यसाधनभावभञ्जकत्वायोगात्। विलम्बश्च त्वदुदाहृतश्रुतीनामेव[4] सिद्धः। अतः साधनशब्दस्य साक्षात्साधनत्वैकान्त्येऽपि न तत्परता। अस्तु वा साक्षात्साधनत्वप्रतिपादनम्। पूर्वोत्पन्न शाब्दज्ञानादतिरिक्तस्याविद्यानिवृत्त्यव्यवहितकालीनस्य शाब्दज्ञानस्याथापि परोक्षज्ञानस्य शाब्दज्ञानस्य लोकसिद्धनिवर्तकेनापरोक्षज्ञानेन सह विकल्पेन विधानं स्यात्। तर्ह्यन्वयव्यतिरेकमूलमौषधस्य व्याधिनिवर्तकत्वं व्याधिनिवर्तकजपादि विधिभिरपह्रियते। वस्तस्तु परोक्षे ब्रह्मणि शब्देनाप्यपरोक्षमेव जायत इत्यनुवादः स्यात्। अस्तु तर्हि नियमविधिः। मैवम्, शक्तिविशेषापेक्षायां दोषस्योक्तत्वात्।

किञ्च शाब्दापरोक्षस्य मोक्षसाधनताबोधमात्रान्न विधित्वसंभवः प्राप्तत्वात्। अपि तु शाब्दापरोक्षत्वेन मोक्षत्वेन कार्यकारणभावबोधनादेव [5]तथा बोधने च लक्षणाप्रसङ्गः। तस्मादनुवाद एव स्यात्। तस्मादनुमित्यादिभिरविद्यानिवृत्तिर्दुर्वारा। तस्मादुक्तप्रकारं आपरोक्ष्यं परित्यज्य तत्वमस्यादिवाक्योत्थज्ञानस्य परोक्षस्यैव मोक्षसाधनत्वं विधीयत इत्यङ्गीकार्यमिति विध्यभिनिवेशे सिध्यति।

किञ्चाधिष्ठानमेवापरोक्षत्वम्। घटादौ तत्तादात्म्याध्यासादपरोक्षव्यवहार इत्यक्तौ सत्तावदपरोक्षत्वमपि सप्रतियोगिकं न स्यात्। न हि घटः कञ्चित् प्रति सन् तत्प्रमातृचैतन्याभिन्नचैतन्यतादात्म्यमापरोक्ष्यमित्यादिरूपेण [6]सप्रतियोगिकत्वात् तद्बुध्योः लोकसिद्धयोरुपपादने हि प्रमातृभिन्नसत्तादात्म्यं सत्वमित्येवं सत्तायाः सप्रतियोगिकत्वतद्बुद्धिव्यवहारा अर्जनीयाः।

---

[1] छा.उ.६.१४.२.

[2] क - साक्षात्साधनत्वम्

[3] क - लोक सिद्ध

[4] क - श्रुतिभ्यामेव; घ - श्रुतीनामेव

[5] क - तथावबोधने

[6] क - ख - सप्रतियोगिकत्वतद्बुध्योः

किञ्च सदादिस्वरूपे ब्रह्मणि यथा बाधायोग्यत्वादिसदादिशब्दप्रवृत्तिनिमित्तं तथा अपरोक्षस्वरूपेऽपरोक्षशब्दप्रवृत्तिनिमित्तं किञ्चिद्वाच्यम्। तच्च दुर्निरूपम्।

किञ्चात्र वृत्त्यवच्छिन्नचैतन्ये ज्ञानापरोक्ष्यन्न स्यात्। घटस्यापरोक्षार्थत्वाभावात् चैतन्यस्याविषयत्वात्। न चापरोक्षतादात्म्यापन्नार्थविषयत्वं ज्ञानापरोक्ष्यं वृत्तेः चैतन्यापरोक्षत्वाभावापत्तेः। न च वृत्तेः चैतन्यापरोक्षार्थचैतन्यविषयत्वं ज्ञानापरोक्ष्यम्। एवं हि चैतन्ये वृत्तेरिदं तत्रैव चैतन्यस्य तदभेदः। द्वयोरपि जडे अपरोक्ष-तादात्म्यापरोक्षविषयत्वम्[१] अपरोक्षत्वमित्यननुगमादनुगतबुध्यनुपपत्तेः। तस्मान्नार्थनिबन्धनं ज्ञानापरोक्ष्यम्। अपि तु ज्ञानानिबन्धनमेवार्थापरोक्ष्यम्।।

ननु यद्यपरोक्षज्ञानविषयत्वम् [२]अर्थापरोक्ष्यं तदा सामान्यप्रत्यासत्तिजन्यज्ञान-विषयत्वात् परमाणुरपरोक्ष इति व्यवहारापत्तिः। शब्देन काशीस्थं पदार्थं जानतः काशीस्थं पदार्थं जानामीत्यनुभवतः काशीस्थः पदार्थोऽपरोक्ष इत्यनुभवप्रसङ्गः। ज्ञानप्रत्यासत्ति-जन्यज्ञानविषयत्वादन्धस्य शाब्दं शौक्ल्यानुभवमनुभवतः शौक्ल्यमपरोक्षमित्यनुभवापातः। तथा दण्ड्ययमासीदित्यनुभवे देवदत्ते दण्डो ममेदानीमपरोक्ष इति व्यवहारप्रसङ्ग इति चेन्न, तावत्परमाणावापरोक्ष्यव्यवहारापत्तिः। लौकिकैः तज्ज्ञानस्य सन्निहितव्यक्त्यरिक्त-परमाण्वादिविषयत्वापरिज्ञानात्। तत्परिज्ञातॄणां तु [३]विदुषां भवत्येव व्यवहारः। नापि काशीस्थः पदार्थोऽपरोक्ष इति वा शौक्ल्यमपरोक्षमिति वानुभवप्रसङ्गः। स्वरूपतः तदंशप्रत्यक्षत्वव्यञ्जकस्य तदंशे लौकिकप्रत्यासत्तिजन्यत्वस्याभावात्। अत एव दण्डांशेऽपि न प्रत्यक्षत्वव्यवहारः।

नन्वेवं रजतभ्रमे साक्षात्कारत्वानुभवो न स्यादिति चेन्न, यद्दर्शनाभावजन्यो भ्रमस्तद्ग्रहजनकलौकिकसन्निकर्षस्याप्यभिव्यञ्जकत्वात्। एवञ्च लौकिकसन्निकर्षजन्यत्वं प्रमायां स्वरूपं सदेव प्रत्यक्षत्वाभिव्यञ्जकं लौकिकसन्निकृष्टगोचरप्रत्यक्षाभावजन्यत्वं तादृशभ्रमे तद्व्यञ्जकदण्डित्वभ्रमभूतले[४] दण्ड्ययमासीदिति भ्रमरूपप्रत्यभिज्ञाने [५]दण्ड्यतिरेकप्रत्यक्षाभावो न प्रयोजकः। किन्तु परोक्षापरोक्षसाधारण्येन दण्डव्यतिरेक-

[१] क - तादात्म्यापन्नार्थपरोक्षविषयत्वम्; ख-तादात्म्यापन्नार्थविषयत्वम्; घ-तादात्म्यापरोक्षविषयत्वम्

[२] क - ख -अर्थस्यापरोक्ष्यम्; घ - अर्थापरोक्ष्यम्

[३] ख - विदुषा

[४] क - ख - मूले; घ - भूतले

[५] ख - दण्डव्यतिरेक; क - घ -दण्ड्यतिरेक

ज्ञानाभाव एव। नायं दण्ड्यासीदिति शाब्दज्ञाने सत्यपि निरुक्तभ्रमानुदयात्। किञ्च तवापि 'दण्डं प्रत्यक्षेण जानामि' 'दण्डः चक्षुषा दृष्टः' 'प्रत्यक्षेण ज्ञायत इति' इत्यनुभवस्स्यात्। यदि चेष्टापत्तिस्तदा अस्माकमपि तुल्यम्।

किञ्च चाक्षुषत्वं यदि चक्षुर्जन्यज्ञानविषयत्वं स्यात्तदा दण्डेऽपि तत्सत्वात् दण्डो ममेदानीं चाक्षुष इति [१]व्यभिचारापत्तेः चाक्षुषत्वमप्यपरोक्षत्ववज्ज्ञानानिबन्धनमेवार्थगतं स्वीकार्यं स्यात्।

किञ्च वह्निमनुमिनोमीतिवत् पर्वतमनुमिनोमीत्यव्यवहारादनुमेयत्वमप्यनुमिति विषयत्वादन्यत् स्यात्। वस्तुतस्त्वापरोक्ष्यं हि स्पाष्ट्यरूपो ज्ञानगतातिशयो विषयनिरूप्यो नित्यज्ञानासाधारणः[२]। अनित्यज्ञाने च यथानुभवं लौकिकप्रत्यासत्तिदोषविशेषादि-जन्यरागानुरक्तभावनादौ व्यवस्थाप्यः। तस्मादलौकिकप्रत्यासन्नस्यापरोक्ष्यानिरूपकत्वान्न दण्डादावापरोक्ष्यनिरूपकत्वानुभवः। देवदत्तादौ तु तत्सत्वात्तदनुभवः। प्रत्यक्षत्वमिन्द्रिय-जन्यत्वं विषये तु तादृशज्ञानविषयत्वात् प्रत्यक्षत्वव्यवहारः दण्डादाविदं ये जानन्ति तेषां तत्र तद्व्यवहारोऽस्त्येव। अतो दण्डादीनां प्रत्यक्षविषयत्वेऽपि [३]आपरोक्ष्यानिरूपकत्वात् पारोक्ष्यमेवेति। '**यत्साक्षात्**' इति श्रुतिस्तु स्वप्रकाशतादिपरत्वेनाप्युपपन्ना। साक्षादिति घटादाविव ज्ञानान्तराधीनापरोक्षप्रकाशस्य निषेधादनुमानमप्ययुक्तम्।

न परोक्षमित्यस्य प्रमातुः प्रमातृचैतन्यभिन्नार्थगोचरत्वाभावपरत्वे घटसाक्षात्कारे व्यभिचारात् घटस्य हि तादात्म्यम् न त्वभेदः। तादात्म्यानापन्नार्थगोचरत्वाभावपरत्वे बाधः। न हि ब्रह्मणो भेदगर्भं तादात्म्यं व्यावहारिकभेदाङ्गीकारे च कथमभिन्नसत्ताकत्वं दण्ड्ययमासीदित्यादिज्ञाने व्यभिचारश्च यद्ब्रह्मणस्सर्वपुरुषचैतन्याभिन्नत्वात् स्वतोऽपरोक्षत्वमुक्तम्। तदयुक्तम् आवृतत्वेन ततोऽभिन्नत्वात्। आवृतस्याप्यभेदे घटप्रत्यक्षसमये रसस्याप्यपरोक्षतापत्तेः।

द्वितीयपक्षे पाञ्चभूतिकशरीरे[४] भूतानां व्यापकत्वात् तद्गोचरशाब्दज्ञान-तद्विषययोरुभयविधमापरोक्ष्यमतिप्रसक्तम्। न हि तत्र हृदय इव दैवात् तद्विषयसंसर्गः। येन वृत्तिविषयावच्छिन्नचैतन्ययोरभेदाभिव्यक्तिर्न स्यात्। एवं मनो न प्रमाणम्।

---

[१] क - ख - व्यवहारापत्तेः; घ - व्यभिचारापत्तेः

[२] क - ख - नित्यज्ञानसाधारणः

[३] क - ख - आपरोक्ष्यनिरूपकत्वात्

[४] क - ख - भौतिकशरीरे; घ - भूतिकशरीरे

[१]'**चोदनालक्षणोऽर्थो धर्मः**' '**प्रकृतिर्जगदुपादानम्**' [२]'**मायां तु प्रकृतिं विद्यात्**' इत्यादि शाब्दज्ञानादिष्वतिप्रसङ्गः।

किञ्च तत्तदर्थव्यवहारानुकूलचैतन्याभेदो यद्यर्थापरोक्ष्यं तदा सर्वस्य सर्वं सर्वदा अपरोक्षं स्यात्। तादृशस्वाधिष्ठानचैतन्याभेदात् तत्कर्तृकव्यवहारासाधारणानुकूल-चैतन्याभेदस्तं प्रत्यापरोक्ष्यमिति चेदेवमपि स्वाश्रयं प्रति धर्मादेस्सर्वदा आपरोक्ष्यप्रसङ्गः। तदधिष्ठानप्रमातृचैतन्यस्यासाधारणत्वात्। तत्तदर्थमात्रव्यवहारानुकूलत्वमपि विवक्षितमिति चेन्न, घटप्रकाशस्य स्वावच्छेदकवृत्तिव्यवहारानुकूलत्वेनासंभवप्रसङ्गात्। स्वरूप-प्रकाशस्याविद्यादिव्यवहारसाधारण्येनोक्तरूपासिध्या स्वरूपस्यापरोक्ष्यानुपपत्तेश्च। घटव्यवहारानुकूलघटाधिष्ठानचैतन्यस्य नानापुरुषवृत्त्यवच्छिन्नत्वेनासाधारण्यासिद्धेश्च। न च वृत्तिभेदात्तदवच्छिन्नचैतन्यभेदः एकदेशस्थयोर्भेदकत्वासंभवात्। अन्यथा घटतद्वृत्य-वच्छिन्नचैतन्ययोरप्यभेदानुपपत्तेः। एतेन तद्व्यवहारानुकूलानावृतचैतन्याभेदोऽर्थापरोक्ष्यं तेन न सर्वेषां सर्वदापरोक्ष्यप्रसङ्ग इति निरस्तम्। घटे ज्ञायमाने रसादेरापरोक्ष्य-प्रसङ्गात्। घटावच्छिन्नचैतन्यस्य घटज्ञानेन निवृत्तावरणकतयानावृतचैतन्याभेदात्।

न च रसावच्छिन्नघटावच्छिन्नचैतन्ययोर्भेदाद्रसावच्छिन्नचैतन्यं तत्रावृतमिति वाच्यम्, एकदेशस्थत्वेन चैतन्यभेदकत्वासंभवात्। यदि च घटावच्छिन्नचैतन्याद्रसावच्छिन्नचैतन्यं भिद्येत तदा क्वाप्यावरणकल्पनमेव न स्यात्। घटाकारवृत्त्या घटावच्छिन्नचैतन्यस्य प्रमातृचैतन्याभेदात् तं प्रति तद्भानेऽपि रसादेरभानात् तदुपपादनार्थमज्ञानावरणं कल्प्यते घटावच्छिन्नाद्रसावच्छिन्नचैतन्यस्य भेदे च घटाकारवृत्त्या प्रमातुर्घटावच्छिन्नचैतन्याभेदे सत्यपि रसावच्छिन्नचैतन्याभेदाभावात् तस्य प्रमातृसंबन्धादेवाप्रकाशोपपत्तेः तत्कल्पनवैयर्थ्यात्।

ननु घटावच्छिन्नचैतन्यमेव रसावच्छिन्नचैतन्यम्। तत्र घटरसादिकं भिन्नभिन्नाज्ञान-विषयतावच्छेदकम्। एवञ्च स्वावच्छिन्नावरणशून्यचैतन्याभेदोऽर्थापरोक्ष्यम्। अतो घटसाक्षात्कारेण तत्र रसावरणानिवृत्तेर्न रसस्यापरोक्ष्यमिति चेन्न, ब्रह्मणः सर्वदापरोक्ष्य-प्रसङ्गात् तस्य स्वयमज्ञानविषयतयानवच्छेदकत्वात्। वस्तुतस्तु ब्रह्मण आपरोक्ष्यन्न स्यात् तदवच्छिन्नावरणाप्रसिद्धेः। एवं शुक्तिरजतसुखादावपि द्रष्टव्यम्।

---

[१] मी.सू.१.१.२.

[२] **मायां तु प्रकृतिं विद्यात्** मायिनं तु महेश्वरम्।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्।। (श्वे.उ.४.१०)

## १. शाब्दप्रत्यक्षभङ्गः

किञ्च यावदावरणशून्यत्वमसंभवि सर्वैरेकस्यानुपलम्भात्। यत्किञ्चिदावरण-शून्यत्वे तु विवक्षिते घटस्य देवदत्तं प्रत्यापरोक्ष्यकाले रसमात्रं जानानं यज्ञदत्तं प्रति आपरोक्ष्यप्रसङ्गात्। तं प्रत्यावृत्तत्वाभावविवक्षायां ईश्वरं प्रति किमप्यपरोक्षन्न स्यात् तं प्रत्यावरणाप्रसिद्धेः। तं प्रत्यावरणावच्छेदकत्वाभावस्यैव लाघवेन तं प्रत्यपरोक्षत्व-रूपत्वसंभवाच्च।

किञ्च प्रकाशमानचैतन्याभेदात् प्रकाशे प्रसक्ते अप्रकाशार्थमावरणं कल्प्यते। प्रकाशमानचैतन्याभेदाभावादप्रकाशो यथा स्यादिति। एवञ्च रसावच्छिन्नाज्ञानेन चैतन्यस्याप्रकाशे घटोऽपि न प्रकाशेत। न हि घटस्यावच्छेदकत्वाभावमात्रात् तत्प्रकाशकचैतन्यस्याप्रकाशमानत्वमपगच्छति। अन्यथा रसादेरपि प्रकाशमानाभेदात् प्रकाशापत्तेः।

यच्चोक्तं यं प्रत्यज्ञानमावारकं तं प्रत्येवावृतस्य भेदापादकम्। अतो नेश्वरस्य जीवापरोक्ष्याभावापत्तिरिति तन्न। न हि भेदः कञ्चित् प्रत्यस्ति कञ्चित् प्रति नास्तीति वा कञ्चित् प्रति भेदः कञ्चित् प्रति नेति वा वक्तुं शक्यम् घटादिवत्। न च जीवप्रतियोगिकभेद ईश्वरेऽस्ति। जीवे तु नेश्वरप्रतियोगिकभेदोऽस्तीत्यपि वक्तुं शक्यम्। बिम्बप्रतिबिम्बयोर्द्वयोरपि भेददर्शनात्। जीवगतदुःखादिदोषाणामीश्वरे प्रसङ्गाच्च। न च यं प्रत्यावरणं तत्कृतो भेदस्तं प्रत्येवापरोक्ष्यविरोधि नान्यं प्रति इति वाच्यम्। अभेदो ह्यापरोक्ष्यम्। न च भेदे सति सोऽस्ति इति न च वाच्यम्। तं प्रति आवृतत्व-विशिष्टाभेदाभावः। तं प्रत्यापरोक्ष्यमीश्वरं प्रति जीवस्यावृत्तत्वाभावात् विशिष्टाभावसत्त्वात् जीवस्यावृतत्वाभावात् परोक्ष्यमिति। ईश्वरं प्रत्यावरणाप्रसिद्धेरावृत्तत्वाभाव-मात्रस्यापरोक्ष्यत्वोपपत्तेः चावृतानावृते भेदकल्पनावैयर्थ्यात्।

न चानावृतत्वमेवापरोक्ष्यमस्त्विति वाच्यम्। जडावरणस्य दूषितत्वेन सर्वदा आपरोक्ष्यप्रसङ्गात्। अनावृतचैतन्याभेदस्य चानवधारणविषयजलादावव्याप्तेरुक्तत्वात्। यदुक्तं चित्तविक्षेपदोषेण प्रतिबन्धान्न निर्विचिकित्स ज्ञानेनाप्यज्ञाननिवृत्तिरिति, तन्न। सत्यपि चित्तविक्षेपे घटादिज्ञानेनाज्ञाननिवृत्तिदर्शनेन तस्याज्ञाननिवृत्तिप्रतिबन्धकत्वासिद्धेः।

किञ्च दशमोऽहमिति शाब्दज्ञाने यादृशमापरोक्ष्यमनुभूयते तादृशमेव ब्रह्माहमस्मीति निर्विचिकित्सशाब्दज्ञानेऽप्यनुभूयते। अतस्तत्रापरोक्ष्यभावोऽनुपपन्नः। तृतीयपक्षे ब्रह्मज्ञानस्यापरोक्ष्याभावः प्रसज्यते तत्र विषयावच्छिन्नचैतन्यासिद्धेः। चैतन्यस्य स्वप्रकाशस्य द्वि विधापरोक्ष्याभावप्रसङ्गश्च तत्र वृत्तिविषयावच्छिन्नचैतन्ययोरसिद्धेः। यच्च

योग्यत्वं विषयविशेषणमिति तन्न। योग्यत्वमितीन्द्रिययोग्यत्वम्। ततश्च ब्रह्माहमर्थ-सुखादेरज्ञानस्य चापरोक्ष्याभावप्रसङ्गः। इन्द्रिययोग्यत्वञ्चेन्द्रियजन्यज्ञानविषयत्व-योग्यत्वमेव। ततश्च तावदेवापरोक्ष्यमस्तु। तथा च ज्ञानविषयत्वमेवार्थापरोक्ष्यं पर्यवस्यति।

नन्विन्द्रियजन्यवृत्यभिव्यक्तचैतन्याभिन्नत्वं योग्यत्वं रूपप्रत्यक्षसमये रसापरोक्ष्य-वारणाय तदाकारेऽतीतरांशः तथा चेन्द्रियजन्यतदाकारवृत्त्यभिव्यक्तचैतन्याभिन्नत्वं समुदायार्थः पर्यवस्यतीति चेन्न। शुक्तिरजते वृत्तिकृतावरणाभिभवस्येन्द्रियजन्य-वृत्तेश्चाभावेनाव्याप्तेः। अविद्यावृत्तेरिन्द्रियाजन्यत्वात् परोक्षवृत्तौ चेन्द्रियजन्यवृत्ति-कृतावरणाभिभवाभावादव्याप्तेः। अविद्यादिषु चाव्याप्तिः प्रागेवोक्ता। तस्मात् ज्ञानगतमेवापरोक्ष्यम्। तत्संबन्धादर्थे तद्व्यवहारः यत् साक्षादपरोक्षाद्ब्रह्मेति चेममेवार्थं स्पष्टमाह - ब्रह्मण आपरोक्ष्यं साक्षादव्यवधानेनास्वप्रकाशत्वात्। घटादेस्तु तद्विषयकज्ञान-व्यवधानेनास्वप्रकाशत्वादित्यर्थः ब्रह्मण आपरोक्ष्यं स्वतः। घटादेरापरोक्ष्यन्न स्वतः। किन्तु वृत्तिव्यवधानादिति परोक्तार्थोऽनुपपन्नः। वृत्तेरापरोक्ष्यहेतुत्वेऽपि व्यवधायकत्वासिद्धेः न हि वृत्तिगतमापरोक्ष्यं येन व्यवधायकता स्यात्।

चतुर्थपक्षोऽप्यनुपपन्नः - विशेष्यवैयर्थ्यात्। अस्तु तं प्रत्यनावृतं प्रत्यपरोक्षत्वादिति चेत्तथा सत्यनभ्यासदशायां न जलाद्यनवधारणस्थले जलादेरापरोक्ष्याभावप्रसङ्गात्। न चात्रेष्टापत्तिः। तादृशार्थाभेदस्यैव ज्ञाने आपरोक्ष्यरूपत्वात्। तस्यैवेन्द्रिय-जन्यतावच्छेदकत्वात्। तदभावे इन्द्रियजन्यत्वानुपपत्तेः। किञ्च जडस्याप्रसक्तेः प्रकरणत्वेन प्रयोजनाभावान्नावरणं कल्पनीयम्।

ननु चैतन्यसंबन्धात् प्रसक्तप्रकाशस्य जडस्याप्रकाशार्थमावरणं कल्पनीयमिति चेत् प्रकाशः किञ्चैतन्यसंबन्ध एव उत तद्विषयता। नाद्यः, आवरणे सत्यपि तस्यानपायात्। न द्वितीयः - चैतन्यसंबन्धस्य चैतन्यविषयतायां प्रयोजकत्वात्। असत्यपि संबन्धे वह्न्यादेरनुमित्याद्यवच्छिन्नचैतन्यविषयत्वादतस्तदाकारवृत्यवच्छेदतदभावाभ्यां तद्विषयत्व-तदभावौ किञ्चावरणस्याविषयत्वप्रयोजकत्वेऽनुमित्यादिविषयतात्वचिदपि न स्यात्। न च संबन्धचैतन्याविषयत्वमावरणप्रयोज्यधर्मादेः शाब्दज्ञानाद्यविषयत्वापातात् धर्मतद्विषय-वृत्योरेकदेशस्थत्वात्।

पञ्चमपक्षोऽप्यनुपपन्नः - अन्यथानुपपत्या स्वतोऽसमर्थस्यापि शब्दस्य साक्षात्कारजनकत्ववदद्वैतशास्त्रजन्यपरोक्षज्ञानस्य निवर्तकत्वकल्पनसंभवात्।

## १. शाब्दप्रत्यक्षभङ्गः

नन्वधिष्ठानतत्वसाक्षात्कारत्वेनाध्यासनिवर्तकत्वमध्यासनिवृत्तित्वेन तज्जन्यं चावगतम्। अतस्तदभावेऽध्यासनिवृत्तिरनुपपन्ना। वाक्यत्वेन परोक्षज्ञानत्वेन जन्यजनक-भावो नावगतः। अतश्शब्दस्यापरोक्षज्ञानजनकत्वं युक्तमेवेति चेन्न। इन्द्रियत्वेन जन्यप्रत्यक्षत्वेन कार्यकारणभावग्रहात् तदभावे तदयोगात्।

नन्वेवमपि परोक्षज्ञानेनाविद्यानिवृत्तिकल्पने किं विनिगमकमिति चेत्, परोक्ष-ज्ञानस्याध्यासनिवृत्तिजनकत्वेऽध्यासनिवृत्तावद्वैतज्ञानाजन्याविद्यानिवृत्तित्वं कार्यतावच्छेदक-मित्यविद्यानिवृत्तित्वस्य कार्यतावच्छेदकस्य संकोचमात्रं शब्दस्यापरोक्षज्ञानजनकत्वे इन्द्रियजन्यतावच्छेदकं शब्दजन्यसाक्षात्कारत्वमिति कार्यतावच्छेदकसंकोचो विशिष्टः। साक्षात्कारस्य विषयसन्निकर्षजन्यत्वावच्छेदकसंकोचोऽधिकः। आपरोक्ष्यस्य श्रवणाद्यनन्तरभावित्वे श्रवणादीनां साक्षात्कारहेतुत्वक्लृप्तिश्चाधिका।

किञ्च श्रुतिबलादन्यतरनियमभङ्गे कार्ये न हि शब्दस्यापरोक्षज्ञानजनकत्वं कल्पयित्वा सकार्यम्, गौरवात् किन्तु श्रुतमात्रानुरोधादेव। षष्ठे पक्षे सन्निकर्षाभावान्न भावनायामपि कामिन्या ब्रह्मणश्च साक्षात्कारः जन्यप्रत्यक्षत्वावच्छिन्ने तद्धेतुत्वात्। अतः स्मृतावेव विशदायां चाक्षुषत्वारोपः।।

**इति शाब्दप्रत्यक्षभङ्गः प्रथमः।।**

## गुरूपसदनविजये
## २. श्रवणस्य विधेयत्वभङ्गः

नियमविधिष्वाद्यपक्षस्तावन्न संभवति। ज्ञानप्रसादेन विशुद्धसत्व इति ज्ञानाधीनत्वात् मनश्शुद्धेः। इदानीं विशुद्धमनसो लाभान्न तत्प्रणिधाने प्रवृत्तिसंभवः। किञ्च विधिं विना पाक्षिकाप्राप्तिवारणाशक्यत्वे हि नियमविधिः। इह तु कृतेऽपि प्रणिधाने ज्ञानादर्शनादेव ततो निवृत्तिरिति न नियमविधिः। प्रत्यक्षमूलात् तदुपदेशादेवान्यस्या-प्रवृत्त्युपपत्तेः। नापि भेदशास्त्रप्रवृत्तिव्यावृत्यर्थो नियम इति पक्षः संभवति। तथा हि - न तावदापातप्रतिपन्नवेदार्थपुरुषं प्रति नियमः। तदा हि भेदाभेदतत्वसन्देहात्तत्वजिज्ञासैव जायेत। ननु भेदनिर्णयो मे भूयादितीच्छा भेदनिर्णयस्य मोक्षसाधनत्वेन ज्ञानात् तदिच्छा जायत इति चेन्न, तत्रापि सन्देहात्।

ननु माभूत्तदंशेऽपि निश्चयः। सन्देहादेव यदि न स्यादिति न्यायेन प्रवृत्तिः स्यादिति चेन्न। तत्सन्देहे विद्यमाने तत्त्वजिज्ञासां विना एतन्निश्चयो मे भूयादित्यन्यतरकोटाविच्छानुदयात्। नापि गृहीतभेदतात्पर्यकवेदान्तं प्रति नियमः। तेनास्यापि भेदतात्पर्यस्यैव ग्रहेण तं प्रत्यस्य वाक्यस्य त्वदुक्तार्थबोधकत्वासिद्धेः।

न च गृहीताभेदतात्पर्यकवेदान्तं प्रति विचारादेव तात्पर्यावधारणेन निर्वृत्तविचारं प्रति विचारविधिवैयर्थ्यात्। किञ्च न्यायवशादेव ह्यस्याः श्रुतेरद्वैतार्थपरत्वं ज्ञायते, न तु वाक्येनैव, अद्वैतं श्रोतव्यमिति वाक्यादर्शनात्। तस्मादिहेव भेदवाक्येऽपि न्यायेनैवाद्वैत-परत्वस्य ज्ञानान्न तन्मूलभ्रान्तिप्रसक्तसाधनान्तरव्यावृत्तिसंभवः।

नन्वेतद्वाक्यप्रवृत्तेः प्रागापातप्रतीत्या भेदवाक्यात् प्रसक्तसाधनान्तरव्यावृत्तिः न्यायावधारिताद्वैततात्पर्येणानेन वाक्येन भवतीति नियमविध्युपपत्तिरिति चेन्न। तथापि विधिपरत्वाभावेऽप्यस्य तन्न्यायादद्वैततात्पर्यावधारणादेव द्वैतपरत्वेन प्रतीयमान-वाक्यस्याप्यद्वैत परत्वनिश्चयेन तन्मूलभ्रमाभावाद्विध्यानर्थक्यात्।

## २. श्रवणस्य विधेयत्वभङ्गः

किञ्चैवं वाक्यार्थभ्रमं [1]निमित्तीकृत्य विध्युत्पत्तौ श्रवणविधेः संकेत-भ्रमाधीनार्थान्तरभ्रमे सति द्वैतात्मविचारप्रवृत्तिव्यावृत्त्यर्थं विध्यन्तरमपेक्षणीयम्। तत्रापि संकेतभ्रमसंभवाद्विध्यनवस्था।

किञ्चैवं पुरुषदशाविशेषमवलम्ब्य विधिप्रवृत्तौ वैतुष्यस्यावहननसाध्यत्वानवबोध-दशामवलम्ब्य व्रीहीनवहन्तीत्यस्याप्यपूर्वविधित्वप्रसङ्गात्। किञ्चात्मदर्शनाय हि आत्मा श्रोतव्य इति नियम्यते। स च प्रकरणादद्वैतात्मैवेति 'आत्मा द्रष्टव्य' इत्यनूदितात्मदर्शने भेदविचारस्याप्राप्तेर्न नियमः। यदुक्तं भ्रमगृहीतसाधनव्यावृत्त्यर्थो नियम इति। अस्त्वेवम्। अथापि यदि नियमेन विना भ्रमनिवृत्तिर्न स्यात्तदा हि नियमः स्यात्। न च नियमेन विना साधनत्वभ्रमो विदलनादेर्निवर्तते। इह तु नियमाभावेऽपि न्यायानुगृहीतैर्ज्ञानस्य मोक्षसाधनताप्रतिपादकवाक्यैरद्वैतविषयज्ञानस्यैव मोक्षसाधनताप्रतिपत्तौ कथं द्वैतज्ञानस्य मोक्षसाधनत्वभ्रमः।

वस्तुतस्तु यदि भ्रमगृहीतसाधनव्यावृत्त्यर्थो नियमस्स्यात्तदा [2]'**उरु प्रथस्व**' इति मन्त्रस्य प्रथनप्रकाशकत्वलिङ्गेन पुरोडाशप्रथने विनियोगे मन्त्रान्तरेऽपि प्रथनप्रकाशकत्व-लक्षणलिङ्गभ्रमात्तस्यापि तत्रैव विनियोगभ्रमेऽनुष्ठेयार्थप्रकाशलक्षणकार्यस्य एकेनैव मन्त्रेण सिद्धौ मन्त्रद्वयं वैकल्पिकमेवेति बुद्धौ सत्यां '**उरु प्रथस्व**' इति पुरोडाशं प्रथयतीति तदर्थशास्त्रं मन्त्रान्तरनिवृत्त्यर्थं नियमविधिरेव स्यान्नानुवादः। तस्मान्न भ्रमगृहीतव्यावृत्त्यर्थो नियमः। किन्तु वस्तुसत्साधनान्तरव्यावृत्त्यर्थः ।

एवञ्च यदि तृणारण्यादिरूपाननुगतकारणेष्वनुगता शक्तिः कारणतावच्छेदकतया इष्यते। तदा नियोगीयव्रीहिष्वप्यवहननसाध्यतुषविमोकं प्रति नखविदलनादेः साधनत्वमस्त्येव, तुषविमोकत्वस्य कार्यतावच्छेदकत्वात्। न च तदनुष्ठानेऽपि रागनिवृत्तिप्रसङ्गः नियमादृष्टाभावात्। यदि च कारणाननुगमे कार्यवैजात्यमेव कल्प्यते तदोद्देश्यतावच्छेदकधर्माधिकरणे [3]वस्तुतः साधनं तदेव नियमनिवर्त्यनियमेन विना ततो

---

[1] क - निमित्तीकृत्य; ख - निवृत्तीकृत्य

[2] **उरु प्रथस्व**, उरु ते यज्ञपतिः प्रथतामिति **पुरोडाशं प्रथयन्** सर्वाणि कपालान्यभिप्रथयति। (तै.सं.१.१.८)(आप.श्रौ.सू.१.२५.३)

[3] क - ख - यद्वस्तुतः; घ - वस्तुतः

निवृत्त्यसंभवात्। [1]उद्देश्यतावच्छेदकभूतले तुषविमोकत्वाधिकरणे क्वचिद्विदलनस्यापि साधनत्वमस्त्येव।

न च [2]मोक्षसाधनता [3]ज्ञानत्वरूपमुद्देश्यतावच्छेदकाधिकरणे भेदविचारस्य साधनत्वमस्ति। ननु नियोगीयतुषविमोकत्वमेवोद्देश्यतावच्छेदकमिति चेन्न, उद्देश्यपदेन प्रवृत्तिद्वयोद्देश्यस्य विवक्षितत्वात्। तथा च नियमाप्रवृत्तिदशायामेतदधिकारिणः प्रवृत्तिद्वय-प्रयोजकेष्टतावच्छेदकधर्मे तात्पर्यम्। स च धर्मस्तुषविमोकत्वमेव नियमात् प्राक् तथैव साधनताज्ञानात्। स च तुषविमोकः सुखत्वेनेष्टत्वेऽपि यथासुखं स्वसंबन्धितया काम्यते, तथा स्वकीयनियोगीयव्रीहिगततया काम्यत इति। तथा गुरुमुखाधीनः स्वतन्त्रविचारो व्यावर्त्य इति पक्षोऽप्यनुपपन्नः, गुरोः श्रोतव्यशब्दार्थानन्तर्भावस्य प्रागेवोक्तत्वात् गुरूपसदनविधिना सिद्धत्वाच्च। यदत्र कैश्चिदुक्तम्। एवं सत्यध्ययननियमोऽपि न स्यात्। 'अष्टवर्षं ब्राह्मणमुपनयीत' इति वाक्यविपरिणामेन 'अष्टवर्षो ब्राह्मण उपगच्छेत्' इति विधेरेव लिखितपाठव्यावृत्तिसिद्धेः। नन्वध्ययनविध्यभावे तदङ्गोपगमविधेरेवाभावान्न तेन लिखितपाठव्यावृत्तिसिद्धिरिति चेन्न, श्रवणविध्यभावे तदङ्गगुर्वभिगमनविधिर्नास्तीति तुल्यत्वात्।

ननु गुरूपसदनस्य [4]'**तद्विज्ञानार्थम्**' इति ज्ञानोद्देशेन स्वतन्त्रविधिरेव न श्रवणाङ्गतयेति चेत् तर्हि [5]'**अष्टवर्षमुपनयीत**' इत्यत्रापि ज्ञानोद्देशेन स्वतन्त्रोपगमविधिः स्यात्। [6]'**संमाननादि**' सूत्रेण नयतेर्ज्ञानार्थे आत्मनेपदस्मरणेन [7]ज्ञानोद्देश्यसंभवात्।

---

[1] क - ख - उद्देश्यतावच्छेदकीभूत; घ - उद्देश्यतावच्छेदकभूतले

[2] क - ख - मोक्षसाधन

[3] क - ख - ज्ञानत्वरूपोद्देश्यतावच्छेदकाधिकरणे; घ - ज्ञानत्वरूपमुद्देश्यतावच्छेदकाधिकरणे

[4] परीक्ष्यलोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन।
**तद्विज्ञानार्थं** स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्टम्।। (मुण्डक.१.२.१२)

[5] गर्भाष्टमेष्टमे वाब्दे ब्राह्मणस्योपनायनम्।
राज्ञामेकादशे सैके विशामेके यथाकुलम्।।
उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम्।
वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत्।।(याज्ञ.स्मृ.१.१४-१५)

[6] संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः। (पाणिनि.सू.१.३.३६)

[7] क - ख - ज्ञानोद्देश; घ- ज्ञानोद्देश्य

## २. श्रवणस्य विधेयत्वभङ्गः

तस्मादुभयत्रापि वाक्यद्वयवैय्यर्थ्यपरिहाराय एकः प्रधानविधिरपरोऽङ्गविधिः। फलश्रवणं तु पर्णतादिफलश्रुतिवदर्थवाद इति स्वीकार्यम्।

किञ्च विधीयमानगुरूपसदनस्यादृष्टद्वारत्वे स्वतन्त्रविचारव्यावृत्त्यसंभवाच्छ्रवण-द्वारा ज्ञानसाधनत्वं वाच्यम्। तथा च श्रवणद्वारकं साधनान्तरमेव व्यावर्त्यं स्यात्। न स्वतन्त्रविचार इति तदर्थो नियमविधिर्युज्यते। किञ्च ज्ञानसाधनत्वेन विधावदृष्टमेव द्वारं स्यात्, न तु श्रवणम्। तस्य प्रागेव ज्ञानसाधनत्वेन क्लृप्तस्य पश्चाद्द्वारत्वेन कल्प्यत्वे कुलालपितृवदन्यथासिद्ध्यापादकत्वेन श्रुतसाधनत्वप्रतिकूलत्वादिति।

उच्यते - ज्ञानोद्देशेनैव गुरूपसदनं विधीयते, न तु श्रवणार्थतया। गुरूपसदनस्य दृष्टलोभादेव श्रवणद्वारकतालाभः। न तु आत्मनेपदमहिम्ना ज्ञानार्थतयोपगमनविधाने दृष्टलोभादध्ययनद्वारकत्वलाभः, संमाननाद्यनेकार्थेष्वात्मनेपदविधाने[१] ज्ञानार्थत्व-निर्धारणाभावात् निर्धारितार्थस्वाध्यायाध्ययनविधेरेव विधायकत्वात्। किञ्चोपनयनस्य याजनवद्रागप्राप्तस्य विधानासंभवात् प्रयोज्यव्यापारोपगमनविधिः कल्प्यः। तच्चात्मने-पदस्याचार्यकरणार्थत्वे तत्र कथं ज्ञानार्थविधिलाभः। किञ्च ज्ञानं धात्वर्थ एव न धात्वर्थफलम्। तथैवोदाहृतत्वात् - नयते चार्वी लोकायते। चार्वी बुद्धिः। तत् संबन्धादाचार्योऽपि। चार्वीज्ञानं प्रमेयनिश्चयः। तत्र प्रमेयं निश्चिनोतीत्यर्थ इति वृत्तिकारः। तेषामेव [२]धात्वर्थादिति दत्तः। तच्छब्देन उत्सञ्जनज्ञानविगणनव्यथा गृह्यन्ते। परिशिष्टानि तु नयत्यर्थः स्वभावानी इति न्यासकारः। अन्ये तु धात्वर्था इति धातुवृत्तिकारः। अन्यशब्देनोत्सञ्जनज्ञानविगणनव्यथा गृह्यन्ते।

किञ्चोपगमनस्य [३]व्यर्थतामङ्गीकृत्य ज्ञानस्य फलत्वधात्वर्थत्वात्मनेपदार्थत्वान्य-तमाङ्गीकारेऽपि नोद्दिश्यविधिसंभवः। प्रथमपक्षे पदाभावात्। इतरयोरेकपदे विध्यौद्देशयोरसंभवात् '**वषट्कर्तुः प्रथमभक्ष**' इतिवत्। किञ्च ज्ञानोद्देशेन विधौ कथमध्ययनविधिः[४] वेदस्य तदर्थस्यान्यस्य वा ज्ञानस्याध्ययननिरपेक्षत्वात्।

यच्चोक्तम् - स्वतन्त्रविचारव्यावृत्तिर्न स्यादिति, तन्न। गुरूपसदनं हि ज्ञानार्थतयैव विधीयते, न तु श्रवणार्थतया। तस्य च नियमविधित्वाज्ज्ञाने साधनान्तरं व्यावृत्तमेवेति

[१] क - ख - घ - विधानेन

[२] क - ख - धात्वर्थत्वादिति; घ - धात्वर्थादिति

[३] क - ख - अप्यर्थतामङ्गीकृत्य

[४] क - ख - सिद्धिः; घ - विधिः

कथं न स्वतन्त्रविचारव्यावृत्तिः। [1]तर्हि पश्चाद्द्वाराकाङ्क्षायां दृष्टलोभेन कल्प्यमानं श्रवणरूपद्वारं नियमविधिसामर्थ्यं विहन्यात्। अवहननमपि हि व्रीह्यर्थतयैव विधीयते, न तु तुषविमुक्त्यर्थतया दृष्टलोभात्तु तद्द्वारत्वं कल्प्यते।

इयांस्तु विशेषः व्रीहीणां स्वरूपतः साध्यत्वाभावात् [2]रूपान्तरप्रतीतेः विधेयावहननसामर्थ्याच्च विमुक्ततुषत्वेनैव साध्यतावगमात्तत्साधनस्यैव व्यावर्त्यतया दैवात् द्वारसाधनव्यावृत्तिसिद्धिः। इह तु ज्ञानस्य स्वरूपेणैव साध्यतावगमात् तत्साधनस्यैव व्यावर्तकतया न द्वारसाधनव्यावृत्तिसंभवः। अन्यथा ऋत्विगानयनार्थं दक्षिणादानं प्रीतिद्वारा न हेतुरिति प्रीतिद्वारकसामाद्युपायान्तरव्यावृत्तिः स्यात्, न तु भीतिद्वारा कार्यौ। मुख्यात्मकानतिहेतुतो दण्डनादेः।

यच्चोक्तम् - अदृष्टमेव द्वारं स्यादिति तन्न। श्रुत्यान्यपूर्ववर्तित्वग्रहं विनैव साधनताबोधनात्। अन्यथा '**साम्ना स्तुवीत**' इति गुणाभिधानलक्षणज्ञानविशेषात्मक-स्तोत्रसाधनतयापि विधिर्न स्यात्। ऋगक्षराभिव्यक्तिद्वारत्वे उक्तरीत्या श्रुतसाधनत्वविरोधापत्तेः।

किञ्चायं हि नियमविधिः, स च साक्षात्परंपरया वा यथालोकं [3]प्राप्यस्य तथैवाप्राप्तांशपरिपूरणफलक इति न तत्रान्यथासिद्धिदोषः। अन्यथा तात्पर्यावधारणानुकूल-चेतोवृत्तिविशेषात्मकत्वदभिमतश्रवणस्यापि क्लृप्तशाब्दज्ञानहेतुताक्ततात्पर्यावधारणद्वारकत्वे कुलालपितृवदन्यथासिद्धेरदृष्टार्थताप्रसङ्गात्।

इतिहासाद्यनुमितवेदान्तव्यावृत्त्यर्थो नियम इत्यपि तेनैवोक्तं दुरुक्तम्। श्रोतव्य इत्यत्र श्रुतिशाब्दान्तर्भावं[4] परिकल्प्य तस्य रूढ्यर्थविवक्षायां वेदमात्रस्यैव श्रुतिशब्दार्थत्वात् [5]अनुमितिश्रुतेः व्यावृत्त्यसिद्धेः। योगविवक्षायां श्रोत्रग्राह्यत्वमात्रलाभाच्छब्दलाभेऽपि वेदान्तानां तत्राप्रवेशात् मूलशैतिल्यपरिहारायानुमितवेदस्य पदार्थस्मृत्यनुपयुक्तस्यार्थ-प्रत्ययकत्वाभावेनाप्रसक्तेः न तत् व्यावृत्यर्थतासंभवः। श्रोतव्य इत्यत्र श्रुतिशब्दान्तर्भावात् स्वातन्त्र्येण पुराणवाक्यं व्यावृत्त्यमिति तदुक्तं निरस्तम्। रण्डागीतादिव्यावृत्तिफलमित्यप्यत

---

[1] क - ख - न हि; घ - तर्हि

[2] क - ख - रूपान्तराप्रतीतेः; घ - रूपान्तरप्रतीतेः

[3] क - ख - प्राप्तस्य; घ -प्राप्यस्य

[4] क - ख - शब्दान्तर्भावम्; घ - शाब्दान्तर्भावम्

[5] क - ख - अनुमितश्रुतेः

## २. श्रवणस्य विधेयत्वभङ्गः

एव निरस्तम्। मनः प्रमाणव्यावृत्त्यर्थो वेदान्तनियम इति पक्षोऽनुपपन्नः, श्रुत्यनन्तर्भावस्य प्रागेवाभिधानात्। किञ्च आत्मा द्रष्टव्यः तदर्थं श्रोतव्य इत्युक्तेर्दर्शनोद्देशेन शाब्दज्ञानविधेरेव[१] प्रतीयेत।

ननु दर्शनोद्देशेन शब्दविधिः यूपोद्देशेन साप्तदश्यविधिवत् देवतोद्देशेन शब्दविध्यङ्गीकारेऽप्यरत्नीनामिव ज्ञानस्य संबन्धद्वारता प्रतीयेत। ततश्च न मनोव्यावृत्तिसिद्धिः। अपि चायं नियमविधिः अप्रवृत्तप्रवर्तनात्मको वाच्यः। 'तव्य' प्रत्ययानुरोधात् नियमविधेरप्रवृत्ते प्रवर्तकता च प्रयोगान्तरे साधनान्तरप्रवृत्तिव्यवच्छेदेन स्वविषयसाधने प्रवर्तकत्वात्। तेनानेन विधिना मनः प्रमाणे प्रवृत्तिरेव व्यवच्छिद्येत, न तु मनसो ब्रह्मसाक्षात्कारकारणत्वम्। न हि नखादीनां तण्डुलसाधनत्वमवहननविधिना व्यवच्छिद्यते।

नापि परिसंख्यापक्षस्संभवति, आवश्यकदेहयात्रानिमित्तस्य विद्योपयोगिनित्य-नैमित्तिकादेश्च व्यापारस्यानिवर्तनीयत्वात्। रागद्वेषादिमूलव्यापारस्य श्रवणे शमदमाद्यङ्गत्वविधानादेव निवृत्तेः। परिसंख्याविधिनिवर्त्यं न किञ्चित्परिशिष्यते।

किञ्च द्विविधो हि परिसंख्याविधिः। एकस्य शेषस्य शेषिद्वयप्राप्तौ एकशेषि-निवृत्तिफलक एकः। यथाग्निचयने लिङ्गात् [२]'**इमामगृह्णन्**' इति मन्त्रे अश्वगर्दभरशनयोः प्रसक्तौ गर्दभरशनातो निवृत्त्यर्थं '**इमामगृह्णन् रशनामृतस्य इत्यश्वाभिधानीमादत्ते**' इति विधिः। एकस्मिन् अन्यशेषिणि [३]शेष्यद्वयाप्राप्तौ शेषान्तर-निवृत्तिफलकोऽपरः। यथा गृहमेधीये पञ्चमे पक्षे प्रकृतितः प्राप्तेषु प्रयाजाज्यभागादिषु प्रयाजादिनिवृत्यर्थ [४]'**आज्यभागौ यजति**' इति विधिः। इह द्विविधोऽपि न संभवति। ब्रह्मदर्शनार्थिनस्तदन्यविषये श्रवणस्य तत्र श्रवणव्यतिरिक्तस्य च प्राप्त्यभावात्। एकस्मिन् शेषिणि समुच्चित्य प्राप्त्यभावेऽप्यन्यनिवृत्तिफलकपरिसंख्याभ्युपगमे '**आज्यभागौ यजति**' इत्यत्राप्यनुपयोगिव्यापारान्तरनिवृत्तिफलकपरिसंख्याप्रसङ्गात्।

---

[१] क - ख - विधिरेव; घ - विधेरेव

[२] **इमामगृह्णन् रशनामृतस्य** पूर्वऽआयुषि विदथेषु कव्या।
सा नो अस्मिन्त्सुत आबभूवऽऋतस्य सामन्त्सरमारपन्ती।। (यजु.सं.२२.२)

[३] क - ख - शेषद्वयाप्राप्तौ; घ - शेषिद्वयप्राप्तौ

[४] यथा **आज्यभागौ यजती**ति गृहमेधीये। (मी.सू.सङ्कर्ष.२.२.११)

किञ्च यथा '**शंय्वन्ता** [१]**प्रायणीया सन्तिष्ठते आज्यभागौ यजति**' इत्यादौ शंय्वन्ताङ्गकलापविधाने तदितराङ्गजातनिवृत्तिरर्थाद्भवति। तेनैव [२]कृतोपकारेण कथमाकाङ्क्षापूरणाच्चोदकाप्रवृत्तेः यथा चाश्वरशनाग्रहणे मन्त्रविधेर्गर्दभरशनातोऽर्थात् निवृत्तिः। नैराकांक्ष्याद्विनियोजकलिङ्गप्रतिबन्धान्न तथेह ब्रह्मदर्शनाय श्रवणविधिबलात् कार्यान्तरार्थं रागतः प्रसक्तव्यापारान्तरनिवृत्तिस्संभवति। एवञ्च 'आत्मा श्रोतव्य' इत्यस्यान्यविषयव्यापारो न कार्य इत्यर्थे लक्षणाश्रयणीया। तथा च सैव दोषः। अन्यथा [३]'**उद्भिदा यजेत**' इत्यादौ मत्वर्थलक्षणया गुणविधित्वसंभवान्नामत्वं न स्यात्। किञ्चैवं न श्रवणविधिरपि त्वन्यनिवृत्तेः। किञ्च ब्रह्मदर्शनार्थमन्यं न [४]कर्तव्यमिति अमत्यविधिर्न संभवति ब्रह्मदर्शनार्थं चरकादिश्रवणाप्रसक्तेः।

न च ब्रह्मदर्शनसाधनतयान्यव्यापारनिवृत्तिसिद्धिः[५]। स्वत एवान्यव्यापाररहितस्य श्रवणादपि ब्रह्मदर्शनासिद्धिप्रसङ्गात्। अप्रसक्तान्यव्यापाराणां निवृत्त्यसंभवात्। न च प्रसक्तोऽधिकारी ब्रह्मदर्शनकामाधिकारताविरहात्[६]।

न च व्यापारान्तरप्रसक्तिब्रह्मदर्शनान्नार्थिता विशिष्टाधिकारः। तथा सति '**परस्त्रीकामः प्रायश्चित्तं कुर्यात्**' इतिवद्विशिष्टनिमित्तकविधित्वप्रसङ्गेन ब्रह्मज्ञानानुपयोगितापत्तेः[७]। किञ्च '**नानृतं वदेत्**' इत्यादावनृतं वदेदित्यंशेन निमित्तं नेत्यनेन विषयः समर्प्यत[८] इति प्रसक्तिनिमित्तकतास्तु। इह तु श्रोतव्य इत्येकेन पदेन इतरव्यापारनिवृत्तिलक्षणान्न निमित्तसमर्पकमन्यदस्ति। श्रोतव्यपदञ्च[९] विषयासमर्पकम्[१०] इति नैमित्तिकतायां मानाभावात्। स्वतोऽप्रसक्तस्य श्रवणादपि ब्रह्मदर्शनासिद्धिस्स्यात्।

---

१ क - प्रायणीया; ख - प्रधाणीया

२ क - ख - क्लृप्तोपकारेण

३ **उद्भिदेष्ट्वा** संवत्सरे वलभिदा यजेत। (आप.श्रौ.सू.२२.११.२०) (ताण्ड्य.ब्रा.१९.७.२.३)

४ क - कर्तव्यमिति; ख - कर्तव्यमित्यपि

५ क - ख - विधिः

६ क - ख - विरोधात्; घ - विरहात्

७ क - ब्रह्मज्ञानानुपयोगिताप्रसक्तेः; ख - ब्रह्मज्ञानानुपयोगितापत्तेः

८ क - ख - समर्थ्यत; घ - समर्प्यत

९ क - पदञ्च; ख - पदं न

१० क - ख - विषयसमर्पकम्; घ - विषयासमर्पकम्

## २. श्रवणस्य विधेयत्वभङ्गः

एतेन [१]एतद्व्यापारप्रसक्तब्रह्मदर्शनकामाधिकारक्तया संवलिताधिकारताशङ्कापि निरस्ता।

एवं फलेऽपि श्रवणादीनां चतुर्णामपि मोक्षः फलमिति माध्वपक्षोऽनुपपन्नः। एकस्याधिकारकल्पितेनैवोपपत्तौ सर्वेषाम् [२]अधिकारकल्पनानुपपत्तेः। न च दर्शपूर्णमास-शब्देनैवैतावच्छब्देन सर्वेषां परामर्शात् समुदितानां फलसंबन्धः तस्यार्थवादत्वेन फलवाक्यत्वाभावादर्थवादस्य च साक्षाद्वा परम्परया वा फलसंबन्धेनाप्युपपत्तेः। अत्र च निदिध्यासनस्यामृतत्वाय विधौ श्रवणमननयोरपि तदर्थतयोपपत्तेः। दुन्दुभेस्तु ग्रहणेनेत्यादिनेन्द्रियनिग्रहस्यापि पूर्वमुपदेशादेतावदिति तस्यापि परामर्शादेवमेव युक्तम्।

एवं दर्शनश्रवणादीनां त्रयाणां फलमिति पक्षोऽपि निरस्तः। दर्शनार्थं निदिध्यासनविधिः श्रवणमननयोस्तदङ्गतेति पक्षोऽप्यनुपपन्नः। दर्शनस्य विधेयताया उक्तत्वात्। शाब्दापरोक्षनिरासादेवापरोक्षज्ञानं नियमफलमिति पक्षो निरस्तः। द्रष्टव्य इति मानससाक्षात्कारो नोच्यत इत्युक्तत्वात् तत्फलत्वपक्षोऽपि निरस्तः। स्वतंत्रविचारो व्यावर्त्य इति मते शक्तिः फलम्। स एवमाह - अपरोक्षशास्त्रार्थविचारत्वेन विचार्य योग्यसाक्षात्कारत्वेन वा विचार्य शास्त्रार्थसाक्षात्कारप्रतिबन्धकासंभावनादिष्वलीकशास्त्र-विचारत्वेनासंभावनादिनिवृत्तिद्वारकविचार्यार्थसाक्षात्कारत्वेन वा गान्धर्वशास्त्रविचारस्य षड्जादिसाक्षात्कारं प्रत्यन्वयव्यतिरेकाभ्यां हेतुत्वकल्पनाद्वेदान्तश्रवणस्यापि ब्रह्मापरोक्षावगमं प्रति साधनतायास्सिद्धत्वाच्छ्रोतव्य इति नियमविधिः। न च नियमाददृष्टसाध्यसंभवः[३] प्रतिबन्धककल्पकनिवृत्त्या मोक्षजननसमर्थस्य श्रवणसाध्यज्ञानस्य तत्साध्यत्वात्। तच्च श्रवणमङ्गीकार्यमानकरणत्वादविद्यानिवर्तनशक्तं हि ज्ञानं काम्यते। तत्रापि न ज्ञानांशे श्रवणं कारणम्[४] अन्योऽन्याश्रयात् श्रवणस्य प्रमाणान्तरतापत्तेश्च। परतः प्रामाण्यापत्तेश्च। किन्तु तद्गताविद्यानिवर्तनशक्तौ सा हि श्रवणात्। प्रागसंभावनादिप्रतिबन्धात् अनुक्तम्[५]। तन्निवृत्तिद्वारा श्रवणेनोत्पद्यत इत्युच्यते। अस्तु तावत् षड्जादिस्थले साक्षात्कारं प्रति शास्त्रविचारस्य प्राप्तिः। तथापि शक्तिं तद्विशिष्टं प्रति वा हेतुत्वेनाप्राप्तत्वान्न तदर्थतया श्रवणनियमस्संभवति।

---

[१] क - ख - इतरव्यापार; घ - एतद्व्यापार

[२] क - ख - अधिकारसंबन्ध; घ - अधिकार

[३] क - ख - साध्यासंभवः; घ - साध्यसंभवः

[४] क - ख - करणम्; घ - कारणम्

[५] क - ख - अनुत्पन्ना; घ - अनुक्तम्

न च तत्रापि शक्तिं प्रत्येव साधनत्वं क्लृप्तमिति वाच्यम्, असिद्धेः। यदि हि विचारात् प्रागविद्यानिवृत्त्यनुपयुक्तं साक्षात्कारमात्रं सिद्धं स्यात् विचारे चाविद्यानिवृत्ति-समर्थं साक्षात्कारः तदा हि तथा स्यात्। तादृशसाक्षात्कारश्च न स्वरूपसाक्षात्कारः। तदज्ञानस्यापि प्रागेव निवृत्तेः। नापि भेदसाक्षात्कारः तस्य प्रागसिद्धेः। सिद्धौ तदज्ञानस्यापि प्रागेव निवृत्तेः। अनिवृत्तावपि परोक्ष इव भेदव्यवहारप्रसङ्गः। इष्टापत्तौ शास्त्रविचारवैयर्थ्यम्। किञ्च शक्तितात्पर्यावधारणस्य चाक्षुषता[1] व्यभिचारान्नाविद्या-निवर्तनशक्तिमात्रे कारणता। किन्त्वन्वयव्यतिरेकाभ्यां तात्पर्यभ्रमनिवृत्तौ तच्च त्वयाप्यङ्गीकृतमेव। तथा च तावन्मात्रेण पर्याप्तौ न विशेषकार्यकारणभावो युक्तः।

न च श्रुतिबलाद्वेदान्तश्रवणं मोक्षजननशक्त्योर्विशेषतः साध्यसाधनभावसिद्धेः नान्यथासिद्धिरिति वाच्यम्। तथा सति गुरूपसदनस्य विज्ञानार्थत्वेन विधानात्। विशेषतः कार्यकारणभावावबोधनाच्छ्रवणद्वारकत्वेऽन्यथासिध्युपन्यासानुपपत्तेः। अपूर्वविधित्व-प्रसङ्गश्च [2]नियमादृष्टयोगोऽपि दुर्वचः श्रवणात् प्राचीनज्ञानस्य परोक्षावधारणात्मकत्वे तत एवाविद्यानिवृत्तेः। तस्य तदभावे च तादृशज्ञानजननसमर्थश्रवणेनैव तादृशज्ञानजननेन[3] तत एवाविद्यानिवृत्तेः।

न च कल्मषनिवृत्तिरपि तादृशज्ञानेऽपेक्षितेति वाच्यम्। मनननिदिध्यासनाभ्यां असंभावनाविपरीतभावनानिरासे सति तादृशज्ञानोत्पत्तेरवर्जनीयत्वात्। न चासंभावना-विपरीतभावनानिरास एव कल्मषनिवृत्तेरुपयोगः। तथा सति नियमादृष्टमुखेन व्रीहिसाध्योपयोगिनोऽवहननस्य व्रीहिष्विव नियमादृष्टमुखेन मननादिसाध्यासंभावना-विपरीतभावनानिरासोपयोगिनो मननादावङ्गत्वप्रसङ्गात्। शब्दस्य ज्ञानकरणत्वेऽपि श्रवणस्य तदसिध्या तेनाङ्गित्वसाधनासंभवात्। शक्तितात्पर्यविशिष्टशब्दज्ञानस्य श्रवणत्वविवक्षायां श्रवणस्य प्रमाणान्तरत्वापादनमसङ्गतम्।

किञ्च विषयफलस्यैव नियमादृष्टफलत्वोक्तावपूर्वविधित्वमनिवार्यं लोक-सिद्धत्वात्। तदनुपपत्तौ विधिरेव न स्यादिति न नियमविधेरप्युपपत्तिः। नियमादृष्टस्य विषयसाध्यफलोपयोगे हि नियमविध्युपपत्तिः। अवहननसाध्यनियमादृष्टेन हि परम्परया व्रीहिसाध्यं परमापूर्वमेव साध्यते। न चात्र तत्संभवः। विषयफलदर्शनसाध्यमोक्षस्य

---

[1] क - ख - चाक्षुषज्ञाने; घ - चाक्षुषता

[2] क - ख - नियमादृष्टोपयोगोऽपि; घ - नियमादृष्टयोगोऽपि

[3] ख - जनकेन

## २. श्रवणस्य विधेयत्वभङ्गः

कर्मसाध्यतया नित्यत्वस्यादृष्टनिवर्त्ततया[1] प्रपञ्चसत्यत्वस्य च प्रसङ्गात् कल्मषनिवृत्तेः साध्यतायामप्यपूर्वविधिता दुर्वारा। अप्राप्तत्वान्निर्विचिकित्सपरोक्षनिर्णयः फलमिति [2]अनुपपन्नम्। द्रष्टव्य इत्यपरोक्षस्यैव श्रवणात्। न च तत्र परोक्षनिर्णयो विवक्षित इति वाच्यम्। तत्र निदिध्यासनस्यानपेक्षितत्वात्। वक्ष्यते च विपरीतभावनाया अवधारणप्रतिबन्धकत्वाभावः। किञ्च यथाश्रुतिदर्शनोद्देशेनैव विधिसंभवात्। न परोक्षनिर्णयलक्षणा युक्ता। न च शब्दस्यापरोक्षज्ञानजनकत्वानुपपत्तेः। सशब्दस्य तदनुपपत्तावपि विधीयमानश्रवणस्यादृष्टद्वारा [3]त्वपरोक्षज्ञानजनकत्वसंभवात्। न च दर्शनं चाक्षुषज्ञानं तद्ब्रह्मणि नेति लक्षणावश्यकीति वाच्यम्। तथापि [4]'**तस्मिन् दृष्टे परावर**' इत्यादिषु बहुशस्तत्र दृष्टप्रयोगत्वात्। अन्तरङ्गलक्षणया चापरोक्षस्यैव लक्ष्यत्वादन्तरङ्गलक्षणानुरोधादेव प्रोद्गातृणां चमसभक्ष इत्यत्र न ऋत्विङ्मात्रलक्षणा न[5] प्रवचनविशेषलक्षणा पुरुषापराधरूपतात्पर्यभ्रमसंशयनिवृत्तिः फलमिति पक्षोऽप्यनुपपन्नः। उपबृंहणस्वतन्त्रविचारादिना भ्रमनिवृत्तौ निवृत्तस्य[6] पुनर्निवृत्त्ययोगेन पश्चात्कृत-श्रवणस्यापि मोक्षाभावप्रसङ्गात्। किञ्चाकारणस्यापि परम्परया प्रयोजकस्य तथा प्राप्तसाधनान्तरपक्षपरिपूरणफलको नियमविधिर्युज्यते। यथार्थज्ञानपक्षेऽध्ययननियमः। यथा च [7]होमक्रियासु मन्त्रनियमस्तदिहापि [8]इष्टव्य इति श्रुतोद्देशेन श्रवणविधिसंभवेऽर्थ-लभ्यपुरुषापराधनिवृत्त्यर्थं नियमविधित्वम् [9]इष्टव्यम् इत्यस्य स्तुतिमात्रत्वञ्च न कल्पयितुं युक्तम्। अर्थलभ्यफ्लार्थतया[10] विधानेऽप्यन्तरङ्गत्वात् तात्पर्यनिर्णयार्थतयैव नियमविधिः स्यात्।

---

[1] क - निवृत्तितया; ख - निवर्त्यतया; घ - निवर्त्ततया

[2] क - घ- अनुपपन्नम्; ख - अप्यनुपपन्नम्

[3] क - ख - अपरोक्ष

[4] **भिद्यते हृदयग्रन्थि**श्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि **तस्मिन् दृष्टे परावरे**।। (मुण्डक.२.२.९)

[5] क - ख - अपि तु

[6] क - निवृत्त्यस्य; ख -घ - निवृत्तस्य

[7] क - ख - होमादि; घ - होम

[8] क - ख - घ - द्रष्टव्य

[9] क - ख - द्रष्टव्यम्

[10] क - पदार्थतया; ख-घ- फ्लार्थतया

किञ्च - द्रष्टव्य इति श्रुतं परित्यज्यार्थलभ्योद्देशेन विधानेऽवघातादिवच्छ्रवणस्य कर्मनिष्ठत्वाद्वेदान्तानां कर्मत्वात् संस्कारकर्मता स्यात्। निदिध्यासनस्य च दर्शनोद्देशेन विधेयतया तदीयसाधनवेदान्तशेषतया निदिध्यासनशेषतापत्तेः। प्राप्तावप्याद्ये पक्षे किमपरोक्षं वस्तुविषयप्रमाणत्वावच्छिन्नस्य साक्षात्कारत्वावच्छिन्नं प्रति हेतुत्वेन प्राप्तिरुत तद्विशेषावच्छिन्नं प्रति। आद्येप्यर्थगतमेवापरोक्ष्यं तद्विषयत्वं ज्ञाने आपरोक्ष्यमिति [१]अभ्युपगमे परोक्षवस्तुविषयकज्ञानजनकत्वावच्छेदेनापरोक्षवस्तुविषयकज्ञानजनकत्वमिति स्यात्। तत्र चात्माश्रयः ज्ञानगतमापरोक्ष्यं तद्विषयत्वमर्थे आपरोक्ष्यमित्यभ्युपगमे आद्यघटसाक्षात्कारो न स्यात्। तदा तस्यापरोक्षविषयत्वाभावादव्यवहितापरोक्षज्ञानविषयी भविष्यद्वस्तुविषयकत्वविवक्षायामद्वैतवाक्ये कारणतावच्छेदकानिर्धारणान्न प्राप्तिसंभवः।

अस्तु तर्हि द्वितीयः - 'दशमस्त्वमसि' इति वाक्ये चक्षुषा गृह्यमाणविषये 'अयं घट' इति वाक्ये चेन्द्रियाजन्यसाक्षात्कारत्वावच्छेदेनेन्द्रियान्यापरोक्षज्ञानविषयीभवद्गोचर-प्रमाणत्वावच्छिन्नस्य हेतुत्वावधारणादिति चेन्न। शबरसंवर्धितराजकुमारस्य दशमो राजकुमार इति वाक्यजन्यज्ञाने [२]साक्षात्कारत्वभावेन तत्र व्यभिचारेणानवच्छेदकत्वात्। तथा च जपासन्निधानात् स्फटिकलौहित्यवदपरोक्षज्ञान-सन्निधानात् दशमस्त्वमसीत्यादौ [३]तत्र भेदाग्रहनिमित्तभ्रममात्रमन्यथा चाक्षुषघटगोचरवाक्ये[४] जनिते ज्ञाने चाक्षुषत्वानुभवात् तदपि स्यात्।

यच्चेदमुच्यते - श्रावणेषु षड्जादिषु समारोपितपरस्पराविवेकनिवृत्त्यर्थगान्धर्व-शास्त्रश्रवणसहकृतश्रोत्रेण परस्परासंकीर्णतद्याथात्म्यापरोक्ष्यदर्शनेन प्रकाशमाने वस्तुनि आरोपिताविवेकनिवृत्त्यर्थशास्त्रसद्भावे तच्छ्रवणं तत्साक्षात्कारजनकेन्द्रियसहकारि-भावेनैवोपयुज्यत इत्यस्य क्लृप्तत्वादिति, तन्न। गान्धर्वशास्त्रस्य षड्जादिपदसंकेत-पदार्थत्वात् भेदग्रहार्थत्वाभावात्। अत एव भूयः श्रुतरागस्य रागभेदं तु जानामि संज्ञाभेदं तु न जानामीति पूर्वरागादयं रागोऽन्य इत्यादिव्यवहारस्तच्छास्त्रपरिचय उपदेशात् संकेताग्रहे च।

---

[१] क - ख - अभ्युपगतमेव

[२] क - साक्षिभावेन; ख - साक्षात्वाभावेन; घ - साक्षात्कारत्वाभावेन

[३] क - ख - तद्भेदाग्रह

[४] क - ख - वाक्येन

## २. श्रवणस्य विधेयत्वभङ्गः

किञ्च - यदि पूर्वं भेदग्रहो न स्यात् तदा षड्जादिपदशक्तिरूपसंबन्धार्थकस्य गन्धर्वशास्त्रस्य[१] अयमिति वैलक्षण्यानुवादेन षड्ज इति पदसंबन्धं बोधयतः कथमयं षड्ज इति श्रौत्रज्ञानजनकत्वम्। वैलक्षण्यविशिष्टोद्देशेन पदसंबन्धविधानाद्वाक्येन प्राक्परोक्षज्ञाने जनिते पश्चात् तादृशवैलक्षण्यं [२]श्रोत्रेण पश्यतः संकेतवाक्यार्थस्मरणात् श्रोत्रेणैव शब्दविधिषु प्रत्यक्षाङ्गीकारे[३] व्यवधानान्न शब्दस्य हेतुताभावनाप्रचयसहकृत-ज्ञानकरणत्वावच्छेदेनापरोक्षज्ञानजनकत्वं प्राप्तमिति तु प्रागेव निरस्तम्।

यत्तु - केनचिदुक्तं श्रोतव्य इति [४]विचारसिद्ध्यभावे [५]"**तरति शोकमात्मवित्**' इत्यादेः विषनिर्हरणादिमन्त्रवदर्थपरत्वाभावाज्ज्ञानस्य मोक्षसाधनत्वासिद्धेः। तदर्थं विचाराक्षेपो न स्यात्। अध्ययनविधेरप्यक्षरग्रहणमात्रपर्यवसायित्वात्। न च कर्मकाण्डेऽप्येवं प्रसङ्गः। तत्र शब्दसामर्थ्यप्रतीतार्थपरत्वे बाधकाभावात् 'तरति शोकम्' इत्यादिश्रुतीनाञ्च प्रत्यक्षविरूद्धार्थत्वेन स्वतः प्रतीतार्थपरत्वायोगात् विचारासिद्धेः श्रोतव्य इति विधिरावश्यक इति।

तदयुक्तम् - तथा सति श्रोतव्य इत्यस्याप्यद्वैतपरत्वे प्रत्यक्षविरुद्धार्थपरत्वेन[६] अविवक्षितार्थत्वस्य वा [७]सद्वितीयत्वश्रवणपरत्वस्य वा प्रसङ्गात्।

ननु '**तरति शोकमात्मवित्**' इत्यात्मज्ञानमात्रस्य मोक्षसाधनत्वं प्रतीयते। अध्ययनमात्रवतः आत्मज्ञानेऽपि [८]प्रयोजनादिदर्शनात् इदमविनक्षितार्थमिति शङ्का स्यात्। श्रवणादिविधौ तु श्रवणादिद्वारोत्पन्नदर्शनमस्य विवक्षितत्वान्न प्रत्यक्षविरोधशङ्कावकाश इति चेन्न। निदिध्यासनविधिमात्रेणापि तादृशशङ्कानुदयाच्छ्रवणादेरनुवादोपपत्तेः।

---

[१] क - ख - शास्त्र; घ-शास्त्रस्य

[२] क - घ - श्रोत्रेणापश्यतः; ख-श्रोत्रेणापश्यतः

[३] क - ख - शब्दविशिष्टप्रत्यक्त्वाङ्गीकारे; घ - शब्दविधिषु प्रत्यक्षाङ्गीकारे

[४] क - ख - विचारविध्यभावे; घ - विचारसिद्ध्यभावे

[५] सोऽहं भगवो मन्त्रविदेवास्मि; नात्मवित्। श्रुतं ह्येव मे भगवद्दृशेभ्यः **तरति शोकमात्मविदिति।** सोऽहं भगवः शोचामि, तं मा भगवाच्छोकस्य पारं तारयत्विति। तँ होवाच यद्वै किञ्चैतदद्यगीष्ठाः, नामैवैतत्। (छा.उ.७.१.३)

[६] क - ख - प्रत्यक्षविरुद्धार्थत्वेन

[७] क - ख - सद्वितीय

[८] क - प्रयोजनाभावादिदर्शनात्; ख - प्रयोजनादर्शनात्; घ - प्रयोजनादिदर्शनात्

यच्च भामत्युक्तं काण्डद्वयविचारोऽप्यर्थावबोधपर्यन्ताध्ययनविध्याक्षिप्त इति। तदप्यनुपपन्नम्। [१]अर्थावबोधार्थस्य वाक्यादप्रतीतेः स्वाध्यायार्थताया एवाध्ययनस्य तव्य प्रत्ययेन स्वरसतः प्रतीतेः। संभवति च प्राप्तेस्साक्षादध्ययनफलत्वेन स्वाध्यायस्य प्राप्यतया साध्यता। न च तत्प्राप्तेरपुरुषार्थत्वादर्थज्ञानार्थता। अर्थज्ञानस्यापि तादृशत्वात् प्रणाड्याप्रयोजनपर्यवसानमुभयत्र तुल्यम्। न चाध्ययनविधेरर्थज्ञानपर्यन्तत्वाभावे वेदस्यार्थबोधकत्वे मानाभावः। इन्द्रियाद्यध्ययनविधायकमानस्यैवात्रापि मानत्वात्। न हि तत्र किञ्चिद्वाक्यान्तरमपेक्ष्यते। तथा सत्यनवस्थाप्रसङ्गात्। किन्त्वन्वयव्यतिरेक-दर्शनमेव तत्र मानं तदेवेहापि। एतेन बोधकत्वेऽपि तात्पर्ये मानाभाव इति शङ्कापि निरस्ता। स्वतः प्राप्तार्थपरत्वस्याध्ययनविधिवदेवोपपत्तेः।

किञ्चाध्ययनस्य स्वर्गार्थतया विधानेनार्थकर्मत्वे प्रयोजनान्तरस्य लब्धत्वादर्थ-परत्वाभावशङ्का स्यादपि। इह तु तव्यप्रत्ययेन गुणकर्मत्वात् प्रयोजनपर्यवसानार्थ-मध्ययनगृहीतस्वाध्यायेनैव स्वाध्यायकार्यं जपं कृत्वानुष्ठानादिकं[२] कुर्यादित्यर्थपर्यवसानान्न [३]विवक्षितार्थताप्रसङ्गः।

ननु वाक्यस्य [४]विवक्षाया ह्यर्थपरत्वम्। अत एव करणापाटव-जन्यविवक्षितान्यानुपूर्वकं[५] दैववशसंपन्नवाक्यस्यार्थपरत्वाभावः। श्वेतो धावतीत्यश्वविषय-वाक्यस्य श्वगोचरत्वाभावश्चातो विवक्षास्थानीयं वेदे किञ्चिदर्थपरत्वप्रयोजकं वाच्यम्। तादृशस्यान्यस्यालाभादर्थज्ञानोद्देशेनाध्ययनविधिरेव वाच्य इति चेन्न। उक्तोत्तरत्वादध्ययन-विधिवदेवोपपत्तेरिति। तस्माद्वाक्यस्यार्थपरत्वं स्वाभाविकम्। तद्विशेषपरत्वं लोके विवक्षया वेदे तु न्यायेन कथञ्च वेदान्तिनोऽस्मान् प्रति विवक्षाभाव उद्भाव्यते ईश्वरविवक्षायास्सत्वात्। अत एव '**श्रुतिस्मृती ममैवाज्ञा**' इत्युक्तम्। किञ्च प्रमाणानुसारी हि प्रयोजनाङ्गीकारः न तु [६]विहितं तदनुसारि प्रयोजनञ्च परम्परया पुरुषार्थ-पर्यवसायिन्याप्तिरेवेति। अथ स्यात् वाक्यस्यैकमेव प्रयोजनमुत्सर्गः। क्वचिच्छेषादौ विवक्षावशादनेकार्थपरत्वम्। अतो जपविनियोजकवाक्येन तत्र विनियुक्तस्य स्वाध्यायस्य

---

[१] क - ख - अर्थावबोधार्थत्वस्य

[२] क - कार्यं जपं कृत्वानुष्ठानादिकम्; ख - घ -कार्यजपक्रत्वनुष्ठानादिकम्

[३] क - ख - अविवक्षितार्थताप्रसङ्गः

[४] क - विवक्षया; ख - घ - विवक्षाया

[५] ख - विवक्षितान्यानुपूर्विक

[६] क - ख - विपरीतम्; घ - विहितम्

## २. श्रवणस्य विधेयत्वभङ्गः

तेनैव प्रयोजनेनावर्जनीयेन चरितार्थस्य विधिं विना नार्थपरत्वसंभवः। जपविनियोजकवाक्यस्य तु स्वप्रवृत्तेः प्राक् स्वस्य विनियोगाभावेन नार्थपरत्वक्षतिः। अनन्तरमपि न स्वात्मन एवार्थपरत्वं हन्तीति चेन्न, दत्तोत्तरत्वादेवाध्ययनविधिवदेवोपपत्तेरिति। तस्माद्वाक्यस्यैकार्थपरत्वमेवौत्सर्गिकं नत्वेकप्रयोजनकत्वम्।

किञ्च [१]जपविधौ 'यं यं क्रतुमधीते तेन तेनास्येष्टं भवति' इत्यर्थवादे तत्तत् क्रतुफलं [२]ततस्तुतिवादकभागाध्ययनेन सिध्यतीति प्रतीतेर्विवक्षितार्थत्वं वेदस्यावगम्यते। व्याकरणादीनां वेदाङ्गानां दृष्टार्थत्वानुरोधाच्च वेदस्यार्थपरत्वमवर्जनीयम्। तस्मान्न्यायावगम्यार्थविशेषपरत्वं परमेश्वरविवक्षावतः स्वाध्यायेन साधयितुं योग्यार्थावबोधजपद्वारा पुरुषार्थपर्यवसाय्यध्ययनविषयस्य स्वाध्यायस्य व्याकरणाद्यङ्गकस्य न कथञ्चिदप्यर्थपरत्वाभावशङ्कावकाशः। किञ्चार्थज्ञानकामनाधिकारत्वे अन्योऽन्याश्रयः। यागादेस्स्वर्गसाधनत्वे सिद्धे हि तदुपयोग्यर्थज्ञानकामानुवादेनाध्ययनविधिः। तत्सिद्धौ च यागादेः स्वर्गसाधनत्वसिद्धिः।

किञ्चार्थज्ञानकामाधिकारकत्वे बालस्य हितैषिभिरनुष्ठापितमध्ययनं तस्यार्थज्ञानकामनाविरहादनधिकारिणा कृतत्वात् फलार्थं न स्यात्। तथा च नियमादृष्टासिद्धिः। नित्यनैमित्तिकेषु हितैषिवचनात् प्रवृत्तौ फलं संभवत्येवाधिकारसत्वात्।

ननु नियमविधिर्ह्ययमध्ययनविधिः। स च प्राप्तावेव प्राप्तिश्चार्थज्ञानकामनया [३]अध्ययनेऽप्यत्र च प्रवृत्तावेव। अतोऽर्थज्ञानकामं प्रत्येवाध्ययनविधिप्रवृत्तेरर्थज्ञानकामाधिकारतत्वमवर्जनीयम्। अतः हितैषिवचनात् प्रवर्तमानोऽध्ययनविध्यधिकारीति चेन्न। अध्ययननियमविधेः प्राप्त्यर्थमर्थज्ञानोपजीवनेऽपि अधिकारार्थं तदुपजीवनाभावात् क्वचिदधिकारिणि प्राप्तिमात्रादेव सर्वाधिकारिषु नियमविधिप्रवृत्तेः[४] हितैषिवचनात् प्रवर्तमानमध्ययनविधिरधिकरोत्येव। अत एव नखादेर्वैतुष्यसाधनता ज्ञानविधुरमपि हन्ती विधिरधिकरोति। कस्तर्ह्यध्ययनविधेरधिकारः यो हितैषिवचनात् प्रवर्त्तमानेऽपि स्यात्

[१] क - ख - जपविधावेव; घ - जपविधौ

[२] क - ख - तत्तत्प्रतिपादक; घ - ततस्तुतिवादक

[३] क - ख - अध्ययनेऽन्यत्र; घ -अध्ययनेऽप्यत्र

[४] क - प्रवृत्तेः; ख - प्रवृत्ते

जीवनमेवेति ब्रूमः। तल्लाभश्च [1]नित्यविधीनां जीवनाधिकारकत्वात् तदनुष्ठानस्याध्ययनाधीनार्थज्ञानसाध्यत्वाच्च।

न च जीवनाधिकारत्वे सर्वदानुष्ठानप्रसङ्गः। संस्कारकर्मत्वात् तत्सिद्ध्या तन्निवृत्तेराधानवत्। अपि चाध्ययनजन्यार्थज्ञानमूलानुष्ठानस्यैव सप्रयोजनत्वस्य नियमविधिसिद्धत्वादध्ययनस्याधीताध्ययनविधिमूलत्वाभावेनाध्ययनमात्रमनर्थकमेव स्यात्। न च सिद्धान्तेऽपि साम्यं शङ्क्यम्। स्वाध्यायस्याध्ययनविधिनाध्ययनसंस्कार्यत्वे [2]स्वरसतोऽवगतेः संस्कृतस्य तस्योत्तरत्रोपयोगाकाङ्क्षायां यत्रार्थज्ञानमुखेनोपयोगः संभवति, तत्र तथोपयोगे यत्र जपोपयोगस्संभवति, तत्र जपोपयोगे चाङ्गीकार्ये होमादेरध्ययनविधेश्च संस्कृतस्य स्वाध्यायस्य जप एवोपयोगसंभवात् अत्रार्थज्ञानमुखेनानुष्ठेये असंभवात्।

न च पूर्वपक्षेऽपि साम्यं शङ्क्यम्। तत्र हि येन यत्साधयितुं शक्यते जपोऽर्थावबोधो वा तत्कामस्तदधीयीतेत्यर्थः। ततश्चाध्ययनविधिनार्थावबोधः साधयितुं शक्यत एवेति। तत्कामस्यैव तदध्ययनाधिकारितया नियमाधीनः पूर्वोक्तदोषो दुर्वारः। अथ विध्यन्तरोपयोगि यदनेन कर्तुं शक्यं न तेन कुर्यादित्यर्थः। अध्ययनविधिवाक्याध्ययनेनापि जपविध्युपयोग्यक्षरग्रहणं कर्तुं शक्यमेवेति [3]किं तद्वाक्यापेक्षयाभिन्नविधित्वं विवक्षितम्, स्वाध्यायविध्यपेक्षया। नाद्यः, क्रतुविध्यर्थज्ञानस्य तदपेक्षया विध्यन्तरोपयोगित्वाभावात्। द्वितीये स्वाध्यायविध्यपेक्षया भिन्ननिषेधविध्यर्थनिवृत्त्यनुष्ठानोपयोग्यर्थज्ञानस्य निषेध-वाक्याध्ययनशक्यतया तदर्थज्ञानं तद्वाक्याध्ययनेन कुर्यादिति पर्यवसानादनधीततद्वाक्यस्य निषिद्धनिवृत्त्या प्रत्यवायपरिहारो न स्यात्। न चेष्टापत्तिः। निषेधवाक्य एवार्थादवगोरणाद्यर्थानुष्ठानस्य प्रत्यवायसाधनतावगमात् तदभावे प्रत्यवायासंभवात्।

ननु सिद्धान्तेऽपि दूषणं समानमेवाधीतेन निषेधविधिनार्थज्ञानस्य साधयितुं शक्यत्वादिति चेन्न। यत्र नियमस्संभवति तत्रैव विधिप्रवृत्त्यङ्गीकारात्। न च तथा त्वया वक्तुं शक्यम्। त्वन्मते नियमविधेरसंभवात्। अर्थज्ञानोद्देशेन विधेः प्राग्विवक्षितार्थत्व-ज्ञानाभावाद्विधेः प्राक् प्रवृत्तेरेवासिद्ध्या नियमविध्यसंभवात्।

---

[1] क - घ - नित्यविधीनाम्; ख - नित्यविधिना

[2] क - घ - स्वरसतोऽवगते; घ - स्वरसतोऽवगतेः

[3] क - ख - चेत्तत्र किं

## २. श्रवणस्य विधेयत्वभङ्गः

ननु चैतद्वाक्यं विनापि कस्यचिद्धेत्वन्तरेण विवक्षितार्थताज्ञाने सति तादृशं पुरुषमादाय विधिसंभवान्न [1]नियमविधिसंभव इति चेत् तर्ह्यन्यतस्सिद्धविवक्षितार्थत्वस्यैतत् विधिनोपजीवने एतद्विधिबलादेव विवक्षितार्थतेत्येतदनुपपन्नम्। तद्वदेव पुरुषान्तरस्यापि तज्ज्ञानसंभवान्न तदर्थो विधिः।

ननु पुरुषविशेषं प्रति विवक्षितार्थत्वज्ञानार्थं विधिरिति [2]ब्रूमः। किं तर्हि विवक्षितार्थत्वस्य प्रामाणिकत्वसिद्धय इति चेन्मैवम्। न हि प्रामाणिकत्वसिद्धये प्रमाणकल्पनमस्ति। किन्तु प्रमाणानुसारात् प्रमेयाङ्गीकारः।

ननु न वयमर्थसिद्धये प्रमाणं कल्पयामः। किन्त्वध्ययनविधेः प्रयोजनाकाङ्क्षायां दृष्टलोभेनार्थज्ञानकामाधिकारकत्व एव विधेस्तात्पर्येण प्रमाणसत्वात् विवक्षास्तीति त्वन्मते त्वेतदनङ्गीकारान्न विवक्षायां प्रमाणमस्तीति चेन्न, आप्तेरेव फलत्वादित्युक्तत्वात्। प्रयोजनसन्निकर्षादर्थज्ञानस्य फलत्वे व्यापित्वात् सन्निकर्षाच्च जपादिरूपोच्चारणस्यैव फलत्वप्रसंगात्। तस्मादध्ययनविधिवाक्यमयोग्यार्थमेव स्यात्।

यद्वा स्तोभादिव्यापकत्वाज्जपादिरूपोच्चारणमेव स्वाध्यायसिद्धेः फलम्। नार्थज्ञानम्। एवञ्चास्मिन् पक्षेऽधीतो मन्त्रः प्रयोज्यः। क्रतुषु स एव च जप्य इति सिद्ध्यति। अधीतविधिजन्यार्थज्ञानमेव क्रत्वनुष्ठानोपयोगीति न सिध्यति। यच्च दृष्टत्वादर्थज्ञानं फलमिति तन्न। व्यापकेन विधानादावश्यकेन जपादिरूपोच्चारणेनैव चारितार्थ्येनार्थज्ञानफलत्वाकल्पनात्।

ननु स्वाध्यायस्योद्देश्यत्वे स्वत्वविशेषणमविवक्षितं स्यात्। ततश्च कृत्स्न-शाखाध्ययनविधिः प्रसज्यत इति चेन्न, तत एव स्वत्वविशेषणविवक्षालाभात्।

ननु उपयोक्ष्यमाणाध्यायस्यैव संस्कारविधानान्न सर्वशाखाध्ययनप्रसङ्ग इत्यशक्यविधानाभावान्न विशेषणविवक्षेति चेन्न। सर्वासामपि शाखानामुपयोगयोग्यत्वात् वेदपारायणस्याभ्युदयहेतुत्वात्।

---

[1] क - ख - नियमविध्यसंभवः; घ - नियमविधिसंभवः

[2] क - घ - ब्रूमः; ख - न ब्रूमः

नन्वध्ययनानन्तरं [१]'**अधीत्य स्नायात्**' इति स्नानविधानात् तत्काले मीमांसाया नावकाशः क्रमबाधप्रसङ्गात्। नापि स्नानानन्तरं [२]वारग्रहणस्य [३]एवं कर्तव्यत्वात्। नापि तदनन्तरमग्निहोत्राद्युपरोधप्रसङ्गात्। अतोऽर्थज्ञानोद्देशेन विधिः स्वीकार्य इति चेन्न। यदि सर्वथा नावकाशस्तदा क्रतुविधिप्रसादलभ्योऽवकाशः। स चानियतस्सामग्र्यैव नियाम्यः। क्रमस्य पदार्थधर्मत्वात्तावन्मात्रबाधेन स्नानात् प्रागेव वावकाशः। वस्तुतस्तु न तस्यापि बाधः कल्प्यः तस्यैवासिद्धेः। क्रमो ह्येकप्रयोगान्तर्गतपदार्थधर्मोऽङ्गमेकप्रयोगश्चैक प्रयोजनवशीकारात्। सोऽप्यङ्गाङ्गिभावापन्नानामेकानुबन्धान्तर्गतानां चाध्ययनस्नानयोः एतद्भावात्[४] न क्रमसंभवः। अतः क्रमस्याविवक्षितत्वान्न तद्रूपाङ्गबाधः आनन्तर्यमात्रस्य विवक्षितत्वात्। न चाव्यवहितानन्तर्यमर्थः पूर्वकालत्वमात्रे विधानात् गार्हस्थ्येऽपि नावकाशाभावः। प्रवक्तुरवकाशस्यैव श्रोतुरवकाशत्वादन्यथार्थज्ञानोद्देशेन विधावपि कथं क्रमाविरोधः[५]। न ह्यर्थज्ञानमाप्तिकर्मव्यवहितं कर्मसमवेतमेकफलावच्छिन्नानेकक्रियाक्षण-निचयरूपधात्वर्थावच्छेदकं फलमिति वक्तुं शक्यम् येन तत्सिद्धावेवाध्ययननिर्वृत्तिः स्यात्। किन्तु स्वर्गादिवत् साङ्गप्रधानानुष्ठानफलम्।

ननु फलार्थत्वाद्विचारस्य स्वफलसिद्धये विधिरेव विचारः प्रयुक्त इति चेन्न। न ह्यत्रानुष्ठापकत्वं करौप्रगृह्यकारयितृत्वम्। किन्तु चिकीर्षाप्रयोजकेच्छाविषयत्वम्। तच्च [६]वाक्यस्यैव साधनं प्रति स्यादारादुपकारकस्यापि परमापूर्वमेव तत्साध्यत्वादनुष्ठापकम्। अतोऽर्थज्ञानस्यैव विचारप्रयोजकत्वं न त्वध्ययनस्य तद्विधेर्वा।

ननु गुणकर्मणोर्यत्फलं तदसिद्धौ न तद्विध्यर्थनिर्वृत्तिः। अतः तत्फलनिर्वर्तकेऽपि तद्विधेस्तात्पर्यमस्त्येव। अत एवावहननविधेः फलीभूतवैतुष्यनिर्वर्तकावहननावृत्त्यनुष्ठाप-कत्वमिष्यते। एवञ्चाध्ययनविधेः स्वारसिकगुणाकर्मत्वानु-सारेणैवार्थज्ञानकामोऽध्ययनेनैव स्वाध्यायं प्राप्नुयादित्यर्थाङ्गीकारात् गुणकर्माध्ययनफलभूतार्थज्ञाननिर्वर्तक-विचारानुष्ठापकत्वं युज्यत एवेति चेन्न। कर्मणां व्रीहीणां साध्यतोपयोगिवैतुष्य-

---

[१] **वेदमधीत्य स्नायात्**, प्रागुदयाद्व्रजं प्रविश्यान्तर्लोमा चर्मणा द्वारमपिधायास्ते। (आप.गृ.सू.५.१२.१)(बो.गृ.सू.२.६.१)

[२] क - ख -दार; घ - वार

[३] क - ख - एव

[४] क - ख - एतदभावात्; घ - एतद्भावात्

[५] क - ख - क्रमविरोधः; घ - क्रमाविरोधः

[६] क - ख - साध्यस्यैव; घ - वाक्यस्यैव

## २. श्रवणस्य विधेयत्वभङ्गः

निवर्त्तकावृत्तितात्पर्यकत्वं[१] व्रीहिविधेर्युज्यत एव। अर्थज्ञानं तु न कर्मसाध्यतोपयोगि। साक्षात्स्वाध्यायसंबन्धिप्राप्त्यैव हि तत्सिद्धिः। अपि चायं प्राप्तिगोचरः नियमविधित्वादतो न प्रयोजकः। अप्राप्तांशपरिपूरणफलत्वेऽपि क्वचिदेव प्रयोजकता स्यात्। निष्कर्षे तदपि न स्यात्। अप्राप्तांशपरिपूरणेन क्रत्वाद्यर्थमपेक्षितार्थज्ञानमात्रेऽध्ययनस्य साधनत्वावगमात् नियमादृष्टस्याप्यध्ययनसाध्यत्वावगमाच्च। अन्यत्र क्रत्वाद्यपेक्षितार्थज्ञानसाधनताबुद्धि-निवृत्तेरध्ययनस्य लोकसिद्धसाधनताग्रहादेव प्रवृत्तेः नाध्ययनस्याप्यध्ययनविधिरनुष्ठापकः। विचारानुष्ठापकत्वं तु दूरे। एवञ्च नियमविध्यधीनव्याप्तिबुद्ध्यैवेतरेषां साधनत्वबुद्धि-निवृत्त्या लोकतः साधनताग्राह्यस्य[२] सर्वत्र प्रवर्तकत्वमितीमामेव कथञ्चित् प्रयोजकतामध्यापनविधिव्यावृत्तामभिप्रेत्याध्ययनस्य स्वविधिप्रयुक्तत्वानुग्रहो भगवतः लिङ्गादपि श्रुतेश्शीघ्रतया तत एव तादर्थ्यावगमात् लिङ्गमनुवाद इत्यभिप्रायेण वा। अस्मिन् पक्षेऽध्ययनविध्यभावप्रयुक्तमननुष्ठानमध्ययनेऽपि नास्ति। कुतो विचारे स्वव्यतिरेकप्रयोज्यव्यतिरेकप्रतियोगिविचारानुष्ठापकत्वं तु रागस्यैवेति बोध्यम्। एतेनार्थकर्मत्वेऽपि [३]प्रयोजनाभावतव्यप्रत्ययस्वारस्य भङ्गेनार्थकर्मत्वाङ्गीकारोऽपि निरस्तः। न हि सक्तुवद्विनियोगाभावो वा तुलाभारादिहिरण्यानां भरणवदशक्तिर्वास्ति येन सक्तुं जुहोति हिरण्यं भार्यमितिवत् स्वारस्यभङ्गेनार्थकर्मता स्यात्। अस्ति हि स्वाध्यायस्य जपार्थज्ञानयोरुपयोगः शक्यञ्च स्वाध्यायाध्ययनम्। एवं श्रोतव्य इति न विधिः विचारप्रवृत्तिश्च रागादेवेति स्थितम्। एवं 'श्रोतव्य' पदस्य श्रवणशब्दसमानार्थतां मन्वानाश्श्रोतव्यशब्दार्थेऽपि विवदन्ते। अयमस्य वाक्यस्यार्थ इति प्रतिवाक्यं गुरुमुखाद्वाक्यार्थावधारणमर्थ इति केचित्। अन्ये तु शक्तितात्पर्यावधारणमिति। अपरे तु गुरुमुखानधीनमेतदेवाहुः। परे तु तदनुकूलचेतोवृत्तिरिति। तत्वभेदस्तु[४] अयमर्थः श्रुत इत्यादिप्रयोगाच्छाब्दज्ञानमेव श्रोतव्य शब्दार्थः। आपातप्रतीतो[५] विधेयनिदिध्यासनं प्रत्यन्तरङ्गत्वात् [६]विध्यर्थनिर्धार्यत्वरूपगुणमुखेन स्तुत्युपपत्तेश्च श्रोतव्य इति शाब्द-निर्धारणमनूद्यते। निर्धारणस्य विचाराधीनत्वादार्थिको विचारलाभः। तस्माच्छाब्दज्ञानमात्रं

---

[१] क - तात्पर्यकत्वम्; ख - तात्पर्यकत्वात्

[२] क - ख - साधनताग्रहस्य; घ - साधनताग्राह्यस्य

[३] क - ख - प्रयोजनाभावात्; घ - प्रयोजनाभावः

[४] क - ख - तत्वविदस्तु; घ - तत्वभेदस्तु

[५] क - ख - आपातप्रतीतोऽपि

[६] क - ख - विचार्य; घ - विध्यर्थ

श्रोतव्यशब्दार्थः। गुरुमुखश्रुतिशक्तितात्पर्यतन्निर्धारणानुकूलमनोव्यापाराणामशब्दार्थत्वात् गुरुमुखात् न्याययुक्तवेदार्थावधारणं लक्षणया श्रवणशब्दार्थः। अनुवादे यथा प्राप्त्यनुवाद इति विधिरागाधीनस्य गुरुमुखात् न्याययुक्तवाक्यार्थ-निर्धारणस्यानुवादेऽपि न दोष इत्यनुगृह्णन्ति। 'मन्तव्य' इति च ज्ञानमात्रवाचित्वेन विशेषवाचित्वाभावात् श्रवणप्रतिष्ठार्थं श्रवणदशाभाविगुरुमुखाधीनविचारैः स्वमनीषा-सिद्धतर्कसहितैः तैर्वा पुनः पुनश्चिन्तनेन स्वयमेव एवमेव युक्तमिति यन्निर्धारणं प्राप्तं तदनूद्यते। अनुवादस्य च प्रोयजनं विषयमुखेन विधेयनिदिध्यासनस्तुतिः शक्तितात्पर्यावधारणाधीनो वाक्यादर्थनिर्णयश्रवणमर्थानुपपत्तिपरिहारेण श्रुतार्थप्रतिष्ठापनं द्वितीयाध्याये क्रियमाणं मननमित्यपि विभजन्ते।।

## इति श्रवणस्य विधेयत्वभङ्गः।।

## ३. साधनचतुष्टयपूर्ववृत्तत्वभङ्गः

[१]'**परीक्ष्य**' इत्युक्त्या '**तद्विज्ञानार्थम्**' इत्युक्त्या च कर्मनिर्धारणस्य ब्रह्मनिर्धारणस्य च प्रतीतेः। '**नास्त्यकृतः कृतेन**' इति '**निर्वेदमायात्**' '**तद्विज्ञानार्थम्**' इत्युक्त्या ब्रह्मज्ञानेऽनन्तस्थिरफलरूपब्रह्मप्राप्तिसाधनतावगमप्रतीतेश्च। कर्मणामल्पास्थिर-फलत्वनिर्णयसहितब्रह्मज्ञानानन्तस्थिरफलत्वापातप्रतीतिः। ब्रह्मविचारपूर्ववृत्तेत्यवगमात् साधनचतुष्टयं पूर्ववृत्तत्वं निरस्तम्। ब्राह्मणः परीक्ष्य निर्वेदमायात्तद्विज्ञानार्थमिति स्वाध्यायाध्ययनस्य कृत्स्नमीमांसां प्रति पूर्ववृत्तत्वं कर्ममीमांसायाः ब्रह्ममीमांसां प्रति पूर्ववृत्तत्वम्। तस्यास्तां प्रति हेतुभावे द्वारमिति हि स्वरसतोऽवगम्यते। आह मुमुक्षाधिकारिविशेषणं तत्र हेतुश्शमदमादिः। तत्र इहामुत्रार्थफलभोगविरागः। तत्र नित्यानित्यवस्तुविवेक इति। तत्र वेदान्तार्थस्य विचारात्प्राक् निर्णयान्न मुमुक्षा समीचीना संभवति। किन्तु यदि ब्रह्मज्ञानानन्तस्थिरफलं लभ्येत, तदा मया तेन तत्साधनीयमिति बुद्धिः परमपुरुषार्थानिर्णयादेव न शमादिरिहामुत्रार्थविरागो वा संभवति।

यदत्राह नवीनः - न तावन्नित्यानित्यवस्तुविवेकासंभवः। आमनुष्यादाब्रह्मलोकं कर्म कार्यञ्च सर्वमनित्यं घटादिवत्। [२]'**तद्यथेह कर्मचितो लोकः क्षीयते**' इति श्रुतेश्चेति न्यायानुगृहीतस्पष्टश्रुत्यैव विचारात् प्रागेव कर्मफलस्यानित्यत्वावधारणसंभवादात्मा च नित्य इत्यवगम्यते। अन्यथा कस्यापि मते मोक्षाय प्रवृत्त्यसंभवात्। तस्यानन्दरूपत्वमपि परमप्रेमास्पदत्वात् [३]'**आनन्दाद्ध्येव खल्विमानि**' [४]'**एषोऽस्य पर आनन्द**' इत्यादिवाक्याच्च निश्चीयते। 'एष परमात्मा अस्य जीवस्यानन्दः' इत्यर्थः।

---

[१] **परीक्ष्य** लोकान् कर्मचितान् ब्राह्मणो **निर्वेदमायात्**।
**नास्त्यकृतः** कृतेन **तद्विज्ञानार्थं** स गुरुमेवाभिगच्छेत्।। (मुण्डक.१.२.१२)

[२] **तद्यथेह कर्मचितो लोकः क्षीयते**, एवमेवामुत्र पुण्यचितो लोकः क्षीयते। तद्य इहात्मानमनुविद्य व्रजन्त्येतॉंश्च सत्यान् कामान्, तेषाँ सर्वेषु लोकेष्वकामचारो भवति। अथ य इहात्मानमनुविद्य व्रजन्त्येतॉंश्च सत्यान् कामान्, तेषाँ सर्वेषु लोकेषु कामचारो भवति।। (छा.उ.८.१.६)

[३] आनन्दो ब्रह्मेति व्यजानात् **आनन्दाद्ध्येव खल्विमानि** भूतानि जायन्ते। आनन्देन जातानि जीवन्ति आनन्दं प्रयन्त्यभिसंविशन्तीति। (तै.उ.३.६.)

न चैवं विचारानारम्भप्रसङ्गः, अन्यस्याप्येवं निश्चेतुं शक्यत्वादिति वाच्यम्। यत्र हि मानान्तरविरोधो वर्तते तद्विशब्दश्रवणमात्रान्न निश्चेतुं शक्यम्। अद्वैतसमन्वयश्च[2] तत्पूर्वपक्षन्यायमानान्तरादिना प्रथमं विरुद्धतया प्रतीयत इति वाक्यमात्रान्निश्चेतुं शक्यते। ब्रह्मणो नित्यानन्दरूपत्वं तु न मानान्तरेण विरुद्धतया प्रतिसन्धीयत इति तच्छब्दादेव निश्चेतुं शक्यते। न हि परमात्मनस्सुखाभेदे प्रत्यक्षविरोधोऽस्ति। न चानित्यसुखस्य नित्यार्थाभेदविरोधः। अनुकूलतर्काभावेन सुखमात्रेऽनित्यत्वावधारणायोगात् सौषुप्तिक-सुखावमर्शदर्शनेन जीवसुखस्यापि नित्यतया तद्विनाशबुद्धेरन्यविषयत्वावधारणसंभवात्।

किञ्च येन यदेक न्यायेन निश्चितं तेनेतरदपि न्यायेन निश्चेतव्यमिति न नियमः। पुरुषाणाञ्च विचित्रबुद्धितया न्यायानां चालौकिकविषयतयातिसूक्ष्मत्वात् तन्नियमानुपपत्तेः। अन्यथा धूमाग्न्योर्व्याप्तिस्सर्वैरेव गृहीतेति सर्वापि व्याप्तिरेवं ग्राह्येति[3] वैशेषिकादि-ग्रन्थान्तरसंरम्भो व्यर्थ एव स्यात्। एतादृश एव पुरुषोऽस्मिन् शास्त्रेऽधिकारी।

तदुक्तम् - '**नात्यन्तमज्ञो नोत ज्ञः सोऽस्मिंच्छास्त्रेऽधिकारवान्**' इति। एवञ्च ब्रह्मसुखस्य जीवसुखस्य च नित्यत्वं तदितरभोगानाञ्चानित्यत्वं सुनिरूपणम्। ततो वैराग्यम्। ततश्शरीरेन्द्रियचेष्टाया मनोवृत्तेश्च निमित्ताभावाच्चित्तेन्द्रिययोर्व्यापारोपरमरूपौ शमदमौ भवतः, ताभ्याञ्च तितिक्षादिः, ततश्चाविक्षिप्तचित्तो निरस्तानर्थप्रतानान् अतिशयानन्दगलिताखिलभेदमात्मानं वेदान्तवाक्येभ्योऽधिगम्य मुमुक्षुर्भवति। ततो [4]'**ब्रह्मविदाप्नोति परम्**' [5]'**तरति शोकमात्मवित्**' इत्यादिश्रुतितो ज्ञानस्य मोक्षहेतुतां निश्चित्य जिज्ञासत इति।

अत्रोच्यते - यदि न्यायोपबृंहितवाक्येन नित्यानित्यवस्तुविवेकस्तदा ज्ञातव्यान्तर-परिशेषाभावप्रसङ्गाद्विचारविधेरेवोच्छेदः। तथाहि मुमुक्षासिद्धये हि नित्यानित्यवस्तु-

---

[1] सलिल एको द्रष्टाऽद्वैतो भवति। एष ब्रह्मलोक सम्राडिति हैनमनुशशास याज्ञवक्यः। एषाऽस्य परमा गतिः। एषाऽस्य परमा संपत्। एषोऽस्य परमो लोक। **एषोऽस्य परम आनन्दः**। एतैस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति। (बृ.उ.६.३.३२)

[2] क - समन्वयश्च; घ - समाधिश्च।

[3] क - ख - गृह्येति।

[4] तै.उ.२.१.

[5] सोऽहं भगवो मन्त्रविदेवास्मि; नात्मवित्। श्रुतं ह्येव मे भगवद्दृशेभ्यः **तरति शोकमात्मविदिति।** सोऽहं भगवः शोचामि, तं मा भगवाच्छोकस्य पारं तारयत्विति। तँ होवाच यद्वै किञ्चैतदद्यगीष्ठाः, नामैवैतत्। (छा.उ.७.१.३)

## ३. साधनचतुष्टयपूर्ववृत्तत्वभङ्गः

विवेकादेः पूर्ववृत्तित्वमिष्यते। तत्र यद्यद्वैतनिश्चयाभावेऽपि मुमुक्षा जायेत तर्ह्यानन्दत्व-नित्यत्वयोर्निर्धारणं किमर्थमपेक्ष्यते। नित्यपुरुषार्थनिर्धारणाभावेऽनित्य सुखवैराग्याभावेन कथं मुमुक्षेति, यदि तदा प्राप्तियोग्यताज्ञानाभावेन कथं सा कथञ्चाद्वितीयत्वज्ञानं विना भेदलक्षणप्राप्तियोग्यताज्ञानमित्यपि पश्य। किञ्च यद्यद्वैतनिश्चयः विचारात् प्राक् नास्तीत्यभिमतं, तदा परमप्रेमास्पदत्वेनानन्दरूपताज्ञानं ब्रह्मणि कथमुपपद्यते।

ननु जीवे एव तदुपपाद्यत इति चेत् किं तस्य प्रयोजनम्। तत्स्वरूपस्य पुरुषार्थताबुद्धिरिति चेत्तर्हि तत्स्वरूपस्य सिद्धता ज्ञानादेव न साध्यताबुद्धिरिति न तादर्थ्येन विचारप्रवृत्तिसंभवः।

किञ्च - स्वयमेव [१]'**ब्रह्मविदाप्नोति परम्**' इति ज्ञानस्य मोक्षसाधनताज्ञानम् आनन्दरूपताज्ञानञ्चोपपादयता परब्रह्मण एव प्राप्यताबुद्ध्युपपादनाद्ब्रह्मणा सह स्वस्याभेदज्ञानाभावे स्वस्वरूपस्यानन्दरूपताबुद्धेरुपयोगः।

किञ्चाभेदबुद्ध्यभावे कार्यानित्यताज्ञानवतो नित्यपुरुषार्थज्ञानमसंभवि। यच्च सूक्ष्मत्वादनिर्धारणमुक्तं तदनुपपन्नम्। सुखी स्यामित्येवं सुखे प्रेमदर्शनेन प्रेमास्पदतामात्रस्य सुखरूपता साधकत्वं कस्यापि बुद्धिमनुपारूढं कार्यं सर्वमनित्यमेवेति बुद्धौ विद्यमानायामप्यभेदमबुध्वापि नित्यसुखस्य साध्यतां सुखविनाशप्रत्यक्षस्यान्यविषयतां कृत्स्नसुखस्याप्येकतां जगत्कारणे प्रकृतिपुरुषसन्देहे विद्यमान एवानन्दरूपताञ्च परमसूक्ष्मैरतिदुंगैरपन्यायैः पश्यतो दुर्मेधसः कुबुध्यगोचरं किमपि सौक्ष्म्यं [२]'जलचन्द्र' [३]'घटाकाशादि' न्यायेष्वभेदसाधकतयाभिमतेषु लेशतोऽपि पश्यामः। मानान्तरविरोधः

---

[१] तै.उ.२.१

[२] **जलचन्द्रन्यायः** - यत्र व्यक्तेः ऐक्येऽपि बहुत्वप्रतीतिः सम्भवति तत्रैवायं न्यायः प्रवर्तते। यथा जलपात्रेषु चन्द्रप्रतिबिम्बानि चन्द्राद्दूरस्थानि, भिन्नानि च नानाविधानि दृश्यन्ते, वस्तुतस्तु नैवम्। एतत् याज्ञवल्क्यस्मृतौ प्रायश्चित्ताध्याये प्रपञ्चितम् - 'आकाशमेकं हि यथा घटादिषु पृथग्भवेत्। तथात्मैको ह्यनेकश्च जलाधारेष्विवांशुमान्।।' इति।

अयं भावः- ननु एकस्मिन्नात्मनि सुरनरादि देहेषु भेदप्रत्ययो न घटते इत्याशंक्याह - आकाशमिति। यथा एकमेव गगनं कूपकुम्भाद्युपाधिभेदभिन्नं नानेवानुभूयते, यथा वा भानुरेको विभिन्नेषु जलपात्रेषु करकमणिकमल्लिकादिषु नानेवाभूयते। तथा एकोऽयमात्मा अन्तःकरणोपाधिभेदेन नाना प्रतीयते। द्वितीयदृष्टान्तोतोपादानं आत्मभेदस्यापारमार्थिकत्वद्योतनार्थम्।। (मी.कोशः-५)

[३] **घटाकाशन्यायः** - आकाशमेकं हि यथा घटादिषु पृथग्भवेत्।
तथात्मैको ह्यनेकस्थो जलाधारेष्विवांशुमान्।। (याज्ञ.स्मृ.३-१४४)

सुखनित्यत्वेऽपि तुल्यः। तस्माद्यदनिर्धारितमित्युक्तं तन्निर्धारणमवर्जनीयमेव। यन्निर्धारितमित्युच्यते तदेव तु सन्दिग्धम्।

तथाहि - आनन्दत्वं तावज्जगत्कारणे सन्दिग्धम्। कारणत्वस्य प्रधानचेतनगतत्व-सन्देहेन आनन्दपदस्यापि मुख्यगौणार्थत्वसन्देहात्। [१]'**अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशत**' इति मोक्षदशायामानन्दाभावप्रतीतेर्मुक्तिकाले प्राप्यतया विद्यमानस्यानन्द-स्वरूपत्वासंभावनया च [२]'**आनन्दाद्ध्येव**' इति वाक्यार्थनिर्णयाभावात्। परम-प्रेमास्पदत्वेनानन्दरूपतानिर्धारणसंभवेऽप्यहंत्वस्यैवाहमर्थप्रेम्णि प्रयोजकत्वात् सुखत्वस्य प्रेमप्रयोजकत्वं स्वसमवायान्तर्भावेनैव अहं सुखी स्यामित्येवेच्छादर्शनात् परसमवेततया ज्ञाने निरुपाधिकेच्छाया अदर्शनात् शत्रुगततया च ज्ञाते द्वेषदर्शनात्। कुत्राप्यसमवेतो निरतिशयानन्दः कश्चिदस्तीति केनचिदुक्ते सिद्धताज्ञानविरह-दशायामपीच्छाया अदर्शनाच्च। तस्मादहंत्वमपि प्रेमप्रयोजकमेव। अथवा अहं सुखी स्यामिति प्रेम्णो दर्शनात् सुखविशिष्टात्मन्येव प्रेम न स्वात्ममात्रे, नापि सुखमात्रे। अहं स्यामिति तु प्रेम चन्दनादाविव सुखसाधनताप्रयुक्तम्।

तथा नित्यत्वमपि सन्दिग्धमेव। 'नात्मा श्रुतेः' इत्यादिना तस्यापि विचारात्। [३]'**विज्ञानघन एव एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति**' इत्यादिना विनाशप्रतीतेस्तस्य विचार्यत्वाच्च।

---

एक एव हि भूतात्मा भूते भूते व्यवस्थितः।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्।। (श्री.भा.३.२.१८)

घटाकाशन्यायेन उपाध्युपाधेययोः परस्परपरिच्छेदकत्वे अन्यतरस्यापि पूर्णत्वं न युज्यते। अत उपाधिरप्यध्यस्त एव। तथा चाधिष्ठानाध्यस्तयोः विषमसत्ताकत्वात् न परस्परपरिच्छेदकत्वम्, किन्तु इतरेतरतिरोधायकत्वमेवास्ति।। (वि.क्लेशः-४)

[१] मघवन् मर्त्यं वा इदँ शरीरमात्तं मृत्युना तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानम्। आत्तो वै सशरीरः, प्रियाप्रियाभ्याम्। न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति। **अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः**। (छा.उ.८.१२.१)

[२] तै.उ.२.६.

[३] स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयेत, न हास्योद्ग्रहणायैव स्यात्, यतो यतस्त्वाददीत लवणमेवैवं वा इदं महद्भूतमनन्तमपारं **विज्ञानघन एव एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति,** न प्रेत्य संज्ञाऽस्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः।। (बृ.उ.४.४.१२)

## ३. साधनचतुष्टयपूर्ववृत्तत्वभङ्गः

न च कर्मविचारदशायामेव शरीरवियोगानन्तरमपि स्थायित्वनिश्चयान्नित्यत्वं निश्चितमेवेति वाच्यम्। सर्वभूतामोक्षानन्तरस्थायित्वस्यानिश्चयादेतच्छरीरानन्तरं शरीरान्तरसंबन्धस्यैव ग्रहात्। यदुक्तमात्मा च नित्य इत्ववगम्यते। अन्यथा कस्यापि मते मोक्षाय प्रवृत्तिर्न स्यादिति, तन्न। तत्र किं नित्यत्वं स्वप्रकाशमित्यभिमतमुत शास्त्रेण ज्ञातमिति। आद्यमुपहास्यम्। द्वितीये 'तत्तच्छास्त्रेण तत्वहितपुरुषार्थान्निश्चित्य स्वहिते प्रवर्तत' इति तत्तच्छास्त्रश्रवणात् प्रागात्मनित्यत्वज्ञानाभावे तवेव न कस्यापि मते दोषः। यच्च नित्यत्वप्रतीत्युपपादनं तद्यदि जीवानन्दविषये ब्रह्मानन्दस्य कुतो नित्यतावगमोपपादनम्। आत्मत्वहेतुना तत्रापि नित्यत्वावगमविवक्षायां ईक्षत्याद्यधिकरण-जातं दत्तजलाञ्जलि स्यात्।

किञ्चैवं नित्यानन्दनिर्धारणाभावात् तन्मूलवैराग्यमसंभावितम्, निश्चयेऽपि न वैराग्यसंभवः, त्वयैव प्रतिरुद्धत्वात्। सौषुप्तिकपरामर्शानुसारात् जीवसुखस्यापि नित्यत्वं ह्यवोचः। विनाशबुद्धेः अन्यविषयत्वोपपादनेन सर्वं सुखं नित्येमेवेत्यवगमेन कथमितर-भोगेष्वनित्यताबुद्ध्या तत्र वैराग्यमवच्छेदकानित्यताज्ञानं वैराग्यप्रयोजकम्। तथा सति ग्रामे स्थिरतया ज्ञातेऽग्रहारामक्षेत्रावच्छेदानामनित्यताज्ञानात् ग्रामे वैराग्यापत्तेः।

न चावच्छेदकवैराग्यमेवेह विवक्षितमिति वाच्यम्। तत्र भोग्यताबुद्धिविरहे नित्यसिद्धवैराग्यस्यानित्यताज्ञानन्न नैरपेक्ष्यात् भोग्यताबुद्धौ वानित्यताज्ञानादपि न वैराग्यम्। सार्वभौमस्य सहस्रं संवत्सरान् राजसुखमनुभवतोऽपि क्षणमात्रं कन्दुकक्रीडा-दर्शनात्। यदि तस्य नित्यसुखविरोधिता ज्ञायेत तदा परं ततो वैराग्यं स्यात्। तज्ज्ञानञ्च त्वयैवापहृतमवच्छेदकताबुद्ध्युपपादनेन समानकालीनत्वबुध्युपपादनात्।

किञ्च स्वरूपानन्दापेक्षया वैषयिकसुखानामल्पाल्पानामप्युत्कर्षस्य नित्यानन्दा-विरोधस्य च ज्ञायमानत्वान्न वैराग्यसंभवः। इदानीमानन्दस्वरूपमावृतं विषयसंबन्धाधीन-वृत्तितारतम्येनावरणनिवृत्तितारतम्यात् प्रकाशतारतम्यं मोक्षेऽत्यन्तावरणानिवृत्तौ चानवच्छिन्नानन्दप्रकाश इति बुद्धिस्संभवतीति चेन्न। स्वरूपस्यैव प्रकाशरूपतया तत्र तरतमभावनिश्चयासंभवात्। न ह्यावरणतरतमभावः संभवि। स्वरूप एव तरतमभावसंपादनक्षमः।

किञ्चावरणनिवृत्तितारतम्यस्य प्रकाशतारतम्यप्रयोजकत्वे सुखवृत्त्यभावदशायां स्वरूपसुखप्रकाशो न स्यात् ततश्च परमप्रेमास्पदत्वं न स्यात्। निरवयवे विधर्मके स्वरूपे ईषदनावृतमिति शङ्का नोत्थानार्हमिति। आवरणनिवृत्तितारतम्यमप्यनुपपन्नम्।

तदपि ह्याबाध्यस्य सावयवत्वे सधर्मकत्वे वा भूयोऽवयवावच्छिन्नाल्पावयवावच्छिन्ननिवृत्तौ वा किञ्चिद्धर्मावच्छिन्नभूयोऽधर्मावच्छिन्ननिवृत्तौ वा स्यात्। न चैतत्संभवः।

किञ्च नास्ति न प्रकाशत इति व्यवहारयोग्यतावरणमित्युच्यते, को नाम तन्निवृत्तौ तरतमभावः। उत्कृष्टसुखगोचरं नास्तीति व्यवहारयोग्यताप्रतियोगित्वन्निवृत्तेरुत्कर्ष इति शङ्का [१]भेदे तु समर्था। सुखतदावरणनिवृत्युत्कर्षयोः परस्परनिरूप्यतयाऽन्योन्याश्रयात्। आवरणनिवृत्तितारतम्यस्यैव सुखतारतम्यनिरूपतयात्माश्रयाद्वा।

किञ्च शमादेः कथं मुमुक्षाहेतुता। न चाविक्षिप्तचित्ततया वेदान्तादात्माऽवगमे मुमुक्षेति वाच्यम्। मुमुक्षायाः प्रागेव तादृशात्मावगमे ततश्श्रवणेऽप्यवृत्त्यनुपपत्तेः। यद्यापातप्रतीतिरेव मुमुक्षाहेतुः सा तर्हि नित्यानित्यविवेकदशायामेव सिद्धेति न तस्याः शमदमाद्यपेक्षा निरीश्वरद्वारबहिर्वितर्दिका दुरासिकाविक्षिप्तचिन्तानिरान्तररसिकविलासिनी-चर्वितसारं गद्गदकण्ठा अपि ह्यद्वैतं निर्धार्य तत्रैव प्रगल्भवाचः त्रिचतुरान्ध-वराटिकालिप्सया चातुर्वर्ण्यबहिष्कृतपञ्चषपल्लीपालकदुरीश्वरनामाङ्कितग्रन्थानपि रचयन्तः परश्शता मिथ्यावादिन उपलभ्यन्ते। तस्मादद्वैतस्य निर्धारणेऽपि न शमाद्यपेक्षा किं पुनरापातप्रतीतौ।

श्रुतिस्तु [२]'**शान्तो दान्त उपरतस्तितिक्षुस्समाहितो भूत्वात्मन्येवात्मानं पश्येत्**' इति शमादेरुपासनार्थतामाह। न च [३]'**प्रशान्तचित्ताय**' इति वाक्यमन्यार्थानुवादरूप-मङ्गत्वबोधनसमर्थनरूपं ग्रहणोपयोगिचित्तावधानपूर्वकाण्डादिसाधारणं लोकसिद्धमेव हि।

तत्रानूद्यते - न हि शमदमाद्युपेतस्स्यादिति ब्रह्मविचारान्तं निरूपयिष्यमाणं शमादि ब्रह्मविचाराधिकारिविशेषणं भवितुमर्हं विपर्यस्तद्वैषां साध्यसाधनभावः। तथा हि वैयषिकसुखविरागे नानित्यताज्ञानमात्रात् तज्ज्ञाने सत्यपि प्रेम्णो दर्शनात्। किन्तु मोक्षोपायं कामयमानस्य शमादेस्तदङ्गताज्ञानादेव मुमुक्षयैव च मोक्षोपायकामनेति मुमुक्षयैव शमादिस्साध्यते। मुमुक्षापि न संभवति ब्रह्मस्वरूपानन्दस्य नित्यमनुभूयमानत्वात्।

---

[१] क - नोदेतुम्; घ - भेदे तु

[२] तदेतदृचाभ्युक्तम् - 'एष नित्यो महिमा ब्राह्मणस्य न वर्धते कर्मणा नो कनीयान्। तस्यैव स्यात् पदवित् तं विदित्वा न लिप्यते कर्मणा पापकेन' इति। तस्मादेवंवित् **शान्तो दान्त उपरतस्तितिक्षुस्समाहितो भूत्वा आत्मन्येवात्मानं पश्यति**, सर्वात्मानं पश्यति। (बृ.उ.६.४.२३)

[३] तस्मै स विद्वानुपसन्नाय सम्यक् **प्रशान्तचित्ताय** शमान्विताय।
येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्।। (मुण्डक.१.२.१३)

## ३. साधनचतुष्टयपूर्ववृत्तत्वभङ्गः

न च भेदज्ञानदशायां दुःखसंभिन्नतया स्वरूपानन्दस्यासत्कल्पतया मुमुक्षासंभव इति वाच्यम्। सत्कल्पता किं द्युमणिसन्निधौ खद्योतादेरिवाप्रकाशः। किञ्चाप्रबल-व्यसनाभिभूते सुहृद्दर्शनादेरिव यथापुरं सुखानुत्पादकत्वम्। किं वा प्रबलानर्थसंवलितविष-संपृक्तमधुभक्षणजन्यसुखस्येव स्वविषयकामनानुत्पादकत्वम्। नाद्यः, तथा सति प्रेमानुत्पत्तेः। न द्वितीयः, स्वतः पुरुषार्थतया सुखोत्पादकत्वेन पुरुषार्थत्वासिद्धेः। न तृतीयः, सर्वदा प्रेमदर्शनात् त्वया तदभ्युपगमाच्च। अथ स्यात् ब्रह्मानन्दो हि परमपुरुषार्थः। स्वस्वाभाविकभेदाद्यद्यपि प्राप्त एव तथाप्यौपाधिकभेदेनाप्राप्तत्वभ्रमात् कामना संभवत्येव। किञ्च [1]कर्णचामीकरन्यायात् इत्युच्यते। स्वाभाविकाभेदो यद्यगृहीतस्तदा प्राप्तियोग्यताभावान्न काम्यता। न हि भिन्नस्याभेदः कालान्तरे संभवति। यदि ज्ञातः कुतो प्राप्तता भ्रमः, कुतो मुमुक्षा, कुतो जिज्ञासा। कर्णचामीकरन्यायश्च विषमः। तद्धि न प्राप्तत्वबुद्ध्यनन्तरं काम्यते, किन्तु प्रागेवेति।

किञ्च यद्यपरोक्षज्ञानं मोक्षसाधनत्वेन निर्णीतं स्यात् तदा मुमुक्षाज्ञानकामना-द्वाराधिकारः स्यात्। तच्च विचारारम्भात् प्राक् सन्दिग्धमेव प्रपञ्चमिथ्यात्वज्ञानं विना ज्ञाननिवर्त्यत्वग्रहणासंभवात्। यदि कश्चित् स्वाधीनन्यायावधारितसमस्तवेदान्तार्थस्य साधनचतुष्टयसंपन्नस्याधिकारिणः श्रवणविधिबलात् श्रवणे प्रवृत्तिं कल्पयेत्। सोऽपि [2]"**सोऽहं मन्त्रविदेवास्मि नात्मविदेवास्मि नात्मवित्**' इति श्रवणाधिकारिणः

---

[1] **कण्ठचामीकरन्यायः-** चामीकरो नाम कृतस्वराख्यः खनिविशेषः। तत्र भवं चामीकरम्। चामी करोति चामीकरम्। तेन सुवर्णेन निर्मितं भूषणमपि चामीकरम्। यथा कण्ठगतं हेमभूषणमज्ञानात् अप्राप्तमिव कण्ठे तत् पश्य इत्युपदेशात् ज्ञातं सत् प्राप्तमित्युपचर्यते, तथा प्रत्यगात्मतया ब्रह्मणः प्राप्तत्वेऽपि मायोपहितत्वादप्राप्तमिव 'स्वहृदि तत् पश्य' इति गुरूपदेशात् ज्ञातं यत् प्राप्तमिति निश्चीयते। उक्तं च -

'प्रत्यगात्मतया तस्य प्राप्तत्वेपि च सर्वदा।
**कण्ठचामीकरन्यायात्** तत्प्राप्तिरुपचर्यते।।' (मी.कोश)

तदुक्तं **अधिकरणसारावल्याम्**-

नित्यप्राप्तस्य कण्ठस्थितकनकनयान्निर्विशेषस्य लब्धिः
मिथ्याभूतं निवर्त्यं श्रुतिशकलभुवः प्रेक्षणात्तन्निवृत्तिः।
कर्मैवं क्वोपयुक्तं प्रतिभटमपि तद्वृत्ततोक्तिर्मदुक्ते
प्राप्तात्रेति प्रलापे प्रतिवचनगतिर्भाषिता विस्तरेण।।

[2] **सोऽहं भगवो मन्त्रविदेवास्मि**; नात्मवित्। श्रुतं ह्येव मे भगवद्दृशेभ्यः तरति शोकमात्मविदिति। सोऽहं भगवः शोचामि, तं मा भगवाच्छोकस्य पारं तारयत्विति। तँ होवाच यद्वै किञ्चैतदध्यगीष्ठाः,

आत्मज्ञानभावोक्त्यात्मानं प्रति वक्तव्यः। न च मोक्षसाधनज्ञानाभाव एव तत्रोच्यत इति वाच्यम्। '**मन्त्रविदेवास्मि**' इत्युक्त्या ज्ञानस्वरूपस्यैव निषेधावगमात्।

वस्तुतस्तु पूर्वकाण्डे विचार इवात्रापि जिज्ञासुरेवाधिकारी। न च तदर्थमेव साधनचतुष्टयापेक्षा प्रकारान्तरेण जिज्ञासोत्पत्तेः प्रागभिधानात्।।

**इति साधनचतुष्टयपूर्ववृत्तत्वभङ्गः ।।**

---

नामैवैतत्। (छा.उ.७.१.३)छा.उ.७.१.३.

## गुरूपसदनविजये

## ४. शास्त्रभेदभङ्गः

[१]‘**कर्मचितान्**’ ‘**तद्विज्ञानार्थम्**’ इति विचारयोः प्रयोजनवदर्थपरत्वेनैकत्वस्यापि ‘परीक्ष्य विज्ञानार्थम्’ इति पौर्वापर्यस्य ‘**नास्त्यकृतः कृतेन तद्विज्ञानार्थम्**’ इति सङ्गतेर्न ‘ब्राह्मणः परीक्ष्य तद्विज्ञानार्थम्’ इति पूर्वोत्तरभागात्मैकग्रन्थविचाररूपतायाश्च प्रतीयमानत्वात् भागद्वयात्मकमीमांसाग्रन्थस्यैकत्वसंभवोऽवगम्यते। अत्रास्मदाचार्याः[२] -

[३]‘**जिज्ञासावृत्तियुक्तीनामैक्यमक्षरलक्ष्मणोः।**
**साम्यात् तज्ज्ञोपदेशाच्च तदुक्ताद्यविरोधत**’

इत्यनुगृह्णन्ति। जिज्ञासा तावदविशिष्टा। अधीतसाङ्गसशिरस्कस्वाध्यायः प्रतिपन्नानन्तस्थिरफलकर्मब्रह्मावबोधः पुरुषः परिनिष्पन्नज्ञानस्यापातरूपत्वात् संशयानः कृत्स्नमेव वेदार्थं जिज्ञासते। तदनुजिघृक्षतया प्रवर्त्यमानो ग्रन्थः क्रमसङ्गत्यैकव्याख्यानरूपत्वेषु सत्स्वपि कथं भिद्येत। कर्तृभेदात् परं शङ्काश्रयावकाशः।

तमपि विचारयामः - किं जैमिनेः ब्रह्ममीमांसाग्रन्थाकरणं तदर्थापरिज्ञानात्, उतानुग्रहविरहात्। नाद्यः, भगवद्बादरायणशिष्यस्य तदयोगात्। तस्य ब्रह्मविदग्रेसरत्वस्य भगवतैव [४]‘**परं जैमिनीमुख्यत्वात्**’ इत्यादिभिः प्रतिपाद्यमानत्वाच्च। नापि द्वितीयः, पूर्वमीमांसाग्रन्थस्याप्यकरणप्रसङ्गात्। परमपुरुषार्थार्थिजनेष्वनुजिघृक्षाविरहस्तु ब्रह्मप्राप्तेः अपुरुषार्थत्वात् पुरुषार्थत्वेऽपि तदज्ञानाद्वा स्यात्। न चोभयं शङ्कामपि लभते।

---

[१] परीक्ष्य लोकान् **कर्मचितान्** ब्राह्मणो निर्वेदमायात्।
**नास्त्यकृतः कृतेन तद्विज्ञानार्थं** स गुरुमेवाभिगच्छेत्।। (मुण्डक.१.२.१२)

[२] वेदान्तविजयग्रन्थकारस्य ज्येष्ठपितामह एष आचार्यः। स च श्रुतप्रकाशिकातूलिकाग्रन्थकारः अधिकरणार्थसंग्रहकारश्च। प्रतिवादिभयङ्करार्यस्य प्रशिष्यः समरपुङ्गवसद्गुरोः शिष्यश्च। पाराशर्यवियजे तदीयश्श्लोक अनूदित इति अनेन आचार्यवचनेन ज्ञायते। ग्रन्थकृता ‘अस्मदाचार्या’ इत्युक्तस्य विषये श्लोकोऽयमनुसन्धेयः -

‘**वन्दे वेदान्तकर्पूरवासितस्वान्तमन्वहम्। वाधूलकुलजीवातुं श्रीनिवासमहागुरुम्**’ इति।

[३] महाचार्यैरनुगृहीतः - पाराशर्यविजये प्रथमाध्याये - पृ.१११।

[४] ब्र.सू.४.३.११.

एवमाचार्यबादरायणस्यापि ब्रह्मज्ञानाङ्गभूतस्यापि कर्मणो निरूपणन्न तदज्ञानात्। तस्मादाचार्यान्तेवासिनोः जगदनुग्रहप्रवणयोरन्यतरभागाकरणमन्योऽन्य[१]समवेतैकैकभाग-करणादित्यनाग्रहचित्तैरवगन्तव्यम्। प्रमेयगौरवानुसारादाचार्याऽन्तेवासिनोर्भागद्वयव्यवस्था। अत एव ह्याचार्यस्तु '**अन्ते गतिं वक्ता**' इत्युक्तमग्निभिः। आचार्यस्य जैमिनिमुखेन पूर्वभागकरणं शिष्यस्यानुग्रहशीलताप्रदर्शनन्तु[२] अस्य[३] शिष्येषु स्निग्धतातिशयप्रदर्शनार्थञ्च वृत्तञ्च मानम्। [४]'**अथातो धर्मजिज्ञासा**' इत्यत्राथशब्दोक्तवेदाध्ययनलक्षणपूर्ववृत्त-साक्षाद्युक्तिश्च समाना। अध्ययनविधेरक्षरग्रहणपर्यन्तत्वार्थज्ञानपर्यन्तत्वाभावेन स्वाध्यायस्य विवक्षितार्थत्वे मानाभावात् मीमांसा नारम्भणीयेति पूर्वपक्षयुक्तेरर्थपरत्वस्य स्वतः प्राप्तस्याध्ययनविधाविव बाधकाभावेन स्वाध्यायस्य विवक्षितार्थत्वात् मीमांसारम्भणीयेति राद्धान्तयुक्तेः। अध्ययनस्य स्वर्गार्थतया विधेः स्वाध्यायस्याविवक्षितार्थत्वमिति पराभिमत-पूर्वपक्षयुक्तेरध्येतव्य इत्यक्षरग्रहणपरम्परया जायमानवाक्यार्थज्ञानार्थं नियमविधेः विवक्षितार्थत्वमिति सिद्धान्तयुक्तेश्च समानत्वात्। अक्षराणि च समानानि। 'धर्मजिज्ञासा' इत्यत्र धर्मपदस्योपासनेऽपि वृत्तेः। यदि साक्षात्फलसाधनमपूर्वधर्मः तदेहाप्युपासनसाध्य-भूतमपूर्वधर्मः। यद्युत्तरविचारोऽपि धर्मविचारस्तर्हि तत्रापि ब्रह्मणः प्राधान्यं भज्येतेति चेन्न। तत्प्रसादस्य तद्धेतुव्यापारस्य वा धर्मशब्दार्थत्वेन भृत्योपचारेण राज्ञ इव द्रव्यस्तुतौ कर्मण इव च प्राधान्याविरोधात् प्रत्युत तत्रैव प्राधान्येऽप्यतिशय एव स्यात्।

किञ्च प्राप्यत्वमेव हि ब्रह्मणः प्राधान्यं फलप्रदत्वञ्च। इदञ्च कुतो हीयेत [५]'**नास्त्यकृतः कृतेन**' इत्यनेन विचारं प्रति प्राप्यतया प्राधान्यमेव ह्युच्यते।

यदिह शङ्क्यते - एकशास्त्रे सामान्यप्रतिज्ञया भवितव्यम्। धर्मजिज्ञासासूत्रस्यैव सामान्यप्रतिज्ञारूपत्वे ब्रह्मविचारोऽपि जैमिनिना क्रियेत संकर्षवदिति। तत्र न ह्ययमथशब्दोऽथशब्दानुशासनमित्यादिष्विवारम्भार्थस्सन् स्वकर्तव्यतापरः[६] येनैवमाशंक्येत किन्त्वध्ययनानन्तर्यपरः सधर्मविचारकर्तव्यताप्रसाधनापरः। यद्यपि कर्तव्यताप्रसाधनस्य स्वकृतिवैयर्थ्यपरिहारार्थत्वात् साधितकर्तव्यभावस्य विचारस्य स्वकर्तव्यत्वमात्रं सिद्ध्यति

---

[१] क - समयेनैकैक; घ - समवेतैकैक।

[२] क - प्रदर्शनार्थम्; घ - प्रदर्शनन्तु।

[३] क - स्वस्य; घ - अस्य।

[४] मी.सू.१.१.१.

[५] मुण्डक.१.२.१२.

[६] क - प्रतिज्ञापरः; घ - परः।

## ४. शास्त्रभेदभङ्गः

तथापि कृत्स्नस्य स्वकर्तव्यतानियमः। एवञ्चोभाभ्यां संभूय चिकीर्षितस्य ग्रन्थस्यादौ कृत्स्नस्य शास्त्रस्य कर्तव्यता प्रसाधितेति मन्तव्यम्[1]।

एवं परस्परसंविदाकरणादेव कर्मदेवताकाण्डयोराद्यन्तसूत्राणि वेदाचार्येणैव प्रणीतानि। मध्यमसूत्राणि तन्नियमनेन तच्छिष्येणेत्यपि वदन्ति। लक्षणञ्च समानम्। उपासनस्यापि [2]चोदनालक्षणत्वात्। उपासनस्य धर्मत्वाभावे लक्षणमिति व्यापकं स्यात्। अत इदं लक्षणमेव कृत्स्नस्यापि कर्तव्यताबुद्धिं प्रतिज्ञासूत्रविषयतां च साधयति। तज्ज्ञोपदेशश्च भवति।

आह हि भगवान् बोधायनः - [3]'**संहितमेतच्छारीरकञ्जैमिनीयेन षोडश-लक्षणेनेति शास्त्रैकत्वसिद्धिः**' इति। संहितमिति सङ्गत्यभिधानादेकग्रन्थत्वसिद्धिः। एकस्य व्याख्येयस्य खण्डश अनेकैरपि व्याख्यानं संभवति। एकेनापि तथैकेनाप्येक-ग्रन्थस्य करणं संभवति। अनेकैरप्यैकग्रन्थस्य करणं समस्यापूरणादिवदैक्यन्न कर्तृसंकल्प-निबन्धनम्। तथा च ऋत्विक्सहितेन यजमानेन याग इव सशिष्येण बादरायणेन '**अयमेको वेदमीमांसाख्यो ग्रन्थो निर्वर्त्यत**' इति तदभिज्ञस्य भगवतो बोधायनस्य महर्षेर्वचनादवगच्छामः।

यद्येवं प्रतिज्ञालक्षणविषयत्वं ब्रह्ममीमांसायास्तदा 'अथात उपासनजिज्ञासा' इति भवितव्यम्, न तु ब्रह्मजिज्ञासेति। तस्यैव सामान्यप्रतिज्ञाविषयत्वादिति चेन्न। उपासनविषयतया तत्फलतया तत्प्रदातृतया चापेक्षितस्य ब्रह्मणश्शास्त्रभेदशेषत्वादेरिव निरूपणसंभवात्। तर्हि ब्रह्मणि जिज्ञासाप्रतिज्ञा ब्रह्मस्वरूपनिरूपणमात्रविषया स्यादिति चेन्न। तत्संबन्धिनि निरूपणस्यापि तत्राविवक्षितत्वात्।

ननु तर्हि सिद्धे व्युत्पत्यभावेनारम्भाक्षेपरूपपूर्वपक्षोऽनुपपन्नः वेदान्तभागस्या-प्युपासनस्य परतया कार्यपरत्वादिति चेन्न। सद्विद्यादावुपासनविधानाभावेन तत्र केवलब्रह्मस्वरूपपरत्वस्य वाच्यतया कार्यपरत्वस्य तत्रासंभवेनाध्ययनविधेस्तदंशे विषनिर्हरणमन्त्रादेव जपमात्रविनियोगतात्पर्यनिश्चिते तत्प्राप्तिफलकोपासनविधेरपि प्रमाण-

---

[1] यथा '**इषे त्वा**' इत्यारभ्य '**तस्यैवं विदुष**' इत्यनुवाकान्तपर्यन्तमक्षरराशिग्रहणं कृत्वा ततो मीमांसाशास्त्रमध्येयमेकं वेदोपाङ्गमिति भावः।

[2] चोदनालक्षणोऽर्थो धर्मः। (मी.सू.१.१.२)

[3] श्रीभाष्ये.१.१.१. पृ-४.

लक्षणे गुरुमते एकदेशमुखेन सर्वाक्षेपन्यायेनाविवक्षितार्थत्वशङ्कया कृत्स्नब्रह्म-विचाराक्षेपरूपपूर्वपक्षसंभवात्।

अथवा धर्मशब्दो वेदार्थमात्रपरः। 'सिद्धसाध्यपरावरकृत्स्नधृतिहेतुसंग्रहो वाधारणाद्धर्म इत्याहुः' इति भारतोक्तेः। लक्षणं पूर्वकाण्डार्थस्यैवास्तु। अथवा [१]'**अथातो ब्रह्मजिज्ञासा**' इत्येव प्रतिज्ञा। कोऽर्थः, धर्मशब्दो ब्रह्मपर इत्यर्थः। समाराधनविशिष्टं ब्रह्म कृत्स्नवेदार्थः तस्यैवालौकिकश्रेयस्साधनत्वात् तेन रूपेण तदभिधानात्। [२]'**सर्वे वेदा यत्पदमामनन्ति**' [३]'**वेदैश्च सर्वैरहमेव वेद्य**' इति कृत्स्नस्यापि वेदस्य ब्रह्मपरत्वावगमात् ब्रह्मैव कृत्स्नवेदार्थः। लक्षणमपि तस्यैव युज्यते। शाब्दत्वं हि नापूर्वस्यापि इष्टसाधनत्वान्यथानुपपत्तिगम्यत्वमिहापि प्रीतः परमपुरुष एव हि फलप्रदाता। तत्र पूवभागे प्रीतिकारणं कर्म चिन्त्यते। पुरुषाणां त्रिवर्गे प्रथमप्रावण्यात् पाठक्रमानुरोधाश्च कर्मसाध्यभगवत्प्रसादस्यैव वा प्रतिज्ञालक्षणे स्ताम्।

अथवात्रालौकिकत्वश्रेयस्साधनपरो धर्मशब्दः। अत एव द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते इत्युक्तम्। अतो ब्रह्मणोऽपि फलप्रदतया श्रेयस्साधनत्वात् तदपि धर्म-शब्दार्थः। अत्र कृत्स्नवेदार्थविचार्यत्वप्रतिज्ञायाश्चिकीर्षितत्वेन वेदार्थजिज्ञासेत्येव वक्तव्ये श्रेयः। साधनजिज्ञासेत्युक्ती रागादेव मीमांसायां प्रवृत्तिरिति द्योतनार्था कृत्स्नवेदार्थविचार-प्रतिज्ञा परेषामपि समाना। धर्मस्यैव कृत्स्नवेदार्थत्वमुत्तरभागस्यापि जीवद्वारा कर्म-शेषत्वञ्च तैरुच्यत इत्ययमेव विशेषः। तथा च धर्मशब्दतात्पर्यं सर्वैरप्येवमेव वर्णनीयम्।

एवञ्च धर्मशब्देनाध्ययनविधेरक्षरग्रहणमात्रपर्यवसितत्वेनाज्ञानपर्यन्तत्वासंभवात् प्रवर्तकाभावात् 'मीमांसा नारंभणीया' इति पूर्वपक्षः। राग एव प्रवर्त्तक इति राद्धान्त इत्यधिकरणशरीरं सूचितं भवति। एवं धर्मजिज्ञासासूत्रस्य साधारण्ये सति पूर्वकाण्डमात्रासाधारण्येनादौ कर्तव्यत्वासमर्थनम्। उत्तरकाण्ड इवासाधारण्येनाकर्तव्यत्व-पूर्वपक्षानुत्थानात् ब्रह्ममीमांसायां तु पूर्वपक्षहेतुभिरकर्तव्यत्वशङ्कायां चतुःसूत्र्या सा निराक्रियते। तदुक्तं -

---

[१] ब्र.सू.१.१.१.

[२] **सर्वे वेदा यत्पदमामनन्ति** तपाँसि सर्वाणि च यद्वदन्ति।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदँ संग्रहेण ब्रवीम्योमित्येतत्।। (कठ.उ.२.१५)

[३] सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च।
**वेदैश्च सर्वैरहमेव वेद्यो** वेदान्तकृद्वेदविदेव चाहम्।। (महा.भीष्म.३९.१५, भ.गी.१५.१५)

### ४. शास्त्रभेदभङ्गः

**[1]'व्युत्पत्त्यभावः प्रतिपत्तिदौस्थ्यमन्येन सिद्धत्वमथाफलत्वम्।**
**एतानि वै सूत्रचतुष्टयेनानारम्भमूलानि निराकृतानि।।'**

इति चतुस्सूत्र्यारम्भार्थत्वं शब्दसामर्थ्यादर्थसामर्थ्याच्चावगम्यते। शब्दसामर्थ्यं तावत् [2]'**अथाऽतो धर्मजिज्ञासा**' इत्यनन्तरं [3]'**चोदना लक्षणोऽर्थो धर्म**' इतिवदिह [4]'**अथातो ब्रह्मजिज्ञासा**' इत्यनन्तरं '**जन्मादिकारणं ब्रह्म**' इति नोक्तम्। अपि तु [5]'**जन्माद्यस्य यत**' इति।

अतः सूत्रद्वयस्यापि भिन्नवाक्यताया अभिमतत्वात् तत्र पुनर्धर्मशब्दः। इह त्वेकवाक्यताया अभिमतत्वात् पूर्वसूत्राध्याहृतकर्तव्यत्वसाध्यान्वयार्थं '**यत**' इति निर्दिष्टम्। ततश्च यतोऽस्य जन्मादि तद्ब्रह्मजिज्ञासा कार्येत्यवगम्यते। [6]'**शास्त्रयोनित्वात्**' इत्यपि साध्यानुक्तेः पूर्वसाध्येनैवान्वेति। [7]'**तत्तु समन्वयात्**' इति तृतीयं सूत्रम्। शेषं स्पष्टमेव। तस्मात्समन्वयेन शास्त्रप्रमाणकत्वाज्जन्मादिकारणं ब्रह्मणः विचारयोग्यमिति शब्दस्वरससिद्धो महावाक्यार्थः। सूत्रभेदो न्यायभेदनिबन्धनः। उक्तं शब्दसामर्थ्यमर्थसामर्थ्यमपि चिदचिद्व्यावृत्तिलक्षणाभावे ततोभेदासिद्ध्या जीवान्तर्भावेन वेदान्तभागस्याधिकारिप्रशंसार्थतया कर्मशेषत्वे वेदान्तविचारो न कर्तव्यः स्यात्। धर्मलक्षणाभावेऽपि ज्योतिष्टोमादिवाक्यप्रतिपत्तौ नार्थ[8] गोचरविचारस्यानारम्भहेत्वाभावान्नैकवाक्यता कृता। तृतीये पूर्वपक्षस्यानारम्भहेतुत्वं स्पटमेव। चतुर्थस्य पूर्वशेषत्वान्न पृथग्वाच्यम्। किञ्च तदुक्तग्रहणञ्च दृश्यते - [9]'**संज्ञातश्चेत्तदुक्तमस्ति तु तदपि**' [1]'**अक्षरधियां त्ववरोधः**

---

[1] भगवद्रामानुजोत्तरबदरिकाशिष्यस्य सेनेश्वराचार्यस्य शारीरकन्यायकलापसंग्रहे समन्वयाधिकरणे (ब्र.सू.१.१.४) एतत्सदृशविषयः वर्तते -

**'व्युत्पत्त्यभावात् प्रतिपत्तिदौस्थ्यादन्येन सिद्धेरफलत्वतश्च।**
**अमात्वमाशङ्क्य निराचकार न्यायैश्चतुर्भिः प्रतिपाद्य तत्तत्।।'**

[2] मी.सू.१.१.१.

[3] मी.सू.१.१.२.

[4] ब्र.सू.१.१.१.

[5] ब्र.सू.१.१.२.

[6] ब्र.सू.१.१.३.

[7] ब्र.सू.१.१.४.

[8] क - प्रतिपन्नार्थ; घ - प्रतिपत्तौ तदर्थ।

[9] ब्र.सू.३.३.८.

**सामान्यतद्भावाभ्यामौपसदवत् तदुक्तम्**' [२]'**प्रदानवदेव तदुक्तम्**' इति सूत्रेषु जैमिनिः ग्रहणमन्तरेणैव पूर्वकाण्डोक्तार्थविवक्षया '**तदुक्तम्**' इत्युच्यते। अयञ्च निर्देशोऽस्मिन्नेव ग्रन्थे पूर्वमुक्ततां स्वरसतोऽवगमयति [३]'**अल्पश्रुतेरिति चेत्तदुक्तम्**' [४]'**जीवमुख्यप्राण-लिङ्गान्नेति चेत्तद्व्याख्यातम्**' [५]'**उक्तं समाम्नायैदमर्थ्यं तस्मात्सर्वं तदर्थं स्यात्**' इत्यादिवत्। यदि हि ग्रन्थान्तरं स्यात् कर्तृनिर्देशो वा स्यात् अधिकरणनिर्देशो वा। जैमिनीयसूत्रानन्तर्गतार्थविषये जैमिनिग्रहणमेव क्रियते [६]'**परं जैमिनिर्मुख्यत्वात्**' इति। अतः '**तदुक्तम्**' इत्युक्त्याप्यैकग्रन्थ्यं सुस्थम्।

अयमेषां सूत्राणामर्थः - छन्दोगानां वाजिनाञ्च उद्गीथविद्याया ऐक्यं पूर्वपक्षीकृत्य निरस्य संज्ञात ऐक्यमाशंक्योक्तम्। [७]'**संज्ञातश्चेत्तदुक्तमस्ति तु तदपि**' इति संज्ञैक्येऽपि भेद उक्तः। यथा [८]'**प्रकरणान्तरे प्रयोजनान्यत्वम्**' इत्यत्र नैयमिकाग्निहोत्रयोरित्यर्थः।

[९]'**अक्षरधियां त्ववरोध**' इति [१०]'**यत्तदद्रेश्यम्**' इत्याद्युक्तास्थूलत्वादि विषयाणामक्षरधियां सर्वत्रावरोधः। सर्वत्र ब्रह्मण एकत्वात् तैर्विना इतरव्यावृत्त-ब्रह्मानुसन्धानानुपपत्तेश्च। अतः प्रधानब्रह्मानुसन्धाने तद्गुणानामप्यवरोधः। औपसदवत् जामदग्न्यचतूरात्रे पुरोडाश्युपसद्गुणभूतस्य मन्त्रस्योपसदनुवर्तित्वेन उपांशुगुणकत्वमुक्तम्। [११]'**गुणमुख्यव्यतिक्रमे तदर्थत्वात् मुख्येन वेदसंयोग**' इति अत्र इति प्रदानवदिति दहरविद्यायामपहतपाप्मत्वादिगुणविशिष्टोपासने तत्तत् गुणविशिष्टस्वरूपभेदात् प्रतिगुणं

---

[१] ब्र.सू.३.३.३३.
[२] ब्र.सू.३.३.४२.
[३] ब्र.सू.१.३.२०.
[४] ब्र.सू.१.४.१७.
[५] मी.सू.१.४.१.
[६] ब्र.सू.४.३.११.
[७] ब्र.सू.३.३.८.
[८] मी.सू.२.३.२४.
[९] **अक्षरधियां त्ववरोधः** सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम्। (ब्र.सू.३.३.३३)
[१०] **यत्तदद्रेश्य**मग्राह्यमगोत्रमवर्णमचक्षुः श्रोत्रं तदपाणिपादम्।
नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः।। (मुण्डक.१.१.६)
[११] मी.सू.३.३.९.

गुण्यावृत्तिः। यथा [१]“**इन्द्राय राज्ञे**’ इत्यादिषु विशिष्टस्वरूपभेदात् प्रदानावृत्तिः, तदुक्तं सङ्कर्षे [२]“**नाना वा देवता पृथक्त्वात्**’ इति। [३]“**इन्द्राय राज्ञे पुरोडाशं एकादशकपालमिन्द्रायाधिराजायेन्द्राय स्वराज्ञ**’ इति विहितायां त्रिपुरोडाशिन्यामिष्टौ हविर्भेदाद्भेदेनावदानप्राप्तौ [४]“**वचनात् सर्वेषां सहावदीयेरन्**’ इति सूत्रेण सर्वेषामभिगमयन्नवद्यदिति वचनात् सहावदाने स्थापिते ततोऽवदानसाहित्यात् प्रदानसाहित्यं [५]“**तेषां सहप्रदानमवदानैकत्वात्**’ इति सूत्रेण पूर्वपक्षीकृत्य [६]“**नाना वा देवतापृथक्वात्**’ इत्यधिराजत्वादिविशिष्टदेवताभेदात् प्रदानं नानैवेत्युक्तमित्यर्थः। आदिग्रहणञ्च दृश्यते - [७]“**सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्**’ [८]“**श्रुत्यादिबलीयस्त्वाच्च न बाध**’ इति। न ह्यत्र वैयाकरण इव गणपाठोऽस्ति। न च श्रुतिषु चोदनादीनां पाठोऽस्ति। येन [९]“**एष भूतपतिरेष भूतपाल एष सेतुर्विधरणः**’ [१०]“**यस्मिन् द्यौ पृथिवी चान्तरिक्षम्**’ इत्यादिषु पठितानां [११]“**पत्यादिशब्देभ्यः**’ [१२]“**द्युभ्वाद्यायतनं स्वशब्दात्**’ इत्यादिष्विवादिशब्देन ग्रहणं स्यात्। आदिग्रहणादेकग्रन्थत्वेन सन्निहितानां संयोगरूपादीनामेव प्रतीतिर्भविष्यतीत्यभिप्राय

---

[१] तस्मा एतं त्रिधातुं निर्वपेत् **इन्द्राय राज्ञे पुरोडाशं एकादशकपालमिन्द्रायाधिराजायेन्द्राय स्वराज्ञे**ऽयं वा इन्द्रो राजायमिन्द्रोऽधिराजोऽसाविन्द्रः स्वराडिमानेवलोकान्स्वेनं भागधेयेनोपधावति। (तै.सं.२.३.६.२)

[२] मी.सू.संकर्ष.२.२.३६.

[३] तै.सं.२.३.६.२.

[४] **वचनात् सर्वेषां सहावदीयेत न हि** वचनं किञ्चिद्बुभूषति। (मी.सू.संकर्ष.२.३.३४)

[५] मी.सू.संकर्ष.२.३.३५.

[६] मी.सू.संकर्ष.२.३.३६.

[७] ब्र.सू.३.३.१.

[८] ब्र.सू.३.३.४७.

[९] स वा एष महानज आत्मा, योऽयं विज्ञानमयः प्राणेषु **य एषोऽन्तर्हृदय आकाशस्तस्मिंश्छेते सर्वस्य वशी** सर्वस्येशानः सर्वस्याधिपतिः, स न साधुना कर्मणा भूयान्, नो एवासाधुना कनीयान्, एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय। (बृ.उ.६.४.२२)

[१०] **यस्मिन् द्यौः पृथिवी चान्तरिक्ष**मोतं मनः सह प्राणैश्च सर्वैः।
तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः।। (मुण्डक.२.२.५)

[११] ब्र.सू.१.३.४४.

[१२] ब्र.सू.१.३.१.

इति स्वरसतोऽवगम्यते। किञ्च [1]"**सर्ववेदान्तप्रत्ययम्**' इत्यत्र साध्यानुपादानमधिकाशङ्कानिराकरणेन सूत्रस्य शाखान्तराधिकरणन्यायातिदेशकतया तदीयमेव साध्यं लप्स्यत इत्यभिप्रायमेव तदप्यैकग्रन्थ्ये स्वरसम्। एवं [2]"**भेदान्नेति चेत्**' इत्यत्र हेत्वनुक्तिरपि द्रष्टव्या। पूर्वकाण्डोक्तहेतूनामन्वयो ह्यभिप्रेतः। आचार्यश्लोके आदिपदेन तन्त्रन्यायादर्थपरेण चरमहेतुद्वयसंग्रहरविरोधश्च। यदि हि मीमांसाग्रन्थभागयोः परस्परविरुद्धता स्यादपि तदा भेदशङ्का।

न चास्ति विरोधः। आह जैमिनिना - [3]"**आम्नायस्य क्रियार्थत्वात् आनर्थक्यमतदर्थानाम्**' इति पूर्वपक्षं कृत्वा कृत्स्नस्यापि स्वाध्यायस्य [4]"**विधिना त्वेकवाक्यत्वात्**' इत्यादिना क्रियार्थत्वेनैव प्रामाण्यमुक्तम्। इह तु समन्वयसूत्रे सिद्धपराणामपि प्रामाण्यमुक्तम्।

तथाष्टमे विप्रतिपत्तौ हविषा नियम्येत। [5]"**कर्मणस्तदुपाख्यत्वात्**' इति सूत्रेण ऐन्द्रपुरोडाशे औषधहविस्सामान्यादाग्नेयविध्यन्तः नत्विन्द्रदेवतासामान्यात्। सान्नाय्यविध्यन्तःकर्मणो हविस्त्यागरूपस्य तस्मिन् हविष्युपलभ्यमानत्वात् हविर्हि त्यज्यमानं दृश्यते। देवतात्वप्रत्यक्षैव परं यागोद्देश्येति प्रतिपाद्य यागस्य देवताराधनरूपत्वाद्देवतैव [6]फलदा आत्मप्रधानभूतेति तत्सामान्यं हविस्सामान्याद्बलीय इति शङ्कानिराकरणाथमिदं सूत्रम्। [7]"**गुणत्वेन देवताश्रुतिः**' इत्यपूर्वद्वारा कर्मण एव फलप्रदत्वात् प्राधान्यम्। देवतायास्तद्गुणत्वेन श्रुतिरिति न प्राधान्यमित्युक्तम्। इह च [8]"**फलमत उपपत्तेः**' इत्यत्र कर्माराधिताया देवतायाः फलप्रदतया प्राधान्यमुक्तम्।

तथा च नवमे [9]"**देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात्**' इत्यादि सूत्रैर्देवता निराकृता। तत्र हि किमाराधितायाः देवतायाः फलमुत देवतागुणत्वात् कर्मण

---

[1] **सर्ववेदान्तप्रत्ययं** चोदनाद्यविशेषात्। (ब्र.सू.३.३.१)

[2] **भेदान्नेति चेदे**कस्यामपि। (ब्र.सू.३.३.२)

[3] **आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां** तस्मादनित्यमुच्यते। (मी.सू.१.२.१)

[4] **विधिना त्वेकवाक्यत्वात्** स्तुत्यर्थेन विधीनां स्युः। (मी.सू.१.२.७)

[5] विप्रतिपत्तौ हविषा नियम्येत **कर्मणस्तदुपाख्यत्वात्**। (मी.सू.८.१.३२)

[6] क - प्रसन्ना फलदा।

[7] मी.सू.८.१.३४.

[8] ब्र.सू.३.२.३७.

[9] मी.सू.९.१.६.

एव। कर्मण एवापूर्वद्वारा फलमिति संशयस्य कर्मकारकं क्रियेप्सितत्वात् प्रधानम्। तेनापि व्याप्यमानत्वात् संप्रदानम्। ततोऽपि प्रधानं देवता च संप्रदानं यागश्च देवतापूजा। सा च लोके पूज्यमानार्थातिथिभोजनवत् सा चाराधिता फलमाराधयित्रे ददातीति युक्तम्।

एवञ्च लोकप्रसिद्धपदार्थस्वभावो नातिक्रान्तो भवति। अवश्यं च यागस्यापि फलसाधनत्वं केनचित् द्वारेणाश्रयितव्यम्। तत्र [१]रात्रिसत्रन्यायेन वाक्यशेषमन्त्र-वर्णाद्यवगतदेवतातृप्तिरेव द्वारमिति कल्पयितुं युक्तम्। नात्यन्ताप्रतीतमपूर्वं कल्पयितुमिति पूर्वपक्षं कृत्वा राद्धान्तितम्। प्रत्ययाभिहितभावना पुरुषार्थं भाव्यमपेक्ष्यमाणा पदगतमपि यागमयोग्यत्वादुपेक्ष्य वाक्याद्युपनीतस्वर्गादि गृहीत्वा तस्य साधनमाकाङ्क्षन्ती समानपदश्रुत्युपनीतयागविरोध्यत्करणं गृहीत्वा, इत्थंभावापेक्षायां द्रव्यं देवतं भूतभव्यं यागनिर्वाहनक्षमं तादर्थ्येन गृह्णन्ति देवतां [२]यागार्थं करोति। न च प्रागवगतं देवतायाः फलार्थत्वं येन तदाराधनाय यागविधिः स्यात्। एवञ्च शब्देन यागादेव फलं गम्यत इति। इह तु देवताधिकरणे देवताविग्रहाविग्रहादिकं समर्थितम्।

तथा नवम एव [३]'**असंयोगात्तदर्थेषु तद्विशिष्टशब्दः प्रतीयेत**' इत्यधिकरणे देवतानिरासः प्रतीयते। तथाहि ज्योतिष्टोमे देवताप्रकाशनार्थः सुब्रह्मण्या निगदः [४]'**इन्द्र आगच्छ हरिव आगच्छ**' इत्यादिः सोऽग्निष्टुत्यतिदिष्टः। तत्राग्नेयी '**सुब्रह्मण्या**' इति वचनादिन्द्रपदस्थानेऽग्निपदं प्रक्षिप्यते। हरिव आदिपदेषु किमूहितव्या न वेति संशयः। तदर्थञ्च किं समवेतवचनं न वेति। तत्र '**इन्द्र हरिव**' इत्यादिभिरिन्द्रे एते गुणास्सन्तीति गम्यते। ततश्च स्वगुणद्वारेणेन्द्रं प्रकाशयितुममीषामुच्चारणं दृष्टार्थत्वात्, तेनाग्निरपि तथा प्रकाश्यत इति। हरिव आदिपदस्थाने रोहितवदादिशब्दोऽहः कार्य इति पूर्वपक्षे सिद्धान्तः। वाक्यशेषाणां स्तुतिमात्रपरत्वादिन्द्रेनैतेषां गुणानां सद्भावे किञ्चित्प्रमाणमस्ति। तस्मादसमवेतार्थत्वादविद्यमानैरेव गुणैः संबन्ध्यात् दृष्टार्थमिन्द्रः प्रकाश्यत इति। अग्निरपि तथैव प्रकाश्यत इत्यनूह इति। तदपि शारीरकदेवताधिकरणविरुद्धम्।

---

[१] **रात्रिसत्रन्यायः**-

[२] क - यागार्थाम्; घ - यागार्थम्

[३] असंयोगात्तदर्थेषु तद्विशिष्टशब्दः प्रतीयेत। (मी.सू.९.१.४२)

[४] निघृष्वैरसमायुतैः। कालैर्हरित्वमापन्नैः। इन्दायाहि सहस्रयुक्। अग्निर्विभ्राष्टिवसनः। वायुः श्वेतसिकद्रुकः। संवत्सरो विषूवर्णैः। नित्यास्तेनुचरास्तव। **सुब्रह्मण्यों सुब्रह्मण्यों सुब्रह्मण्यों**। **इन्द्र आगच्छ हरिव आगच्छ** मेधातिथेः। मेष वृषणश्वस्य मेने। (तै.आ.१.१.१२.३)

तथा दशमे - [१]‘**विधिशब्दस्य मन्त्रत्वे भाव स्यात्तेन चोदना**’ इत्यनेनाग्नेययागे ‘यदाग्नेयोऽष्टाकपालो भवति’ इति विहिते हविषस्त्यागवेलायामग्निशब्दसमानार्थेन शुद्ध्यादिशब्देनापि देवतोद्देशे प्राप्ते विधिगतशब्देनाग्निशब्देनैव हविषस्संबन्धचोदना। तस्मात्तस्यैव मन्त्रत्वेनोपादानमित्युक्तम्। तथा [२]‘**तथोत्तरस्यां ततौ तत् प्रकृतित्वात्**’ इत्यत्र सौर्यचरावतिदेशप्राप्तेषु [३]‘**अग्नेरहमुज्जितिमनूज्जेषम्**’ इत्यादि मन्त्रेष्वप्यविशेषात् सूर्यसवित्रादिष्वन्यतम ऊहितव्य इति प्राप्ते सूर्यशब्दस्यैव[४] देवतात्वेन तस्यैवोह इति परिहृतम्।

एवमाधाने [५]‘**अग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपत्**’ [६]‘**अग्नये पावकाय। अग्नये शुचय**’ इति विहितपवमानेष्टौ [७]‘**अविकारो वार्थ शब्दानपायात्**’ इति सूत्रेणाग्नेययागादतिदेशप्राप्तेषु [८]मन्त्रेष्वविकारो निर्गुणमभिधानं स्यात्, [९]विधिशब्दस्य

---

[१] मी.सू.१०.४.२३.

[२] प्रकृतौ यथोत्पत्तिवचनमर्थानां तथोत्तरस्यां ततौ तत्प्रकृतित्वादर्थे चाकार्यत्वात्। (मी.सू.९.३.१)

[३] बर्हिषोऽहं देवयज्यया प्रजावान् भूयासं नराशँसस्याहं देवयज्यया पशुमान् भूयासमग्नेः स्विष्टकृतोऽहं देवयज्यया आयुष्मान् यज्ञेन प्रतिष्ठां गमेयमग्नेरहमुज्जितिमनूज्जेषँ सोमस्याहमुज्जितिमनूज्जेषं **अग्नेरहमुज्जितिमनूज्जेष**मग्नीषोमयोरहमुज्जितिमनूज्जेषम् इन्द्राग्नयोरहमुज्जितिमनूज्जेषं इन्द्रस्याहम्। उज्जितिमनूज्जेषं महेन्द्रस्याहमुज्जितिमनूज्जेषमग्नेः स्विष्टकृतोऽहमुज्जितिमनूज्जेषं वाजस्य मा प्रसवेनोदङ्ग्राभेणोदग्रभीत्। (तै.सं.१.६.४.१-२)

[४] क - शब्दस्येव; घ - शब्दस्यैव

[५] तद्देवाविजित्य। पुनरवारुरुत्सन्त। **तेऽग्नये पवमानाय पुरोडाशमष्टाकपालं निरवपन्**। पशवो वा अग्निः पवमानः। यदेव पशुष्वासीत्। तत्तेनावारुन्धत। **तेऽग्नये पावकाय**। आपो वा अग्निः पावकः। यदेवाप्स्वासीत्। तत्तेनावरुन्धत। (तै.ब्रा.१.१.६.२)

‘**तेऽग्नये पवमानाय पुरोडाशमष्टाकपालं निरवपन्**।’ (तै.सं.२.४.१.२)

[६] त्रीणि हवीँषि निर्वपति। विराज एव विक्रान्तं यजमानोनुविक्रमते। **अग्नये पवमानाय। अग्नये पावकाय। अग्नये शुचये**। यदग्नये पवमानाय निर्वपति। पुनात्येवैनम्। यदग्नये पावकाय। पूत एवास्मिन्नन्नाद्यं दधाति। यदग्नये शुचये। ब्रह्मवर्चसमेवास्मिन्नुपरिष्टाद्दधाति। (तै.ब्रा.१.१.५.१०)

**यदि निर्वपेदग्नये पवमानायाग्नये पावकायाग्नये शुचय** इति तिस्र आज्याहुतीः सोमदेवताभ्यो वो हुत्वा निर्वपेत्। (आ.श्रौ.सू.५.२०.५)

[७] **अविकारो वार्थ शब्दानपायात्** स्यात् द्रव्यवत्। (मी.सू.१०.४.२७)

[८] मन्त्रविशेषनिर्देशान्न देवताविकारः स्यात्। (मी.सू.१०.४.३१)

[९] विधिशब्दस्य मन्त्रत्वे भावः स्यात्तेन चोदना। (मी.सू.१०.४.२३)

तदर्थदेवतायाश्च तथाप्यनपायात्। यथा 'सा वा एषा सर्वदेवत्या यदजा वशा, वायव्यामालभेत' इत्यजावशाचोदितमपि द्रव्यं विकृतौ 'छागस्य वपाया मेदस' इत्यविकृतेनैव मन्त्रेणाभिधीयते। अर्थशब्दयोरनपायादिति पूर्वपक्षमुक्त्वा शब्दस्वरूपमेव क्रतुसमवायिनार्थ इत्युक्तम्। [१]'**आरम्भासमवायाद्वा चोदितेनाभिधानं स्यात्**' इत्यादि सूत्रेणारम्भेण स्वरूपेणासमवायाद्देवताया इत्यर्थः।

द्रव्यदृष्टान्तवैषम्यं चोक्तम् - [२]'**द्रव्येष्वारम्भभागित्वादर्थे विकारः सामर्थ्यात्**' इति द्रव्याणां स्वरूपेण कर्मान्वयित्वात्तस्य छागशब्देन निर्गुणेनाभिधानमुपपद्यते। देवता तु श्रुतिसमवायिनीति तस्या विकारः कर्तव्य इत्यर्थः। एतदपि शारीरकदेवताधिकरण-विरुद्धम्।

किञ्चैकशास्त्रे सर्ववेदान्तप्रत्ययन्यायेन सर्वशाखाप्रत्ययन्यायस्य पौनरुक्त्य-प्रसङ्गः। काण्डद्वयस्थयोरपशूद्राधिकरणयोश्च पौनरुक्त्यप्रसङ्गः। अतः कथमैक-शास्त्र्यमिति।

उच्यते - न तावदर्थवादाधिकरणसमन्वयाधिकरणयोर्विरोध उत्सर्गापवादरूपत्वात्। न चापवादत्वे तत्सादेश्यप्रसङ्गः। पाणिनीये द्वैतीयस्य लुकः षाष्ठिकालुका अपवाददर्शनात्। कर्मविचारे अपवादस्यानपेक्षितत्वात्। तत्रोत्तरपदाधिकारसंबन्धादिवत् इहापि ब्रह्मविचारसंबन्धादुत्सर्गवैदेश्योपपत्तेः।

यद्वा - अनुष्ठानापर्यवसाने प्रयोजनाभावादविवक्षितार्थत्वशङ्कायां विध्येक-वाक्यत्वेनार्थवादस्य प्रामाण्यमुक्तम्। समन्वयसूत्रे त्वनुपासनाशेषसिद्धपरवाक्यानां विध्येकवाक्यत्वाभावेऽपि प्रत्यक्षादेरिव पुरुषार्थोपस्थापकतया तत्र कामनोत्पादनमुखेन तत्साधनप्रवर्तकतयानुष्ठानपर्यवसायित्वमुपपाद्यत इति। देवतायाः संप्रदानत्वेन[३] कर्मभूतेन द्रव्येणापि व्याप्यते, न ततोऽपि प्राधान्यात् तत्साम्यमप्रधानद्रव्यसाम्याद्बलीय इति शङ्कानिराकरणार्थं [४]'**गुणत्वेन देवताश्रुतिः**' इति सूत्रम्।

---

[१] **आरम्भासमवायाद्वा चोदितेनाभिधानं स्याद**र्थस्य श्रुतिसमवायित्वादवचने च गुणशास्त्रमनर्थकं स्यात्। (मी.सू.१०.४.२८)

[२] द्रव्येष्वारम्भगामित्वादर्थे विकारः सामर्थ्यात् (मी.सू.१०.४.२९.)

[३] क - संप्रदातृत्वेन; घ - संप्रदानत्वेन

[४] मी.सू.८.१.३४.

तस्यार्थः - यद्यप्यार्थप्राधान्यशालिनी देवता, तथाप्यनुष्ठेयपरे विधिवाक्ये द्रव्यदेवते द्वे अपि गुणत्वेनैव श्रूयेते, न ततस्तयोर्विशेषः। किञ्च [१]'**ऐन्द्राग्नम्**' इत्यत्र द्रव्यं विशेष्यत्वेन प्रधानं, देवता विशेषणत्वेन गुणभूता। देवताया अपि यद्यप्यार्थप्राधान्यमस्ति तथापि [२]'**ऐन्द्राग्नमेकादशकपालं निर्वपेत्**' इति वाक्यार्थप्रतिपत्तिसमये कथं-भावस्याकांक्षितत्वात् तद्दशायाञ्चार्थप्राधान्यस्याप्रतीतेः तदवस्थायां प्रतीतशाब्द-प्राधान्यानुरोधेनातिदेशस्य कर्तव्यत्वादाग्नेयादिविध्यन्तनियमस्सिद्ध्यति।

[३]'**देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात्**' [४]'**आर्थापत्याच्च**' [५]'**ततश्च तेन संबन्ध**' इति नवमे पूर्वपक्षसूत्राणामयमर्थः - क्रियाप्रधानवाक्येऽन्यत् भूतापि देवता आर्थप्राधान्यात् स्वाराधनार्थं द्रव्यं प्रयोजयेदतिथिवत् तस्याश्चाराध्यत्वं विभूतिमत्वाद्युक्तम्। सा च निरपेक्षापि परिचरणेन प्रसन्ना भवतीति। ततः फलसंबन्धस्संभवतीति। [६]'**अपि वा शब्दपूर्वत्वाद्यज्ञकर्मप्रधानं स्याद्गुणत्वे देवता श्रुतिः**' [७]'**अतिथौ तत्प्रधानत्वमभावः कर्मणि स्यात्तस्य प्रीतिप्रधानत्वात्**' इति चतुर्णां सिद्धान्तसूत्राणामयमर्थः -

यद्यप्यार्थप्राधान्यमस्ति तथापि कर्तव्योपदेशपरे वाक्ये फलकामप्रवर्तिका शाब्दप्रधानभूता पूर्वं कर्तव्यतया बुद्ध्यारूढा क्रियैव स्वसिध्यर्थं द्रव्यदेवतादि प्रयुङ्क्ते। अतो गुणत्वेन श्रुता देवता न प्रयोजिका। अतिथेस्त्वप्रयोजकत्वे कर्मण एवाभावस्स्यात्। आतिथ्यकर्म ह्यागतातिथिनिमित्तकमेव विधीयते। न ह्यन्यप्रयुक्तातिथ्यकर्मनिर्वर्त्तनाय अतिथिरानीयत इति अत्र न किञ्चिद्देवताविरोधी दृश्यते।

[८]'**फलदेवतयोश्च**' इति पूर्वाधिकरणे पूर्वत्र ह्यन्यादेर्व्रीह्यादि स्वरूपान्वयित्वे आनर्थक्याद्यतस्य पूर्वीयत्वरूपं तदन्वयित्वेन [९]<u>नैवारचरवद्वादाद्यूहस्योक्तत्वात्</u> तद्वैषम्येण

[१] **ऐन्द्राग्ने** तु लिङ्गभावात् स्यात्। (मी.सू.३.२.४१)

[२] **ऐन्द्राग्नमेकादशकपालं निर्वपेत्** प्रजाकामः। (तै.सं.२.२.१)

[३] मी.सू.९.१.६.

[४] मी.सू.९.१.७.

[५] मी.सू.९.१.८.

[६] मी.सू.९.१.९.

[७] मी.सू.९.१.१०.

[८] मी.सू.९.१.४.

[९] क - नैवारचरावघाताद्यूहस्योक्तत्वात्

## ४. शास्त्रभेदभङ्गः

देवतास्वरूपार्थत्वेऽपि तस्या एव फलप्रदातृत्वेन तद्वदानर्थ्यक्याभावाद्वैकृतदेवतान्तरे न मन्त्रोह इति पूर्वपक्षमाशङ्क्य तस्या अपि मन्त्रेण याचनमात्रात् फलदातृत्वे मानाभावात् क्रियागुणत्वेनैव 'फलोपयोग्यत्वात् सिद्ध्यत्यूह' इत्युक्तम्। तच्चेदमधिकरणं '**सौर्यञ्चरुन्निर्वपेत् ब्रह्मवर्चस काम**' इति श्रुतम्। प्रकृतौ च फलप्रकाशकः [1]'**अगन्म सुवस्सुवरगन्म**' इति मन्त्रः देवता प्रकाशकश्च [2]'**अग्नेरहमुज्जितिमनूज्जेषाम्**' इत्यादिः तौ च सौर्ये चोदकतः प्राप्तौ किं तयोरविकारेण प्रयोग उत वैक्तापूर्वीयफलदेवता-पदं प्रक्षिप्य विकारेणेति।

तदर्थञ्च किं तौ फलदेवतास्वरूपप्रयुक्तौ उतापूर्वीयरूपप्रयुक्ताविति चिन्ता। तत्र फलस्य प्रधानत्वात् देवताया अपि फलप्रदातृत्वेन प्रधानत्वात् तत्स्वरूपार्थत्वेऽपि आनर्थक्याभावात् स्वरूपार्थत्वमेवेति पूर्वपक्षः।

सिद्धान्तस्तु - प्रधानमपि फलं न प्रकाशितमात्रं सिद्ध्यति। देवतापि न प्रकाशन-मात्रात् सिद्ध्यति। देवतापि न प्रकाशनमात्राद्याचमनमात्राच्च फलं ददाति मानाभावात्। किन्तु क्रियागुणत्वेन तयोः फलोपयोगित्वात् स्वरूपान्वयित्वे आनर्थक्यादपूर्वीय-स्वरूपान्वितमेवफलदैवतम्। अतस्तत्रापि मन्त्रस्योह इति। इह तु क्रियागुणत्वमेव देवतायाः कुतः येन क्रियाप्रयुक्तता तस्याः स्यात् अतिथिवत् सैव क्रियाप्रयोजिका। तां प्रति प्रधानभूता चेत्याक्षिप्य समाधीयत इति।

एवञ्च पूर्वाधिकरण एव देवतामभ्युपगम्य गुणत्वस्योक्तत्वादस्याधिकरणस्य पौनरुक्त्यमिति शङ्का निरस्ता। [3]'**असंयोगात्तदर्थेषु**' इत्यत्रापि [4]सुब्रह्माण्यायामिन्द्रपदं कर्मसमवेतदेवताप्रकाशकत्वान्न स्तुत्युपयोगि। 'हरिव' आदिपदं तु तेषां गुणानां

---

[1] **अगन्म सुवस्सुवरगन्म** संदृशस्ते मा छित्सि यत्ते तपस्तस्मै ते माऽऽवृक्षि सुभूरसि श्रेष्ठो रश्मीनामायुर्धा अस्यायुर्मे धेहि वर्चोधा असि वर्चो मयि धेहीदमहममुं भ्रातृव्यमाभ्यो दिग्भ्योस्यै दिवोऽस्मादन्तरिक्षादस्यै पृथिव्या अस्मादन्नाद्यान्निर्भजामि निर्भक्तः स यं द्विष्मः। (तै.सं.१.६.६.१)

[2] तै.सं.१.६.४.१-२.

[3] **असंयोगात्तदर्थेषु** तद्विषिष्टं प्रतीयेत। (मी.सू.९.१.४२)

[4] निघृष्वैरसमायुतैः। कालैर्हरित्वमापन्नैः। इन्द्रायाहि सहस्रयुक्। अग्निर्विभ्राष्टिवसनः। वायुः श्वेतसिकद्रुकः। संवत्सरो विषूवर्णैः। नित्यास्तेनुचरास्तव। **सुब्रह्मण्यों सुब्रह्मण्यों सुब्रह्मण्यों**। **इन्द्रागच्छ हरिव आगच्छ** मेधातिथेः। मेष वृषणश्वस्य मेने। (तै.आ.१.१.१२.३, तै.आ.१.१.१२.३)

कर्मासमवायाद्देवतास्तुत्यर्थतयोपयुज्यते। स्तुतिश्च सता असता च भवतीति विद्यमानेनेन्द्र इव विद्यमानेनाग्नावपि न विरुद्ध्यते। उत्कृष्टदेवतागुणेन चापकृष्टदेवतास्तुतिः प्रीत्यतिशयकरी, सेनापतौ राजगुणैस्स्तुतिवदग्निप्रकाशनार्थमग्निपदोहे न्यायादेव सिद्धेऽप्याग्नेयीति वचनं विशेषणे ऊहपरिसंख्यार्थमेव। वस्तुतस्त्वाग्नेयीति निर्वचनमेव देवतां साधयति, देवतासत्वे हि गुणानामूहप्रसङ्गेन न परिसंख्यात्वसिद्धिः। न चेयं परिसंख्या न भवतीति वाच्यम्। तथा सत्याग्नेयीति वचनवैयर्थ्यप्रसङ्गात्। ततश्चेन्द्र-गुणप्रकाशकैरेव पदैर्लक्षणयाग्निगुणप्रकाशनं द्रष्टव्यम्।

[1]‘**विधिशब्दस्य मन्त्रत्वे भावस्स्यात्**’ इति सूत्रस्यायमर्थः - विधिवाक्यगतशब्द एव मन्त्रेऽपि प्रयोक्तव्यः, येन शब्देनाग्नेर्हविस्संबन्धचोदना यतः यच्छब्दकृतो देवताया द्रव्यसंबन्धः यष्टुश्च यष्टव्यभूतस्वसंबन्धः तेन शब्देनाभिधाने प्रीत्यतिरेकादुपस्थिततत्वाच्च देवतोद्देशार्थं शब्दापेक्षायां स एव गृह्यते। दृश्यते लोके संबन्धद्योतकोपाध्यायमातुलादि शब्देनाभिधाने प्रीत्यतिरेकः तदन्योच्चारणे कोपश्च। युक्तञ्चानियतशब्दोपादाने विकल्प-प्रसङ्गात्। विधिपाठक्रमस्येव चोदनोपस्थितस्यैव ग्रहणम्। द्रव्यदेवतासंबन्धहेतु-व्यापारानुष्ठाने तद्विधायकवाक्यगतश्शब्दः सन्निहित इति तस्योपादानमस्तु। सौर्यचरावति-देशप्राप्त [2]‘**उज्जिति**’ आदिमन्त्राणां सौर्यवाक्यविहितत्वाभावेन सन्निहितत्वाविशेषात् यस्य कस्याप्युपादानं स्यादिति शङ्कानिरासार्थं [3]‘**तथोत्तरस्याम्**’ इति सूत्रम्। प्रकृतावुज्झित्यादि निगमेषु विधिगतशब्दस्य दर्शनात्तथैव विकृतावपि युक्तमिति सूत्राक्षरयोजना।

[4]‘**आरम्भासमवायात्**’ इत्यादिसूत्रद्वयस्यापि[5] अयमर्थः - देवतायाः स्वरूपेण यागानिर्वर्तकत्वाच्छब्देनोद्दिश्यमानतया निर्वर्तकत्वात् शब्देऽपेक्षिते विनिगमकाभावात् शब्दद्वयोपपादनं युक्तम्। अन्यथा विधावपि पदद्वयमनर्थकं स्यात्। द्रव्यस्य तु स्वरूपेण

---

[1] **विधिशब्दस्य मन्त्रत्वे भावस्स्यात्** तेन चोदना। (मी.सू.१०.४.२३)

[2] तै.सं.१.६.४.१-२.

[3] **तथोत्तरस्यां** ततौ तत्प्रकृतित्वात्। (मी.सू.१०.४.२५) प्रकृतौ यथोत्पत्तिवचनमर्थानां **तथोत्तरस्यां** ततौ तत्प्रकृतित्वादर्थे चाकार्यत्वात्। (मी.सू.९.३.१)

[4] **तथारम्भासमवायाद्वा** चोदितेनाभिधानं स्यादर्थस्य श्रुतिसमवायित्वादवचने च गुणशास्त्रमनर्थकं स्यात्। (मी.सू.१०.४.२८)

[5] **सूत्रद्वयम्** - तथारम्भासमवायाद्वा चोदितेनाभिधानं स्यादर्थस्य श्रुतिसमवायित्वाद वचने च गुणशास्त्रमनर्थकं स्यात् (मी.सू.१०.४.१८), द्रव्येष्वारम्भगामित्वादर्थे विकारः सामरथ्यात् (मी.सू.१०.४.१९)।

### ४. शास्त्रभेदभङ्गः

यागनिर्वर्तकत्वादनपेक्षितश्शब्दो न शास्त्रार्थ इति न तद्वशेनाज्ञाशब्दोहः। अविकारेणापि मन्त्रस्य द्रव्याभिधानसामर्थ्यात्। किञ्च

[1]'**पावकः पावमानश्च शुचिरग्निश्च ते स्मृताः।**
**निर्मन्थ्यः पवमानस्तु वैद्युतः पावकः स्मृतः।।**'
[2]'**शुचिः शोचस्तु विज्ञेयः स्वाहापुत्रास्तु ते त्रय**'

इति लैङ्गाद्युक्तरीत्या देवतानां हि भिन्नत्वात् तदसाधारण्यार्थं [3]'**अग्नये पावकाय**' इति निर्देशो युक्तः। इदानीमितरव्यावृत्तस्वरूपपरोऽयमारम्भशब्दः, अतो न तत्रापि विरोधः।

सूत्रविरोधं वदद्भिरपि न्यायविरोधस्यानिष्टत्वादुक्तरीत्यैव देवताङ्गीकारिभिर्न्याया वाच्याः। अन्यथा देवतावादेनात्यन्तनिराकरणेन सिद्धान्तसमर्थनासंभवादनुष्ठान-वैपरीत्यप्रसङ्गात्[4]। उक्तरीत्या न्यायप्रतिपादने च सूत्राण्यपि न विरुध्यन्ते। यद्येषां सूत्राणां परोक्तार्थ एव स्यात्तदा देवतासद्भावनिबन्धनपूर्वपक्षे कस्मिंश्चित् तदभावेन निरस्ते पुनस्तन्निबन्धनपूर्वपक्षानुत्थानादितरेषामधिकरणानामुत्साद एव स्यात् ।

ननु यदि जैमिनिबादरायणयोरैककण्ठ्यं तर्हि [5]'**मध्वादिष्वसंभवादनधिकारं जैमिनिः**' [6]'**धर्मं जैमिनिरत एव**' [7]'**शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः**' [8]'**परामर्शं जैमिनिरचोदनाच्चापवदति हि**' [9]'**परं जैमिनिर्मुख्यत्वात्**' [10]'**ब्राह्मेण जैमिनिरुपन्यासादिभ्यः**' [11]'**भावं जैमिनिर्विकल्पामननात्**' इत्यादिषु जैनिनिमतनिरासः

---

[1] लिङ्ग.पु.१.६.१.

[2] शुचिः सौरस्तु विज्ञेयः स्वाहापुत्रास्त्रयस्तु ते।
पुत्रैः पौत्रैस्त्विहैतेषां संख्या संक्षेपतः स्मृता।। (लिङ्ग.पु.१.६.२)

[3] तै.ब्रा.१.१.५.१०; १.१.६.२.

[4] घ - वैपरीत्याप्रसङ्गात्

[5] ब्र.सू.१.३.३०.

[6] ब्र.सू.३.२.३९.

[7] ब्र.सू.३.४.२.

[8] ब्र.सू.३.४.१८.

[9] ब्र.सू.४.३.११.

[10] ब्र.सू.३.४.५.

[11] ब्र.सू.४.४.११.

कथमिति चेत् उच्यते- गुरुशिष्यभावात् [१]'**तत्प्रमाणं बादरायणस्यानपेक्षत्वात्**' इति शिष्येणाचार्यपुरस्कारात्। आचार्येण च [२]'**साक्षादप्यविरोधं जैमिनिः**' [३]'**सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति**' [४]'**अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके**' [५]'**तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात् तद्रूपाभावेभ्य**' इत्यादिभिः स्वाभिमतार्थस्य जैमिनिमतत्वेनोपन्यासाच्चैककण्ठ्ये सिद्धे हयशिर उपाख्यानादिषु जैमिनेर्भगवद्बादरायणोपदिष्टब्रह्मविद्यात्वावगमाच्छ्रवणवेलायां जैमिनिना कृतानि चोद्यानि शिष्यानुग्रहातिरेकात्तद्बुद्धिप्रचिख्यापयिषया तदुक्ततयोपन्यस्य निरासः कृत इति।

शूद्रेत्यामन्त्रेण निमित्ताधिकाशङ्कानिराकरणार्थत्वान्न शारीरकापशूद्राधिकरणस्य पौनरुक्यम्। सर्ववेदान्तप्रत्यये पौनरुक्त्यशङ्का तदर्थानवबोधविलसिता। न हि तत्र सर्ववेदान्तप्रत्ययमेकमनेकं वेति संशयः। न चानेकमिति पूर्वः पक्षः, नाप्येकमिति राद्धान्तः। किन्तु सर्वशाखाप्रत्ययन्यायोऽत्र प्रवर्तते न वेति संशयः। न प्रवर्तत इति पूर्वपक्षः, प्रवर्तत इति राद्धान्तः।

कुतोऽयमर्थस्समधिगतः साध्यानिर्देशादिति ब्रूमः। तदनिर्देशो हि तत्प्रवृत्तिप्रतिपादनपरेऽस्मिन् सूत्रे तत्साध्यस्यैवान्वयात्। शाखान्तराधिकरणसिद्धान्तहेतूनामैक्यसाधकानां संयोगरूपचोदनाख्याविशेषाणां सत्वेऽप्यक्षरविद्यायां [६]'**तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्**' इत्याथर्वणिकासाधारणशिरोव्रतस्य मुण्डकेऽक्षरविद्याङ्गत्वदर्शनेन वाजसनेयकाक्षरविद्यातो भेदावश्यंभावात् सारस्वतसत्रलिङ्गदर्शनवत् तस्य सामान्यतो वेदान्तविहितविद्यासु शाखान्तराधिकरणन्यायाप्रवृत्तौ लिङ्गदर्शनत्वात् तन्निमित्ताशङ्कानिराकरणार्थत्वान्न पौनरुक्त्यम्।

---

[१] औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे **तत्प्रमाणं बादरायणस्यानपेक्षत्वात्**। (मी.सू.१.१.५)

[२] ब्र.सू.१.२.२९.

[३] ब्र.सू.१.२.३२.

[४] ब्र.सू.१.४.१८.

[५] ब्र.सू.३.४.४०.

[६] क्रियावन्तः श्रोत्रियाः ब्रह्मनिष्ठाः स्वयं जुह्वते एकर्षिं श्रद्धयन्तः। **तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्**।। (मुण्डक.३.२.१०)

### ४. शास्त्रभेदभङ्गः

सारस्वतसत्रे हि श्रूयते - '**ये पुरोडाशिनस्त उपवसन्ति ये सान्नायिनस्ते वत्सं धारयन्ति**' इति। सान्नायाधिष्टप्रथमयज्ञास्सोमयाजिन एव सान्नायविधानात्। अन्ये पुरोडाशिनः '**पुरोडाशाभ्यामेवासोमयाजिनं याजयेत्**' इति श्रुतेः। तत्र ताण्डकशाखायां [१]'**एष वा व प्रथमो यज्ञो यज्ञानां न ज्योतिष्टोम**' इति क्रत्वन्तराणां ज्योतिष्टोम-पूर्वकत्वावगमात् सारस्वतसत्रे पुरोडाशिदर्शनं सर्वशाखागतसारस्वतसत्रभेदेनोपपद्यते। भेदे तु ताण्डकशाखागतस्यैव सारस्वतसत्रस्य ज्योतिष्टोमपूर्वकत्वं शाखान्तरे तदनुक्तेः। तद्विहितसारस्वतसत्रे पुरोडाशिदर्शनं उपयनम्[२]। अतो 'नाना शाखागतानां सारस्वतसत्राणां मिथो भेद' इति सारस्वतसत्रमात्रे लिङ्गदर्शनं सामान्यत उक्तम्।

निरुक्ताक्षेपपरिहारार्थमिदं सूत्रं [३]'**स्वाध्यायस्य तथात्वे हि समाचारेऽधिकाराच्च सववच्च तन्नियम**' इति। अयमर्थः - तथात्वं सप्रकारत्वं साङ्गत्वमिति यावत्। स्वाध्यायाध्ययनस्य साङ्गत्वसिद्ध्यर्थं शिरोव्रतनियम इत्यर्थः। कुत एतत्। [४]'**नैतदचीर्णव्रतोऽधीत**' इति तस्याध्ययनसंयोगात् समाचारेऽधिकाराच्च समाचाराख्ये ग्रन्थे इदमपि वेदव्रतेन व्याख्यातमित्यदिदेशात्।

अस्यायमर्थः - इदमिति प्रस्तुतं व्रतान्तरं परामृश्यते। वेदव्रतेन शिरोव्रतेन शिरोव्रतपुष्कलोपदेशं कृत्वा व्रतान्तरं प्रस्तुत्य, तत्र शिरोव्रतक्रममतिदिशद्वाक्यं शिरोव्रतं वेदशब्देन निर्दिदेश, सववच्च तन्नियमः। यथा हि सवहोमास्सप्त सूर्यादयश्शतौदनपर्यन्ता आथर्वणिकैकाग्निसंबन्धिनस्तत्रैव भवन्ति न त्रेताग्निषु।

[५]'**तेषामेव**' इत्यस्यायमर्थः - शिरोव्रतवतामेवैतामक्षरविद्यां वदेत उपदिशेदिति उपदेशश्चोपस्थितोपनिषद्वाक्येनैवेति लभ्यते। सन्निहितपरित्यागे नियामकाभावात् '**नैतदचीर्णव्रतोऽधीते**' इत्युत्तरवाक्यानुगुण्याच्च। शिरोव्रतं नाम शिरस्यङ्गारपात्रधारण-प्रधानः कश्चिद्व्रतविशेषः।

---

[१] **एष वा व प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोम।** (ताण्ड्य.ब्रा.६.३.१)

[२] क - उपपन्नम्

[३] ब्र.सू.३.३.३.

[४] तदेतत् सत्यमृषिरङ्गिराः प्रोवाच **नैतदचीर्णव्रतोऽधीते**।
नमः परम ऋषिभ्यो नमः परम ऋषिभ्यः।। (मुण्डक.३.२.११)

[५] मुण्डक.३.२.१०.

यदाह कश्चित् - शिरोव्रतं नामाथर्वशिरस्युपदिष्टं भस्मधारणमेव। तदेवात्र सर्वविद्याङ्गतया विधीयत इति, तन्न। शिरोव्रतशब्दस्य पूर्वोक्तव्रतपरत्व एव समुदायावयवयोस्स्वारस्यात् समुदायो हि तत्रैव सुप्रसिद्धः। चिरप्रसिद्धोऽपि[1] शरीरावयवविशेषे न ह्यनथर्वोपपदश्शिरश्शब्दो ग्रन्थविशेषोपस्थापनसमर्थः।

किञ्च [2]"**तेषामेवैतां ब्रह्मविद्यां वदेत**' इत्युपदेशे हि व्रतनियमः श्रूयते। न विद्याया नाध्ययनेनापि स्वाध्यायेऽथापि विद्याङ्गत्वमध्ययनाङ्गत्वं वा कल्प्यते। ततश्च [3]"**नैतदचीर्णव्रतोऽधीते**' इत्युत्तरवाक्यानुसाराच्च चरितव्रतायैवेदमुपदेष्टव्यम्। अध्ययनस्य तदङ्गकत्वादित्यभिप्रायकल्पनमेव वरम्। न तु विद्याङ्गत्वाभिप्रायकल्पनं कल्पकाभावात्। 'न हि चरितव्रतमनुष्ठापयेत्' इति श्रूयते येनैवं कल्प्येत उपदेशात् प्राक्कालीनतया श्रूयमाणस्योपदिष्टार्थानुष्ठानाङ्गत्वं कस्यापि बुद्धिं कथमिव समारोहेत्। कथञ्च वेदाचार्यद्रोहकर्तव्यता। सर्वेऽपि भाष्यकारास्सूत्रकारमेवानुरुन्धते। तथैव परभाष्यकारोऽप्येतत् सूत्रविरोधादेव तामसपुराणवचनानुसारेणात्रत्यशिरोव्रतपदस्य यत्किञ्चित् परत्ववर्णनं यत्किञ्चिदेव।

किञ्च न हि तत्र पुराणे एतद्वाक्यस्थं शिरोव्रतपदमन्यपरमित्युक्तम्। किन्तु शिरोव्रतपदस्यार्थान्तरकीर्तनमात्रं कृतम्। अतः तावन्मात्रावलंबने नाचार्यद्रोहः कार्यः। यदुक्तं 'शिरोव्रतस्य [4]अध्ययनाङ्गत्वे बह्वृचाय शौनकाय कथमुपदेश' इति, तन्न। अध्ययनं हि नाम ग्रहणपर्यन्तमनूच्चारणम्। न हि शौनकेन तत्क्रियते। किन्तु गुरुमुखतो मोक्षसाधनविशेषो ज्ञायते। एवञ्च शिरोव्रतस्याथर्वणाध्ययनार्थताया अन्यतः प्राप्तत्वात् विद्याङ्गत्वविधानसामर्थ्याभावादुत्तरवाक्यानुसाराच्च।

मुण्डके शिरोव्रताङ्गत्वानुवादमुखेन विद्याप्रशंसार्थमिदं वाक्यमिति यदप्युक्तमाचार्येणेह कृत्वाचिन्ता क्रियते। यदि शिरोव्रतशब्दस्याथर्वणिक-शिरोव्रतातिरिक्तमर्थान्तरन्न स्यात् तदा यथाकथञ्चित् शिरोव्रतस्य स्वाध्यायधर्मत्वप्रतिपादन एव [5]"**शिरोव्रतं विधिवद्यैस्तु चीर्णम्**' इत्यस्यातात्पर्यं वक्तव्यम्। अन्यथा

---

[1] क - शिरश्शब्दोऽपि

[2] मुण्डक.३.२.१०.

[3] मुण्डक.३.२.११.

[4] क - अध्ययनार्हत्वे; घ - अध्ययनाङ्गत्वे

[5] मुण्डक.३.२.१०.

## ४. शास्त्रभेदभङ्गः

[१]‘**चोदनाद्यविशेष**’ प्राप्तप्रत्यभिज्ञानविरोधात्[२] भेदकल्पने गौरवाच्च। एवमर्थान्तरपरस्यापि वाक्यस्य न्यायव्युत्पादनार्थं कृत्वाचिन्तया अर्थान्तराश्रयणेन सिद्धान्तवर्णनमन्यत्रापि दृश्यते।

तद्यथा - अत्रैव शास्त्रे [३]‘**प्राणादयो वाक्यशेषात्**’ इति। न हि [४]‘**यस्मिन् पञ्च पञ्चजनाः**’ इति मन्त्रे पञ्चजनशब्दः क्लिष्टगत्या वाक्यशेषगतप्राणादिपरः। तस्य मन्त्रान्तरानुसारेण चेतनविशेषपरत्वात्। अथर्ववेदे हि तृतीयकाण्डे पञ्चमानुवाके समाम्नायते -

[५]‘**यं त्वा होतारं मनसाभिसंविदुस्त्रयोदश भौवनाः पञ्च मानवाः।**
**वर्चोधसे यशसे सूनृतावते तेभ्योऽग्निभ्यो हुतमस्त्वेतत्**’ इति।

अस्यार्थो वेदभाष्ये दर्शितः - **अग्ने**, ‘**त्वा**’- त्वां, ‘**होतारं**’- देवानामाध्यातारम्, ‘**मनसाभिसंविदुः**’- सम्यक् जानन्ति, ‘**ये त्रयोदश भौवनाः**’ - विश्वकर्मा भौवना स्वात्मनि सर्वाणि भूतानि जुहावाञ्चकारेत्यादिश्रुत्यन्तरप्रसिद्धाः विश्वकर्मप्रभृतयो भुवनस्य महर्षेः पुत्रास्त्रयोदशसंख्याकाः, ‘**पञ्चमानवाः**’ - निषादपञ्चमाश्चत्वारो वर्णाः गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके, तस्मिन् ‘**वर्चोधसे**’ - तेजो धारयते, ‘**यशसे**’ - यशस्विने, ‘**सूनृतावते**’ - प्रियहितवचनयुक्ताय, तुभ्यं ‘**तेभ्यः**’ - प्रागुक्तेभ्योऽग्निभ्यश्च ‘**हुतमेव**’ - तद्धविरस्त्विति। यथा ‘**यमाय हारुग्यमवमं पञ्च मानवाः वैवस्वतो न तृप्यति पञ्चभिर्मानवैर्यम**’ इत्यादिरपीहोदाहरणम्। तत्रापि ‘**निषादपञ्चमाश्चत्वारो वर्णाः पञ्च मानवा**’ इति भास्करादिभिरपि व्याख्यातम्। वर्णानां पञ्चमत्वेन निषादग्रहणमग्निसंबन्ध-साम्यात्। अत एव मन्त्रवर्णे ‘**जना यदग्निमयजन्त पञ्च**’ इति। एवं मन्त्रान्तरानुरोधेन पञ्चजनशब्दस्यार्थान्तरपरत्वादेव शारीरकभाष्ये तस्य यथासूत्रं [६]वर्णितवतापि शङ्करेण बृहदारण्यकभाष्ये ‘**पञ्च पञ्चजनाः गन्धर्वाः पितरो देवा असुरा रक्षांसि निषादपञ्चमा वर्णा**’ इति व्याख्यातमिति। तदिदमाचार्यद्रोहसन्धुक्षितान्ध-

---

[१] सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् (ब्र.सू.३.३.१)

[२] क - भेदप्रत्यभिज्ञानविरोधात्

[३] ब्र.सू.१.४.१२.

[४] **यस्मिन् पञ्च पञ्चजना** आकाशश्च प्रतिष्ठितः।
तमेवमन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम्।। (बृ.उ.६.४.१७)

[५] अथर्व.३.२१.५.

[६] क - प्राणादिपरत्वं वर्णितवतापि

तमसविजृम्भितम्, अभ्युपगम्यवादे हि किञ्चित् प्रोयजनं वाच्यम्। न चेह लेशतोऽपि तत्पश्यामः।

किञ्च [1]'**एतेषामेवैताम्**' इति वाक्यं किं विद्याङ्गत्वबोधने स्वरसमुत न। आद्ये, वाक्येन प्रत्यभिज्ञारूपं लिङ्गं बाद्ध्यमेव। द्वितीयेऽर्थान्तरबोधेऽपि कथं विद्याङ्गत्वसिद्धिः। यच्चोक्तं [2]'**प्राणादयो वाक्यशेषात्**' इत्युपगमम्यवाद इति। तत्र [3]'**यस्मिन् पञ्च पञ्च जना**' इत्यत्र पञ्चजनशब्दस्य समाहारपरत्वे प्रसङ्गेन[4] '**दिक्संख्ये संज्ञायाम्**'[5] इति विहितसमासत्वेन संज्ञात्वात् ततश्च वाक्यशेषेण नात्रार्थनिर्णयः क्रियते। किन्तु 'यूपे पशुं नियुंजीत' इत्यत्र यूपशब्दस्य 'यूपं तक्षति' इत्यादिवाक्येनेव [6]'**प्राणस्य प्राणमुत चक्षुषश्चक्षुश्श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो मन**' इति वाक्यशेषेणेन्द्रियेषु पञ्चजनशब्दस्य शक्तिरवधार्यते। अन्यथा प्राथमिकपञ्चन् शब्दत्रयस्य प्रयोजनाभावात् व्यवच्छेदकत्वे त्वयोग्यार्थता।

वेदाचार्यपक्षे तु संख्याप्रत्यभिज्ञानेन प्राणादिपरिग्रहः प्रयोजनम्। एतेन क्लृप्तशक्त्यैवोपपत्तावपूर्वशक्तिकल्पना न युक्तेति शङ्का दूरोत्सारिता, पदातिरेकस्यैव तत्कल्पकत्वात्। वस्तुतस्तु न शक्तिः कल्पनयैवेति निर्बन्धः प्राथमिकेन पञ्चन् शब्देन प्रत्यभिज्ञया प्रकरणोपस्थितानां प्राणादीनां परिग्राह्यत्वे सिद्धे मनुष्ये व्युत्पन्नस्यैव पञ्चजनशब्दस्यैव प्राणादिषूपचारात् प्रवृत्त्युपपत्तेः वाक्यशेषे प्राणशब्देन स्पार्शनेन्द्रियं गृह्यते। वायुसंबन्धित्वात् तस्यान्नशब्देनाप्यायनादन्नसंबन्धाभ्यां घ्राणरसनयोस्तन्त्रेण ग्रहणम्।

तत एव पञ्चत्वमप्यविरुद्धम्।

त्वदुदाहृतमन्त्रे च पञ्जजनशब्दाभावात् [7]अपेष्टमर्थं वर्णयन्तु। शङ्करेण तु बृहदारण्यकभाष्येऽर्थान्तरवर्णनं विस्मरणादेव। अत एव तद्वार्तिके भाष्योक्तार्थ-

---

[1] मुण्डक.३.२.१०.

[2] ब्र.सू.१.४.१२.

[3] **यस्मिन् पञ्च पञ्चजना** आकाशश्च प्रतिष्ठितः।
तमेव मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम्।। (बृ.उ.६.४.१७)

[4] क - अतिप्रसङ्गेन

[5] पाणिनि.सू.२.१.५०.

[6] **प्राणस्य प्राणमुत चक्षुषश्चक्षुश्श्रोत्रस्य श्रोत्रम्।**
**मनसो ये मनो** विदुः ते निचिक्युर्ब्रह्म पुराणमग्र्यम्।। (बृ.उ.६.४.१८)

[7] क - यथेष्टमर्थम्

द्वयेऽप्यस्वरसेन वाक्यशेषलब्धार्थो वर्णितः। यच्चोदाहरणान्तरमुक्तं पूर्वस्मिन् तन्त्रे। [1]'**अपि तु वाक्यशेषत्वादितरपर्युदासस्स्यात् प्रतिषेधे विकल्पस्स्यात्**' इति सूत्रं ज्योतिष्टोमे श्रूयते। 'दीक्षितो न ददाति न जुहोति न पचति' इति। तत्र संशयः। क्रत्वर्थपुरुषार्थसाधारण्येन सर्वेषामपि होमानां प्रतिषेध उतादिष्टानां पुरुषार्थानाञ्च अथवा पुरुषार्थानामग्निहोत्रादीनां पर्युदास इति। तत्र [2]'**अविशेषात् सर्वनिषेध**' इत्येकः पक्षः। आहत्य विहितानां 'ग्रहैर्जुहोति' इत्येवमादीनां तु बलवत्वादतिदिष्टानां पुरुषार्थनाञ्चेत्यपरः।

सिद्धान्तस्तु - अग्निहोत्रादिहोमानां स्वस्वविधिभिः कर्तव्यत्वेन [3]'**न दीक्षित**' वचनेन कर्तव्यत्वेन च विकल्पप्रसङ्गात् '**न दीक्षित**' इति वाक्यं पर्युदासः। तस्य चाग्निहोत्रादिवाक्येनान्वयः। तेन अदीक्षितो 'यावज्जीवमग्निहोत्रं जुहोति' इत्यग्निहोत्रादि-वाक्यानामर्थः संपद्यत इतीदं चाधिकरणं कृत्वाचिन्तया प्रवृत्तम्। यदि प्रतिषेधाश्रयणे पर्युदासाधिकरणपूर्वपक्षरीत्या विकल्पः प्रसज्यते तदा तत्परिहाराय '**न दीक्षित**' इत्यग्निहोत्रादिवाक्यशेषत्वमङ्गीकृत्यापि किं विकल्पः परिहरणीयः। किञ्चित् प्रकरणाम्नातस्यैकशब्दस्य प्रदेशान्तराम्नातानेकवाक्यशेषभावादपि 'पापीयान् विकल्प'[4] इति न्यायं व्युत्पादयितुं कृत्वाचिन्तारूपता च प्रतिषेधाश्रयणेऽपि विकल्पाप्रसङ्गात् '**होमनिषेधः क्रत्वर्थः होमः पुरुषार्थ**' इति विधिनिषेधयोर्विषयभेदात्। उभयोरपि क्रत्वर्थत्वेन विषयैक्ये हि षोडशिग्रहणाग्रहणरीत्या तयोरन्यतरस्य यस्य कस्यचित् परिग्रहेऽपि क्रतोस्साद्गुण्याद्विकल्पो भवेत्। इह तु होमनिषेध एव क्रत्वर्थ इति। होमपक्षे क्रतोर्वैगुण्याद्वस्तुतो विकल्पस्य न प्रसङ्ग इति।

अत्राभ्युपगमवादस्य प्रयोजनं न्यायविशेषव्युत्पादनमिति स्वयमेवाभिहितम्। अत्र चाभ्युपगम्यवादस्य न किञ्चित्प्रयोजनमिति प्रागेवाभिहितम्। वस्तुतस्तु नेदमधिकरणमभ्युपगम्यवादः। सूत्रे पर्युदासशब्दस्य प्रतिषेधपरत्वात् सूत्रस्य चायमर्थः।

'**न दीक्षित**' वाक्यस्य ज्योतिष्टोमप्रकरणाधीतत्वेन ज्योतिष्टोमवाक्यशेषतया पुरुषार्थानामेवायं क्रत्वर्थो निषेधः। न च '**क्रत्वर्थानामेव क्रत्वर्थो निषेधः विकल्प-**

---

[1] मी.सू.१०.८.१५.

[2] दीक्षितस्य दानहोमपाकप्रतिषेधो**ऽविशेषात् सर्वदानहोमपाकप्रतिषेधः** स्यात्। (मी.सू.१०.८.१२)

[3] **न दीक्षितस्यान्नमश्नीयात्।** (भाट्टदीपिका पृ.५५८)

[4] क - अल्प; घ - पापीयान् विकल्प।

**प्रसङ्गात्**' इति प्रतिषेधे पर्युदासपदप्रयोगस्तु '**न दीक्षित**' वाक्यस्य पुरुषार्थहोम-विध्यन्वये यो वाक्यार्थो लभ्यते '**अदीक्षितो जुहुयात्**' इति। अस्यैवार्थस्य क्रत्वर्थतया पुरुषार्थनिषेधेऽपि पर्यवसानात् क्रत्वर्थे हि निषेधे सति आहवनीयन्यायेन यावज्जीवमित्यस्य दीक्षितकालातिरिक्तकालविषयतया सङ्कोचो वाच्यः। ततश्च '**अदीक्षितो जुहुयात्**' इत्ययमेवार्थः पर्यवसितः। इममर्थं व्यञ्जयितुमेव च पर्युदासपदप्रयोग इति।

किञ्च किं जैमिनेः देवतानिराकरणे भ्रमो निबन्धनमुत विप्रलम्भः। नाद्यः, ब्रह्मविदग्रेसरताया स्थापनात्। अत एव न द्वितीयः। न हि ब्रह्मवित् परानर्थे प्रवर्तेत। प्रयोजनाभावाच्च न विप्रलम्भार्थप्रवृत्तिसंभवः। अतस्सूत्राणामुक्तरीत्या देवतानिरास-परत्वाभावो वाक्यात् जैमिनेरभ्युपगम्यवादो वा स्यात्। अश्रुतवेदान्तानां कर्मण्यश्रद्धावारणार्थं युक्तो ह्यभ्युपगम्यवादः। श्रुतवेदान्तानामेव हि सर्वदेवतान्तरात्मनः अनादिनिधनस्य परमात्मनः स्वपर्यन्तयजनेन कञ्चुकपर्यवसायियजनेन वा

[१]'**येऽप्यन्यदेवताभक्ताः यजन्ते श्रद्धयान्विताः।**
**तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम्**'

इति प्रीतेन परमात्मनेष्टस्य प्रापणात् तदाराधनकर्मसु श्रद्धा न स्यात्। अश्रुतवेदान्तानां तु प्रतिसंचरे देवतानां याज्यानामिन्द्रादीनां विलयात् तत्सर्गप्रवृत्तफलानां कर्मणां सर्गान्तरे फलजनकत्वासंभवेन तत्कृतविप्रणाशाकृताभ्यागमौ स्याताम्। तस्मान्न देवताराधनात्मकं कर्म फलव्याप्तम्। तद्विनापि च पुरुषार्थसिद्धिर्भवतीति कर्मण्यश्रद्धा स्यात्। अत्र तद्वारणाय देवताभावमभ्युपगम्य कर्मण एव फलप्रदत्वं समर्थितम् भगवता जैमिनिना।

'**अभीष्टार्थव्ययेनापि जयति क्षेत्रहारिणम्।**
**लब्धक्षेत्रैः न दुष्प्रापस्स्यादर्थ इति निश्चयात्**'

इति न्यायेन परमाभीष्टदेवताभ्युपगमेनापि पूर्वभागार्थे ग्रन्थोत्पादने तद्बलादेव तुल्यन्यायात् क्रमेण वेदान्तेऽपि ग्रन्थोत्पत्त्या ततो देवतापारमार्थ्यज्ञानं भविष्यतीत्यभि-सन्धिना युक्त एवाभ्युपगम्यवादः। सूचितश्चायंवादो भाष्यकारेण शबरस्वामिना [२]'**विधिशब्दस्य मन्त्रत्वे भावः स्यात् तेन चोदना**' इत्यत्र तदिदं भाष्यम्।

[१] महा.भीष्म.३३.२३; भ.गी.९.२३.

[२] मी.सू.१०.४.२३.

## ४. शास्त्रभेदभङ्गः

नन्वेवं शब्द एव देवता प्राप्नोति। अत्रोच्यते - नैतदस्माभिः परिहर्तव्यम्। न हीदमुच्यमानमस्मद्पक्षं बाधते सुतरां शुच्यादीनामप्रसङ्ग इति। अत्र ह्यस्मत् ग्रहणेनान्यकर्तव्यता व्यञ्जनात् तत्वतो देवतासद्भावस्सूच्यते। सुतरां ग्रहणेन च देवतासद्भावे वाचकशब्दान्तरेषु सत्स्वपि विधिवाक्योपस्थिततत्वादग्निशब्द एव प्रयोक्तव्य इति सिध्यति। देवताविरहे शब्दस्यैव देवतात्वाच्छब्दान्तरस्य नैव प्रसङ्ग इत्येवमर्थपरेण देवताङ्गीकारेऽपि न हानिरिति सूचनाद्यथाकथञ्चित् परमप्रयोजनभूतकर्मानुष्ठानावैकल्य एव तात्पर्यम्। न तु देवता सद्भावासद्भावयोरिति गम्यते। तस्मात् परस्परविरोधेन भेदसाधनाशां मरीचिकाभिलाषतुल्येति।

ऐकग्रन्थ्यप्रयोजककाकांक्षासिद्धये पूर्वभागोपयोगप्रकाराश्च वेदान्ताचार्यैः दिक्प्रदर्शनेनानुगृहीताः। ते इमे प्रकाराः - प्रमाणलक्षणोपयोगः तावत् स्पष्टः भेदलक्षणोपयोगश्च। [१]‘**एकं वा संयोगरूपचोदनाख्याविशेषात्**’ इति शाखान्तराधिकरणन्यायव्युत्पादनं [२]‘**सर्ववेदान्तप्रत्ययञ्चोदनाद्यविशेषात्**’ इत्यत्रोपजीव्यते। न चेदमेव तद्व्युत्पादनमिति वाच्यम्। ‘**चोदनाद्यविशेषात्**’ इत्यादिशब्दस्य ‘**संयोगरूपचोदनाख्याविशेषात्**’ इति प्रागपेक्षत्वात्। किञ्च ‘**एकम्**’ इति साध्यनिर्देशश्च तन्न्यायोपजीवनेन तत्साध्यलाभादेव। तथा [३]‘**गुणश्चापूर्वसंयोगे वाक्ययोस्समत्वात्**’ इत्यधिकरणव्युत्पादितो गुणभेदेन वा प्रकरणभेदात् [४]‘**परोवरीयस्त्वादिवत्**’ इति छान्दोग्यबृहदारण्यकोद्गीथविद्ययोर्भेदार्थमुपजीव्यते। तथा [५]‘**नाना शब्दादिभेदात्**’ इत्यत्र

---

[१] मी.सू.२.४.९.

[२] ब्र.सू.३.३.१.

[३] मी.सू.२.२.२३.

[४] स एष **परोवरीया**नुद्गीथः, स एषोऽनन्तः। परोवरीयो हास्य भवति। **परोवरीयसो** ह लोकाञ्जयति। य एतदेवं विद्वान् परोवरीयाँ समुद्गीथमुपास्ते।। (छा.उ.१.९.२)

तथामुष्मिन् लोके लोक इति। स य एतमेवं विद्वान् उपास्ते, **परोवरीय** एव हास्यास्मिन् लोके जीवनं भवति, तथाऽमुष्मिन् लोके लोक इति, लोके लोक इति। (छा.उ.१.९.४)

प्राणेषु पञ्चविधं **परोवरीयः** सामोपासीत। प्राणो हिंकारो, वाक्प्रस्तावः चक्षु**रुद्गीथः** श्रोत्रं प्रतिहारो, मनो निधनं, **परोवरीयाँसि** वा एतानि। (छा.उ.२.७.१)

एष उ वा **उद्गीथः**। प्राणो वा उत्। प्राणेन हीदँ सर्वमुतब्धम्। वागेव गीथा उच्च गीथा चेति स **उद्गीथः**। (बृ.उ.३.३.२३)

[५] ब्र.सू.३.३.५६.

शब्दान्तराभ्यासादिसिद्धैर्भेदव्युत्पादनोपजीवनमादिशब्दात् प्रतीयते। [1]‘**श्रुत्यादिबलीयस्त्वात् च न बाधः**’ [2]‘**लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि**’ इत्यादिना तार्तीयन्यायानामुपजीवनं गम्यते। [3]‘**विहितत्वाच्चाश्रमकर्माऽपि**’ इत्यधिकरणेन विद्याङ्गत्वाश्रमाङ्गत्वनिर्णये कृते प्रयुक्तिश्चातुर्थन्यायेन सिद्ध्यति। [4]‘**वायुमब्दादविशेषविशेषाभ्याम्**’ इत्यधिकरणेन पाञ्चमिकन्याय उपजीव्यते। तथाहि - कौषीतकिनः [5]‘**स एतं देवयानं पन्थानमापद्य अग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम्**’ इत्यग्निलोकस्यानन्तरं वायुलोकमधीयते। वाजसनेयिनस्तु [6]‘**यदा वै पुरुषोऽस्माल्लोकात् प्रैति। स वायुमागच्छति। तस्मै स तत्र विजिहीर्षते यथा रथचक्रस्य खम्। तेन स ऊर्ध्व आक्रमते। स आदित्यमागच्छति**’ इत्यादित्यात्पूर्वं वायुमधीते। तत्र कौषीतकीनां पाठक्रमेणाग्निलोकशब्दोक्तादर्चिषः परत्वेन वायुः प्राप्तः। उक्त वाजसनेयश्रौतक्रमेण पाठक्रमाद्बलीयसा तद्बाधेनादित्यात्पूर्वं वायुर्न विशते। संवत्सरस्तु छान्दोग्ये मासात्परं श्रूयते। ते [7]‘**अर्चिषमभिसंविशन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान्मासेभ्यस्संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः। स एनान्**

---

[1] ब्र.सू.३.३.४७.

[2] ब्र.सू.३.३.४३.

[3] ब्र.सू.३.४.३२.

[4] ब्र.सू.४.३.२.

[5] **स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स आदित्यलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकं** तस्य ह वा एतस्य ब्रह्मलोकस्यारो ह्रदो मुहूर्ता येष्टिहाविरजा नदील्यो वृक्षः सालज्यं संस्थानमपराजितमायतनमिन्द्रप्रजापती द्वारगोपौ विभुप्रमितं विचक्षणाऽऽसन्द्यमितौजाः पर्यङ्कः प्रिया च मानसी प्रतिरूपा च चाक्षुषी पुष्पाण्यावयतौ वै च जगान्यम्बाश्चाम्बावयवीश्चाप्सरसः अम्बया नद्यस्तमित्थंविदागच्छति तं ब्रह्माहाभिधावत मम यशसा विजरां वायं नदीं प्रापन्न वा अयं जरयिष्यतीति। (कौषी.ब्रा.उ.१.३)

[6] बृ.उ.७.१०.१.

[7] अथ यदु चैवास्मिञ्छव्यं कुर्वन्ति, यदि च **नार्चिषमेवाभिसंभवन्ति। अर्चिषोऽहरह्नः आपूर्यमाणपक्षम्, आपूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान्, मासेभ्यस्संवत्सरं, संवत्सरादादित्यं, आदित्याच्चन्द्रमसं, चन्द्रमसो विद्युतं, तत्पुरुषोऽमानवः।** (छा.उ.४.१५.५) **स एनान् ब्रह्म गमयति**। एष देवपथो ब्रह्मपथः। एतेन प्रतिपाद्यमाना इमं मानवमावर्तं नावर्तन्ते नावर्तन्ते। (छा.उ.४.१५.६)

**ब्रह्म गमयति**' इति। वाजसनेयके तु '**अर्चिषोऽह**' इत्यादि मासान्तं पठित्वा '**मासेभ्यो देवलोकं देवलोकादादित्यम्**' इति मासात्परतो देवलोकश्श्रूयते। तत्र द्वयोः श्रुतित्वेऽप्यधिक्कालानां न्यूनकालोत्तरत्वेन अहःपक्षादिषु दर्शनादर्थक्रमेण संवत्सरस्य मासात्परत्वनिवेशस्सिद्ध्यति।

तथा चार्थक्रमनियामकत्वं श्रौतक्रमस्य पाठक्रमाद्बलीयस्त्वञ्च पञ्चमसिद्धमुपजीव्याब्दादित्ययोरन्तराले वायुदेवलोकशब्दार्थनिवेशं सिद्धं कृत्वा [1]'**वायुमब्दात्**' इत्यधिकरणे वायुदेवलोकशब्दयोर्भिन्नार्थत्वं पूर्वपक्षीकृत्य ऐकार्थ्यं प्रसाध्यते।

एवं [2]'**तटितोऽधिवरुणस्संबन्धात्**' इत्यधिकरणेऽपि पाञ्चमिकन्याय उपजीव्यते। तत्र च वरुणस्य कौषीतकिपाठक्रमादादित्यात् पूर्वत्वे प्राप्ते मेघोदरवर्तित्वलक्षण-विद्युत्संबन्धादर्थक्रमाद्विद्युत ऊर्ध्वं निवेश उक्तः। अर्थक्रमस्य बलीयस्त्वञ्च पञ्चमसिद्धम्। तत्रोपजीव्यं षष्ठे [3]'**फलार्थत्वात् कर्मसमर्थाधिकारं स्यात्**' इत्यधिकरणे समर्थानामेवाधिकारो नान्येषाम्। शक्याङ्गमात्रोपसंहारेणे'ति निर्णयमुपजीव्यात्र विधुरादीनां देवादीनाञ्च किं सामर्थ्यमस्त्युत नेत्यादिचिन्तयाधिकारविशेषनिर्णयः क्रियते। नैष्ठिकादि भ्रष्टानाञ्च पातित्यस्मरणेन वैदिककर्ममात्रानधिकारिणामसामर्थ्यात् ब्रह्मविद्यानधिकारञ्च प्रतिपाद्य, तैरेवं स्वर्गकामाधिकरणेन फलकामस्याधिकारे सिद्धे मोक्षकामना देवादीनामप्यधिकारोऽस्ति नवेति चिन्त्यते। अतिदेशाध्यायश्चोपजीव्यते।

तथाहि [4]'**अन्तस्तद्धर्मोपदेशात्**' इत्यत्र भाष्ये 'अन्तरादित्ये अन्तरक्षिणि च यः पुरुषः प्रतीयते स जीवादन्यः परमात्मा। कुतः, '**तद्धर्मोपदेशात्**' जीवेऽसंभवंस्तदतिरिक्तस्यैव परमात्मनो धर्मोऽयमपहतपाप्मत्वादिः[5] [6]'**स एषः सर्वेभ्यः**

---

[1] **वायुमब्दादविशेषविशेषाभ्याम्** (ब्र.सू.४.३.२) सूत्रार्थस्तु - अब्दात् संवत्सरादूर्ध्वं, आदित्यात् पूर्वं, वायुं एकमेव निवेशयेत्। देवलोकवायुशब्दाभ्यां अविशेषविशेषाभ्यां वायोरेकस्यैव निर्दिष्टत्वात्। देवानां निवासस्थानमिति अविशेषेण हि 'देवलोक' शब्दः, वायुं देवानां आवासस्थानभूतमभिधाति। 'वायु' शब्दः तमेव विशेषेणेति, द्वयोः प्रकरणद्वयविहितयोः एकत्वात् इत्युक्तं भवति। (वेदान्तदीपः)

[2] ब्र.सू.४.३.३.

[3] **फलार्थत्वात् कर्मणः शास्त्रं सर्वाधिकारं स्यात्**। (मी.सू.६.१.४)

[4] ब्र.सू.१.१.२१; श्रीभाष्ये.सं.२;पृ.८३-८४

[5] छा.उ.१.२.९; ८.१.६; ८.४.१; ८.७.१; ८.७.३;

**पाप्मभ्य उदित**' इत्यादिनोपदिश्यत' इत्युक्तम्। अनन्तरं हिरण्मयपुण्डरीकाक्षत्वादि विशिष्टाप्राकृतदिव्यविग्रहयोगञ्च परमात्मनः प्रसाध्यातः परस्यैव ब्रह्मण एव रूपवत्वादयमपि तस्यैव धर्मः। अत आदित्यमण्डलाक्ष्यधिकरणादित्यादिजीवव्यतिरिक्तः परमात्मैवेत्युपसंहृतम्। तच्चाक्षिपुरुषे अपहतपाप्मत्वविलक्षणविग्रहयोरतिदेशतः प्राप्तिमुपजीव्य तत्र विग्रहप्राप्तिः। [2]'**तदेव रूपं यदमुष्यरूपम्**' इत्यतिदेशात्। अत्र रूप-शब्दस्य वर्णपरत्वविग्रहपरत्वसंशये [3]'**एककपालानां वैश्वदेविकः प्रकृतिः**' इति सूत्रोक्तन्यायेन विग्रहस्यातिदेश इति निर्णयः। तथा हि वैश्वदेवे [4]'**द्यावापृथिव्य एककपाल**' इति श्रुतम्। अनन्तरं वरुणप्रघासे [5]'**काय एककपाल**' इति श्रुतम् । अनन्तरं '**साकमेधे एतत् ब्राह्मण एककपाल**' इति। तत्र किं वैश्वदेविकस्य एककपालस्य ब्राह्मणमतिदिश्यते। किं वा वारुणप्राघासिकस्येति संशये '**वारुणप्रघासिकेऽल्पं प्राकृतं वैश्वदेविक बहुश्रुतो भूयो धर्मलाभाद्वैश्वदेविकस्यातिदेश**' इत्युक्तम्। तत्रापि रूपशब्देन वर्णविशेषाभिधानेऽल्पातिदेशाद्विग्रहपरत्वे तच्छब्देन प्रकृतपुण्डरीकाक्षत्वहिरण्यश्मश्रुत्वादि-परामर्शाद्भूयो धर्मलाभाद्विलक्षणविग्रहस्यात्रातिदेश इति निर्णयः।

यद्यप्ययं पूर्वःपक्षः अव्यवहितत्वादेतच्छब्देन वारुणप्रघासिकस्यातिदेश इति हि सिद्धान्तितम्। तथाप्यत्र तादृशबाधकाभावात् तत्पूर्वपक्षन्यायेनैवार्थनिर्णयः। [6]'**सर्वापेक्षा च**

---

[1] तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी, तस्योदिति नाम, **स एष सर्वेभ्यः पाप्मभ्य उदितः,** उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद। (छा.उ.१.६.७)

[2] अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते, सैवर्क्, तत्साम, तदुत्थम्, तद्यजुस्तद्ब्रह्म। तस्यैतस्य तदेव रूपम्, यदमुष्य रूपम्; यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम। (छा.उ.१.७.५)

[3] **एककपालानां वैश्वदेविकः प्रकृति**राग्रयणे सर्वहोमापरिवृत्तिदर्शनादवभृथे च सकृद्द्व्यवदानस्य वचनात्। (मी.सू.७.१.२३)

[4] तस्मात् **द्यावापृथिव्य एककपालः** पुरोडाशो भवति। (शत.ब्रा.२.५.१.१७)
नवानामितराण्यैन्द्राग्नं द्वादशकपालमाग्नेन्द्रं वा वैश्वदेवं पयसि चरुं सौम्यं श्यामाकं चरुं **द्यावापृथिव्यमेककपालम्**। (आप.श्रौ.सू ६.२९.१०),
वैश्वदेवं वरुणप्रघाससाकमेधशुनासीरीयाणाम्। (आप.श्रौ.सू २३.३.३७),
वैश्वदेविक एककपाल एककपालानाम्। (आप.श्रौ.सू २३.३.३८)

[5] अथ **काय एककपालः** पुरोडाशो भवति। कं वै प्रजापतिः प्रजाभ्यः कायेनैककपालेन पुरोडाशेनाकुरुत कम्वेवैष एतत् प्रजाभ्यः कायेनैककपालेन पुरोडाशेन कुरुते तस्मात् **काय एककपाल** पुरोडाशो भवति। (शत.ब्रा.२.५.२.१३)

[6] ब्र.सू.३.४.२६.

### ४. शास्त्रभेदभङ्गः

**यज्ञादिश्रुतेरश्ववत्**' इत्यत्र यज्ञादीनां विद्याङ्गत्वं प्रतीयते। यज्ञानां चाग्नेय-सौर्यादीनामङ्गत्वं साङ्गानामेव। अतो यज्ञाङ्गभूतस्य [१]'**अगन्म सुवस्सुवरगन्म**' इत्यादिमन्त्रस्य स्वर्गरूपफलप्रकाशकस्य विद्यार्थयज्ञाङ्गत्वमगन्मविद्यामगन्म इत्यूह सापेक्षमतस्साङ्गपक्षस्य[२] विद्यार्थत्वरूपणमूहसापेक्षमूहश्च नावमिकन्यायाधीनः। तत्र हि [३]'**फलदेवतयोश्च**' इत्यधिकरणे सौर्यादिष्वतिदेशतः प्राप्तस्यागन्म ब्रह्म वर्चसमिति सौर्यफलप्रकाशकपदप्रक्षेपेण ऊह उक्तः। तथा [४]'**हानौ तूपायनशब्दशेषत्वात् कुशाश्छन्दः स्तुत्युपगानवत् तदुक्तम्**' इति शाखान्तराम्नातोपायनवाक्यस्य हानिवाक्यशेषत्वं कुशादिदृष्टान्तेनोपपाद्य '**एकवाक्यत्वसंभवे हान्युपायनयोश्चिन्तने वैकल्प्यापादक-वाक्यभेदो न न्याय्यः**' इत्यत्र '**तदुक्तम्**' इति सूत्रखण्डेन दाशमिक-पर्युदासाधिकरणसंमतिप्रदर्शनेन तन्न्याय उपजीव्यते।

तत्र हि '**आर्षेयं वृणीत**' इति महापितृयज्ञाम्नातं यज्ञेषु येयजामहं करोति नानुयाजेष्वित्यनारभ्याधीतञ्च वाक्यमधिकृत्य विचार्यते। किं वरणयेयजामहाभ्यां प्रतिषेधस्य विकल्पः उत तयोर्निवृत्तिरिति। तत्र प्रतिषेधेन तु मुख्यार्थलाभात् पर्युदासे कात्यायनमते समासप्रसङ्गाच्च प्रतिषेधः। तथा च विकल्प इति [५]'**प्रतिषेधः प्रदेशेऽनारभ्य विधाने च प्राप्तप्रतिषिद्धत्वाद्विकल्पस्स्यात्**' इति सूत्रेण पूर्वपक्षं कृत्वा, सिद्धान्तितम् [६]'**अपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशस्स्यात्**' इति सूत्रेण।

तस्यार्थः - एकवाक्यार्थत्वलाभात् नानान्वयेऽपि समासविकल्पस्य पाणिनि-स्मरणादष्टदोषदुष्टविकल्पस्यान्याय्यत्वाच्च पर्युदासः। तथा च वरणयेयजामहयोः निवृत्तिरिति। तथा [७]'**न स्थानतोऽपि**' इत्यधिकरणे [८]'**दर्शयति चाथोऽपि स्मर्यते**'

---

[१] तै.य.सं.१.६.६.१.
[२] क - यज्ञस्य; घ - पक्षस्य
[३] मी.सू.९.१.४.
[४] ब्र.सू.३.३.२६
[५] मी.सू.१०.८.१.
[६] मी.सू.१०.८.४.
[७] **न स्थानतोऽपि** परस्योभयलिङ्गं सर्वत्र हि। (ब्र.सू.३.२.१२)
[८] ब्र.सू.३.२.१७.

इत्यादिसूत्रेषु श्रुतिर्दर्शयति। गुणमित्युक्तिः यदाहवनीयन्यायेन विशेषनिषेधस्य विदितविशेषतरविषयत्वमभिप्रेत्य स च न्यायो दाशमिकः।

तथा हि न सत्रयोर्ल्लक्षणतो भेदे तदुपजीवनेन [१]‘**द्वादशाहवदुभयविधं बादरायण**’ इत्युक्तम्। एवं [२]‘**पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत्**’ इति विद्यामयमनश्चितादीनां विद्यामयक्रत्वङ्गत्वसाधनार्थेऽधिकरणे पूर्वपक्षे विद्यामयस्यापि क्रियामयक्रत्वङ्गत्वे मानसग्रहो निन्दितः[३]। तस्य च द्वादशाहाङ्गत्वं दाशमिक मानसमहरन्तरं स्यात्। [४]‘**द्वादशाह व्यपदेशात्**’ इत्यधिकरणसिद्धमुपजीव्यते। एवं तत्र न्यायो [५]‘**विहितत्वाच्चाश्रमकर्मापि**’ इत्यत्रोपजीव्यते। तत्र हि कर्मणामाश्रमाङ्गत्व-विद्याङ्गत्वसाधनपूर्वकमुभयार्थकर्मणाम् ऐक्यसाधनस्य तन्त्रेणानुष्ठानं फलमित्युक्तम्। पृथक् प्रयुक्तिमदुभयगोचरत्वे देशकालाद्यैक्ये च सकृत्करणं तन्त्रम्। तच्चैकादशे स्थापितम्। विद्यार्थकर्मणैव प्रसङ्गान्नित्यविधिरित्याचार्यमेघनादारिसूरयः। तेषामेतत् विचारस्य प्रसङ्गः फलम्।

एवं विद्याङ्गभूतयज्ञादिस्वरूपशिक्षणेनापि कृत्स्नस्यापि पूर्वभागस्योपयोगः। किञ्च यज्ञादिकल्पनञ्च तत्र तत्र क्रियते। तदपि यज्ञादिस्वरूपनिरूपणसापेक्षम्। अपि च कर्मणामल्पास्थिरफलत्वनिर्णयरूपाधिकारिविशेषणसंपादकत्वेनोपयोगश्च स्पष्टः। अतः सिद्धमैकशास्त्र्यम्।

एकग्रन्थत्वं च एवमैक्यग्रन्थ्यात् पूर्ववाक्यलब्धतया स्वाध्यायाध्ययनविधिं प्रक्रम्य प्रवृत्तेन वैदिकमहापथेन संचरमाणाधिकारिविशेषण संपादकत्वेनोपयोगनिष्ठतयोपस्थितम्। अर्थस्वभावाद्योग्यञ्च कर्मज्ञानमथात इति परामृश्य पूर्वोत्तरग्रन्थयोरुपजीव्योपजीवकभाव-रूपसंगत्यभिप्रायेण वृत्तवर्तिष्यमाणावर्थौ प्रदर्श्य स्वकर्तव्यप्रतिज्ञामर्थादारचय्य

---

[१] **द्वादशाहवदुभयविधं बादरायणोऽतः। (**ब्र.सू.४.४.१२.)

[२] ब्र.सू.३.३.४४.

[३] क - निर्णीतः; घ - निन्दितः

[४] लिङ्गमविशिष्टं सर्वशेषत्वान्न हि तत्र कर्मचोदना तस्माद्**द्वादशाहस्याहारव्यपदेशः स्यात्**। (मी.सू.२.४.२५)

[५] ब्र.सू.३.४.३२.

## ४. शास्त्रभेदभङ्गः

ब्रह्ममीमांसायाः कर्तव्यतां समर्थमानेन बादरायणेन [१]'**परीक्ष्य**' इति वाक्याभिप्रेतोऽर्थः [२]'**अथातो ब्रह्मजिज्ञासा**' इति मीमांसितः।

अस्यार्थः - '**कर्मविचारानन्तरं तत एव हेतोर्ब्रह्मविचारः कर्तव्य**' इति केचित्। अत्र भवतीत्येवाध्याहारः जिज्ञासाशब्दश्च न विचारपरः। लक्षणाप्रसङ्गात्। किन्तु ज्ञानेच्छापर एवेत्याहुः। तन्न। साङ्गवेदाध्ययनादेवापातप्रतीत्या पूर्वोत्तरभागसाधारण्येन जिज्ञासोदयेन तस्याः कर्मविचारानन्तर्यस्य कर्मानन्तर्यस्य साधनचतुष्टयानन्तर्यस्य चासंभवात्। अतो लक्षणापि न दोषाय। वस्तुतस्तु 'न लक्षणा सविशेषणे हि' इति न्यायेन ज्ञान एव कर्तव्यतान्वयात्। किन्तु विशेषणान्वयो स्वरस इत्येतावत् तच्च स्वरसार्थान्तराभावात् अङ्गीकार्यम्। न चास्वारस्यमपि जिज्ञासानिदिध्यासनादिपदानां प्रकृत्यर्थप्राधान्येनैव बहुशः प्रयोगात् कर्तव्य इत्यत्रार्हार्थस्तव्यः भवति।

क्रियाध्याहारवादिनापि विचारकर्तव्यतासमर्थन एव सूत्रतात्पर्यमिष्यते। तस्यैव शाब्दत्वे संभवति तत्परित्यागो न न्याय्यः। अत्र विशिष्टाधिकार्यभावाद्विचाराकर्तव्यतां पूर्वपक्षीकृत्य तल्लाभोपपादनेन कर्तव्यता समर्थ्यते। कैश्चिद्विषयप्रयोजनाभावात् अनारम्भं पूर्वपक्षीकृत्य तत्समर्थनेन राद्धान्तः उक्तः। तत्पक्षे व्यर्थावेवाथातश्शब्दौ इतरांशेनैवोक्त-न्यायसूचनसिद्धेः।

नन्वधिकारोऽपि प्रदर्शनाय इति चेन्न। यदि तदज्ञानाभावे प्रवृत्त्यभावस्तदा च प्रवृत्तिस्तादृशं हि प्रदर्शनीयम्। यथा वाल्पशास्त्राभ्यासे स्वस्यासामर्थ्यं पश्यतोऽधिकारिणः तत्सामान्यात् इहाप्यसामर्थ्यं पश्यतः प्रवृत्तिर्न स्यादिति तत्सिद्धये हि वाल्पं प्रदर्श्यते बालोपीति। इह कर्मफलानित्यत्वबुद्धितदभावाभ्यामेव विचारप्रवृत्तितदभावयोः सिद्धत्वात् तत्तज्ज्ञानस्य[३] अनपेक्षितत्वात् तत्तत्प्रदर्शनवैयर्थ्यमनिवार्यम्।

अत्राथशब्दः [४]'**परीक्ष्य**' इति प्रतिपन्नकर्मविचारानन्तर्यपरः। अतश्शब्दः कर्मणामल्पास्थिरफलत्वनिर्णयसहितानन्तस्थिरफलब्रह्मज्ञानापातरूपविशिष्टाधिकारपरःसन् [५]'**निर्वेदमायान्नात्स्यकृतः कृतेन तद्विज्ञानार्थम्**' इत्युक्ततात्पर्येण 'अथ'

---

[१] मुण्डक.१.२.१२.

[२] ब्र.सू.१.१.१.

[३] क - तत्तद्दर्शनस्य; घ - तत्तज्ज्ञानस्य

[४] मुण्डक.१.२.१२.

[५] मुण्डक.१.२.१२.

शब्दोक्तानन्तर्योपपादनपरः। साधनचतुष्टयपूर्ववृत्ततायाः कर्मविचारस्य कर्मानुष्ठान-द्वारतायाश्चासंभवात्। एवमथातश्शब्दयोरुक्तार्थपरत्वानङ्गीकारे तयोर्वैयर्थ्यमेव स्यात्। तत्सूचनीयन्यायाभावात्। न हि तत्पक्षे शमदमादेः पूर्ववृत्तत्वेन कर्मणामनुष्ठितत्वेन वा ब्रह्मविचारकर्तव्यता समर्थ्यते। किन्तु विषयप्रयोजनसत्वात् तच्च ब्रह्मजिज्ञासापदेनैव सूचनीयम्।

सिद्धान्ते तु सिद्धे व्युत्पत्त्यभावेन विशिष्टाधिकार्यभावात्। अनारम्भे पूर्वपक्षिते अथातश्शब्दाभ्यां विशिष्टाधिकारिसमर्थनमुखेनारम्भस्समर्थ्यत इति न्यायसूचकत्वात् सफलावथातः शब्दौ। यथा [1]'**अथातो धर्मजिज्ञासा**' इत्यत्राथातश्शब्दयोः अध्ययनानन्तर्याध्ययनद्वारा भूतज्ञानपरयोर्विवक्षितत्वन्यायसूचनमुखेन चारितार्थ्यम्। तद्वदिहापि न्यायसूचकतयैवाथातश्शब्दयोश्चारितार्थ्यं युक्तम्।

किञ्च धर्मजिज्ञासेतिवत् ब्रह्मजिज्ञासेति प्रतिज्ञामात्रपरम्। तत्रत्याथातश्शब्दवत् पारिशेष्यात् हेतूपपादनतात्पर्यकयोः अथातश्शब्दयोरेव हेतुपरत्वञ्च युक्तम्। न च पराभिमतहेतुपरत्वे पूर्वपक्षनिरासस्संभवति।

एवञ्च परपक्षे पारिशेष्यादवश्यंभाविहेतुतात्पर्यात् अथातश्शब्दसमभिव्याहृत-प्रतिज्ञापदस्य न्यायसूचकत्वासंभवात् अथातश्शब्दयोः तदसंभवाच्चाखण्डमेव सूत्रं व्यर्थम्। तदुक्ताधिकरणार्थासंभवश्च [2]**पाराशर्यविजये** द्रष्टव्यः।।

## इति शास्त्रभेदभङ्गः ।।

---

[1] मी.सू.१.१.१.

[2] **पाराशर्यविजयः** - महाचार्यैः विरचितोऽयं ग्रन्थः।

## ५. कर्मज्ञानस्यानुष्ठानद्वारकत्वभङ्गः

[१]'**ब्राह्मणः परीक्ष्य**' इति परीक्षायाश्चाध्ययनानन्तर्यस्य स्वरसतोऽवगमात् कर्मविचारानन्तरं कर्मानुष्ठानेन शुद्धान्तःकरणस्य कर्मानित्यत्वपरीक्षा भवतीति वदन्तो निरस्ताः। त एवमाहुः कर्मविचारमात्रान्न कर्मफलानित्यत्वनिश्चयस्संभवति। तत्राहत्य कर्मफलनित्यत्वानित्यत्वविचारादर्शनात्। रात्रिसत्रार्थवादगतप्रतिष्ठाफलवत् सूक्तवाकमन्त्रगतायुरादिफलवच्च [२]'**अक्षय्यं ह वै चातुर्मास्ययाजिनस्सुकृतं भवति**' [३]'**अपामसोममृता अभूम**' इत्यादिमन्त्रार्थवादगतफलस्यापि तैरेव न्यायैर्ग्रहणेन नित्यफलस्यैव निश्चयप्राप्तेश्च विध्युद्देशफलश्रवणेऽपि मन्त्रार्थवादसमर्पितनित्यत्वात्मकविशेषस्य तत्र ग्राह्यत्वात् '**सप्तर्षीणां सुकृतां यत्र लोकास्तत्रेमं यज्ञं यजमानञ्च धेहि**' इति मन्त्रसमर्पितलोकविशेषभोग्यत्वरूपविशेषवत्।

एवञ्च कर्मविचारस्य तदनुष्ठानचित्तशुद्धिद्वारा कर्मफलनित्यत्वानित्यत्वविचारप्रवर्तनेन कर्मफलानित्यत्वविवेकवैराग्यशमदमादिः मुमुक्षाजिज्ञासाहेतुतया ब्रह्मविचारोपयोगित्वात् पूर्ववृत्तत्वं विशुद्धचित्तस्य च तद्यथेह [४]'**कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते।**'

[५]'**प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम्।**
**तस्माल्लोकात् पुनरेत्यास्मै लोकाय कर्मणे**'

---

[१] परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्।
नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्।। (मुण्डक.१.२.१२)

[२] शत.ब्रा.२.६.३.१; आप.श्रौ.सू.८.१.१; २२.८.१.

[३] **अपाम सोममृता अभूमागन्म** ज्योतिरविदाम देवान्।
किं नूनमस्मान् कृणवदरातिः किमु धूर्तिरमृतं मर्त्यस्य।। (ऋग्वेद.८.४८.३, तै.सं.३.२.७)

[४] **तद्यथेह कर्मचितो लोकः क्षीयते**, एवमेवामुत्र पुण्यचितो लोकः क्षीयते। तद्य इहात्मानमनुविद्य व्रजन्त्येताँश्च सत्यान् कामान्, तेषाँ सर्वेषु लोकेष्वकामचारो भवति। अथ य इहात्मानमनुविद्य व्रजन्त्येताँश्च सत्यान् कामान्, तेषाँ सर्वेषु लोकेषु कामचारो भवति।। (छा.उ.८.१.६)

[५] बृ.उ.६.४.६.

इत्यादिश्रुतिभिः कर्मफलानित्यत्वव्याप्तिः ज्ञापनादिफललक्षणोपपत्त्यादितात्पर्यलिङ्गोपबृंहितार्थः सर्गप्रलयाद्यर्थवादसहिताभिः स्वर्गाद्यनित्यत्वसिद्धेः नित्यत्वावबोधिमन्त्रार्थवादानां प्रशंसामात्रपरत्वसिद्धेः कर्मफलानित्यत्वनिश्चय उपपद्यते। ततो वैराग्यादिकमिति।

अत्रोच्यते - अग्निष्टोमज्योतिष्टोमदर्शपूर्णमासप्रभृतीनां कर्मणां गुरुलघुभावः '**फल संबन्धश्च**' न्यायेनैवावगम्यते। कर्मभेदस्तावत् चैत्रीयन्यायावगम्यः। अङ्गभूयस्त्वाल्पत्वे च तार्त्तीयविनियोगावगम्ये द्वादशाहादिषु च सान्नाय्यापेक्ष साङ्गसोमयागरूपप्रधानावृत्या भूयस्त्वन्यायाधीनातिदेशबलादेवावगम्यते। '**फलसंबन्धश्च**' न्यायेनैवावसेयः श्रवणमात्रात् फलसंबन्धे अपापश्लोकश्रवणस्य पर्णताफलत्वप्रसङ्गात् विश्वजिदादेरफलत्वप्रसङ्गाच्च षष्ठैकादशाद्यपूर्वपक्षनिरासमन्तरेण च कथं फलत्वम्। आचार्यैरावृत्तिविधानशब्देन निर्दिष्टया [१]'**दाक्षायणयज्ञेन यजेत स्वर्गकाम**' इति विहितावृत्त्या च केवलदर्शपूर्णमासापेक्षया गौरवमवगम्यते ।।

ननु सर्वेभ्यः कामेभ्यो दर्शपूर्णमासावित्यनेकफलार्थतया विहितदर्शपूर्णमासयागस्य पश्वाद्यर्थप्रयोगे स्वर्गाद्यर्थतया वृत्तिगुणविधानसंभवादावृत्तानावृत्तयागजन्यस्वर्गयोर्न गुरुलघुभावसिद्धिरिति चेन्न। यत्र शास्त्रादृतेन क्रतोर्गुणान्वयसिद्धिः तत्र तद्विशिष्टक्रतुरेवफलाय चोद्यते। यथा दाक्षायणयज्ञ इति गुरूक्तरीत्या [२]'**दाक्षायणयज्ञेन स्वर्गकामो यजेत**' इत्यस्याधिकारविध्यन्तरत्वे पश्वाद्यर्थप्रयोगे आवृत्तिगुणविधिशङ्कानुत्थानात् पक्षान्तरेऽपि फलान्तरार्थप्रयोगविषयत्वे नियामकाभावात् स्वर्गार्थे प्रयोगविषयत्वमप्यावश्यकम्।

ननु [३]'**अपाम सोमममृता अभूम**' '**दिवि ज्योतिरजरमारभेताम्**' इत्यादि मन्त्रार्थवादबलाद्विध्युद्देशेनाप्रतिपन्नस्य स्वर्गस्य नित्यतावगतौ तदनुसारात् पश्वाद्यर्थप्रयोगविषयत्वं कल्पनीयम्। न चैवं निबन्धनरीत्या शब्दबलाद्गुणमात्रस्य स्वर्गसाधनत्वे स्वर्गार्थप्रयोगाल्लाघवं विवरणरीत्यार्थबलाद्गुणविशिष्टस्य साधनत्वे गौरवमिति वाच्यम्। साध्यद्वयार्थिनो गुणविशिष्टप्रयोगस्य एकैकसाध्यार्थिनः तदविशिष्टप्रयोगस्य च संभवादिति चेन्न। स्वरसतो दर्शपूर्णमासमात्रगोचरतया प्रतीयमानस्य विधेर्मन्त्रार्थवादमात्रेण संकोचायोगात्। '**दाक्षायणयज्ञेन**' इति यज्ञशब्दस्य पश्वर्थप्रयोगे लक्षणाप्रसङ्गाच्च। न

---

[१] दाक्षायणयज्ञेन सुवर्गकामः। (आप.श्रौ.सू.३.१७.४)

[२] आप.श्रौ.सू.३.१७.४.

[३] ऋग्वेद.८.४८.३.; तै.सं.३.२.७.

ह्यत्र 'न प्रथमयज्ञे प्रवृज्यात्' इत्यत्र यज्ञपदेन प्रयोगलक्षणायां प्रयोगान्वयिप्रथमश्रुतप्रथम-शब्दानुरोधवत् किञ्चिल्लक्षणा कारणमस्ति।

'**पशुना यजेत**' इत्यत्र तद्विशेषाणां नियमेनोपस्थित्या उपादानाय विशेषस्य नियमेनाकाङ्क्षितत्वात् मन्त्रवर्णवत् संकोचो युक्तः। इह तु दर्शपूर्णमासोपस्थितिदशायां प्रयोगविशेषानुपस्थितेरनुपादेयत्वाच्च न विशेषाकाङ्क्षेति न मन्त्रबलात् संकोचो युक्तः।

किञ्च पशुशब्दस्य व्यक्त्यवाचित्वात् सन्निहितव्यक्तिविशेषे पर्यवसानं युक्तम्। इह व्यक्तिवाचित्वेऽपि दर्शपूर्णमासयागस्यैव सन्निहिततया पश्वर्थप्रयोगासाधारणसन्निधानाभावेन न तन्मात्रपरत्वं युक्तम्।

किञ्चायमावृत्तिलक्षणागुणो यदि पश्वर्थप्रयोगः तदा स्वर्गार्थतया गुणफल-विध्यन्तरवादस्य का गतिः। यदि स्वर्गार्थप्रयोगो यदि वा पश्वर्थप्रयोग उभयथापि साधनतारतम्यमवजानीयम्। उदाहृतं [१]'**चतुर्होत्रा पौर्णमास्यां हवींष्यासन्नान्यभिमृशेत् प्रजाकामः पञ्चहोत्रामावास्यायां स्वर्गकाम**' इति श्रुतिर्हि आस्तम्बेन। एतेन [२]'**यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामस्स सौभरेण स्तुवीत**' इति विध्युपस्थापित-वृष्टिकामादेरिव [३]'**हीषिति वृष्टिकामाय निधनं कुर्यात्। ऊर्गित्यन्नाद्यकामाय ऊर्गिति स्वर्गकामाय**' इति परामर्शेन तत्तत्प्रयोग एव हीषादिनिधनवदिहापि स्वर्गार्थतया विहित-दर्शपूर्णमासयोरेवावृत्तिलक्षणगुणविधिरिति किं न स्यादिति निरस्तम्। तत्र [४]'**यो वृष्टिकाम**' इति पूर्वोक्तानामेव वृष्ट्यादीनां बुद्धौ विपरिवृत्त्या प्रत्यभिज्ञानात् फलान्तरानवगमात्।

किञ्च हीषादीनां फलाय विधौ निधनानन्वयप्रसङ्गः, न चाश्रयतयान्वयः। हीषादीनां निधनान्वयस्याप्राप्ततया तदनुवादायोगात् तदन्वयस्य विधौ वाक्यभेदप्रसङ्गात्। इह तु तादृशबाधकाभावेन गुणफलविधित्वमेव किंपदस्वारस्यानुरोधात् न्यायम्। विध्युद्देश्यस्थकिंपदस्वारस्यानुरोधादेव हि षष्ठाद्ये कामनाविधिपरत्वम्। उपादानप्रयोजक-

---

[१] **चतुर्होत्रा पौर्णमास्यां हवींष्यासन्नान्यभिमृशेत् प्रजाकामः पञ्चहोत्रामावास्यायां स्वर्गकामो** नित्यवदेके समामनन्ति। (आप.श्रौ.सू.४.८.७)

[२] **यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामस्स सौभरेण स्तुवीत**, सर्वे वै कामाः सौभरे। (ताण्ड्य.ब्रा.८.८.१८)

[३] ताण्ड्य.ब्रा.८.८.१९.

[४] ताण्ड्य.ब्रा.८.८.१७.

कामनाविषयस्वर्गपश्वादिद्रव्यविधिपरत्वञ्च पूर्वपक्षीकृत्य निरस्तम्। एकादशाद्यृचनिमित्त-परत्वम्। एवं '**श्येनचितं चिन्वीत स्वर्गकाम**' इत्यादावपि श्येनाकृतिगुणकयागजन्ये स्वर्गात्तदनुगुणकयागजन्यस्वर्गस्यान्यूनत्वं द्रष्टव्यम्। उक्तरीत्या स्वर्गार्थप्रयोगविषये आकृतिविशेषरूपाङ्गविध्यसंभवात्।

किञ्चान्वारभ्याधीतं स्थलरूपमग्निं प्रकृत्य सर्पणाद्याकृतिविशेषा विधीयन्ते। तदानीं चानुयागाय स्वर्गकामप्रयोगोपस्थितिः। ततः परमेव '**अथातोऽग्निमग्निष्टोमेन अनुयजन्ति। तमुक्थ्येन तद्विरात्रेण**' इत्यादिवाक्येन यागसंबन्धकरणात्।

एतेन पश्वादिफलान्तरार्थप्रयोगे गुणविधिशंकापि निरस्ता, प्रायोगानुपस्थितेः। तथापि तादृशप्रयोगविपर्यस्यैव [1]'**यः स्वर्गकामस्सः सौभरेण स्तुवीत**' इति लघुभूत-सौभरगुणस्य गुरुभूताग्न्याश्रितश्येनानुकृतिगुणापेक्षयान्यूनफलतावश्यंभावाच्च। तस्मात् साधनतारतम्यात् [2]'**फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः फलविशेषः स्यात्**' इत्यर्थवादाधिकरणात् तन्न्यायेन स्वर्गतारतम्यसिद्धिः।

नन्वेवं गुरुलघुविकल्पासंभवेन फलतारतम्ये ब्रह्मज्ञानावृत्तेराप्रयाणादनुवर्तनीयतया प्रयाणकालस्याव्यवस्थितत्वात् तत्तारतम्येन फलतारतम्यं स्यान्न स्यात्। तत्र शास्त्रीयस्य साधनतारतम्यस्य भारात् न हि साधनतारतम्यं तत्त्वादेव फलतारतम्यापादकम्। किन्तु भूयः श्रमसाध्ये प्रवृत्तिप्रतिबन्धात्। न हि दैववशसंपन्नसाधनलाघवं तादृशगुरुसाधने प्रवृत्तिप्रतिरोधं क्षमते।

किञ्च दर्शनसमानाकारज्ञानं हि साधनतन्निष्पत्तिश्च सत्त्वशुद्धिविलंबाविलम्बा-नुरोधिनी। तौ च विलम्बाविलम्बौ रजस्तमोबाहुल्यवैरल्यनिबन्धनैः। अतो न साधन-तारतम्यम्। यदि च दर्शनसमानाकारज्ञानोत्पत्त्यनन्तरमपि प्रारब्धानुसाराद्विलम्बः, न ततोऽपि साधनतारतम्यसिद्धिः। प्रतिबन्धकासमानकालीनध्यानस्यैव हेतुत्वात्। तच्च सर्वत्र तुल्यमेव।

न चोपास्यगुणभूयस्त्वाल्पत्वाभ्यां गुरुलघुभावश्शङ्कनीयः। यत्नगौरवं हि श्रमाधिक्यमापादयत् फलाधिक्याभावे तत्सहनानुपचये फलाधिक्यापादयति। इह तु तदात्विकब्रह्मानुभवसुखातिरेकादेव श्रमाधिक्यासहनान्न फलतारतम्यापत्तिः। तथा च

---

[1] ताण्ड्य.ब्रा.८.८.१८.

[2] मी.सू.१.२.१७.

तादृशसुखे यस्योत्कटो रागः तदर्थमधिकश्रमं सोढ्वाधिकगुणविद्यासु प्रवर्तते। यस्त्वधिकश्रमभीरुस्स तादृशाधिकसुखमप्यनादृत्याल्पयत्नसाध्यादल्पगुणविद्यासु प्रवर्तते। एतत्प्रवृत्तिवैचित्र्यञ्चोपासनोपक्रमकालीनभक्तितारतम्यनिबन्धनमित्यनुसन्धेयम्। एवमुक्तन्यायोपेतात् [1]'**तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते**' इत्यादि वाक्यात् कर्मफलानित्यत्वनिर्धारणसिद्धिः। एवं न्यायैरेव कर्मभेदः फलसंबन्धः साधनतारतम्यम्। तेन फलतारतम्यञ्च कर्मविचारदशायामेवावगम्यत इति तदर्थं किमर्था कर्मानुष्ठानापेक्षा। एतेन ब्राह्मणपदेन [2]मीमांसानुष्ठितकर्मैवोच्यत इति निरस्तम्। मीमांसामात्रेणैवानित्यत्वप्रतीत्युपपादनात्।

किञ्च कर्मतत्फलविचाराद्कर्मफलानित्यत्वविचारप्राणप्रवृत्तेः चित्तशुद्धिसापेक्षत्वप्रयोजकं वैलक्षण्यं किमपि न पश्यामः। नापि कर्मप्रतिपादकवाक्यार्थज्ञानात् कर्मफलानित्यत्वप्रतिपादकवाक्यार्थज्ञानेन हि देहात्मभ्रमादिदार्ढ्येन तद्विवेकादिज्ञानस्येव कर्मफलस्य नित्यत्वमेव नियमेन पश्यतो यागादिफलनित्यत्वे विचिकित्सावतस्तदनित्यत्वग्रहचित्तशुद्ध्यपेक्षानुष्ठितकर्मणामपि '**तद्यथेह**' इत्यादि वाक्ये आवृत्तिविधानादि न्यायसहकाराभावेन हि निन्दान्यायेन ब्रह्मज्ञानार्थवादताप्रतीतिस्सामान्यविषयतया चातुर्मास्यफलस्वर्गान्यविषयताप्रतीतिश्च न निवारयितुं शक्या। चित्तशुद्धेः तन्निवारकत्वे न्यायापेक्षापि न स्यात्। न्यायस्फुरण एव चित्तशुद्धेरुपयोग इति चेत् कर्मविचारेऽपि तदपेक्षाप्रसङ्गात् सूक्ष्मन्यायस्य तदपेक्षत्वे कर्मविचार एव तदपेक्षा स्यात्। तन्न्यायानामेव सूक्ष्मत्वात् फलानित्यत्वव्याप्तिस्तु लोके सर्वैरपि स्पष्टमेवावगम्यते। श्रुतिवशादेव हि नित्यत्वशङ्का। सा च वेदान्तन्यायेषु वाक्यनिबन्धनपूर्वपक्षशङ्कावत् नाशुद्धिसापेक्षा। तत्राप्यशुद्ध्यपेक्षाङ्गीकारिब्रह्मविचारस्य कर्मानुष्ठानापेक्षा भज्येत।

किञ्च कर्मफलानित्यताज्ञानस्य चित्तशुद्धिसापेक्षत्वे कर्मानुष्ठानानन्तर्यमेवाथशब्दार्थो युक्तः। अन्यथाध्ययनानन्तर्यस्येवाथशब्दार्थत्वेन विचारादेश्शुद्धिपर्यन्तस्य द्वारत्वकल्पनाप्रसङ्गात्। व्यवधानं तु कर्मविचारस्याप्यविशिष्टम्। ततोऽस्य सन्निकर्षे इतोऽपि कर्मानुष्ठानं सन्निकृष्टं तस्माद्यदनुष्ठेयान्तरं द्वारमपेक्ष्यैव हेतुः तदेव पूर्ववृत्तं वाच्यम्। अतः पूर्वविचारस्यार्थज्ञानद्वारकाध्ययनवदुत्तरविचारस्यानित्यताज्ञानद्वारकपूर्वविचार एव पूर्ववृत्तो वाच्यः।

---

[1] छा.उ.८.१.६.

[2] क - मीमांसितानुष्ठित; घ - मीमांसानुष्ठित

किञ्च किमत्र पूर्ववृत्तज्ञापने प्रयोजनम्। अधिकारिविशेषसूचनमिति चेत्तस्य वा किं प्रयोजनम्। यदि तज्ज्ञानं विना प्रवृत्तिर्न स्यात्तदानीं हि तत्प्रदर्शनीयम्। अत एव हि शास्त्रपाठासमर्थो बालश्शास्त्रसामान्यादिहाप्यसामर्थ्यबुद्ध्या न प्रवर्ततेति बालोऽधिकारी प्रदृश्यते 'बालोऽपि' इति। इह त्वनित्यताबुद्धौ सत्यां पूर्ववृत्तज्ञानं विनैव प्रवर्तते। तदभावे पूर्ववृत्तज्ञाने सत्यपि न प्रवर्तत इति व्यर्था पूर्ववृत्तकथा।

सिद्धान्ते तु पूर्वसूत्रे विवक्षितार्थत्वाभावेन विषयप्रयोजनसंबन्धाक्षेपस्य विवक्षितार्थत्वसमर्थनेन निराकरणवदिहापि सिद्धे व्युत्पत्त्यभावेन विषयप्रयोजन-संबन्धाधिकारिणाञ्चतुर्णामाक्षेपस्य सिद्धे व्युत्पत्तिसमर्थनमुखेन निराकरणं क्रियते।

## इति कर्मज्ञानस्यानुष्ठानद्वारत्वभङ्गः।।

# ६. अवेद्यत्वभङ्गः

[१]"**तद्विज्ञानार्थम्**' [२]"**येन वेद ब्रह्मविद्याम्**' इत्यवेद्यत्वं ब्रह्मणो निराचकार। तथा हि दृश्यत्वे मिथ्यात्वप्रसङ्गोऽद्वैतविद्याविजये निराकरिष्यते। यच्च दृश्यत्वे जडत्व-प्रसञ्जनं स्वप्रकाशस्य प्रदीपवत् प्रकाशोऽन्तरनिरपेक्षत्वादिति। तन्न। एतस्मिन्नपि प्रमाणसंस्तवदर्शनात्। प्रदीपस्य ज्ञानजनकस्य प्रदीपान्तरनैरपेक्ष्यं युक्तम्। स्वेनैव प्रकाशोपपत्तेः। तन्न्यायस्य कथमिहानिष्टता। न हि वयं स्वप्रकाशेन व्यवहारे जनयितव्ये प्रकाशान्तरसापेक्षत्वं ब्रूमः। किन्तु नैरपेक्ष्यमेव।

किञ्च ब्रह्मणश्शब्दापरोक्षविषयतापि न स्यात्। वृत्तिविषयत्वमिष्यत एवेति चेदवेद्यत्वावाच्यत्वसाधकतयाभिमतया [३]"**अप्राप्य मनसा सह**' इति श्रुत्या मनोवृत्ति-निषेधात् कथं वृत्तिविषयताभ्युपगमः।

किञ्च - किं सा वृत्तिर्ज्ञानमुत न। आद्ये वेद्यत्वसिद्धिः। द्वितीये जानामीत्यनुभव-विषयत्वं वृत्तेः। कथमात्मचैतन्यस्य विषयत्वासिद्धेः वृत्तिरेव विषय इति ह्यर्थः। ततश्च वृत्तेरज्ञानत्वे जानामीत्यनुभवविषयतोक्तिविरोधः। वृत्तिशबलं चैतन्यं हि ज्ञानमतो न विरोध इति चेत् ज्ञानत्वस्य व्यासज्यवृत्तित्वविवक्षायां विरोध एव। उभयोरपि प्रत्येकं परिसमाप्य ज्ञानत्वं वर्तत इति विवक्षाया वृत्तिविषयस्य ब्रह्मणो वेद्यत्वमनिवार्यम्। ज्ञानादिपदानामक्षादिपदवन्नानार्थत्वप्रसङ्गो वा। वृत्त्युपहितं चैतन्यं ज्ञानमिति पक्षेऽप्युपाधेरज्ञानत्वात् जानामीत्यनुभवविषयतोक्तिविरोधः।

ननु विषयत्वेन भासमानायां वृत्तौ चैतन्याभेदाध्यासाद्वृत्तौ ज्ञानत्वप्रतीतिरप्युपपद्यते। न च वृत्तिचैतन्ययोरभेदेन प्रतीतौ चैतन्येऽपि विषयताप्रतीतिरनिवार्येति वाच्यम्। '**विषयत्वं वृत्तिगतं भासते। चैतन्यं तदभेदेन भासत**' इति तत्प्रत्युक्तविषयताप्रतीतिः।

---

[१] परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्।
नास्त्यकृतः कृतेन **तद्विज्ञानार्थं** स गुरुमेवाभिगच्छेत्।। (मुण्डक.१.२.१२)

[२] तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय।
**येनाक्षरं पुरुषं वेद** सत्यं प्रोवाच तां तत्त्वतो **ब्रह्मविद्याम्**।। (मुण्डक.१.२.१३)

[३] तै.उ.२.४,२.९.

न हि [1]चैतन्ये विषयतां साधयतीति चेत् किं तत्र ज्ञानत्वेन भासमानाभेदाध्यासाद्वृत्तौ ज्ञानत्वप्रतीतिरुच्यते उत स्वरूपेण भासमानाभेदाध्यासात्। नाद्यः, असिद्धेः। द्वितीये गमनेऽपि जानामीति प्रतीतिप्रसङ्गः वृत्त्युपहिताज्ञानमित्येतच्च सत्यज्ञानादिश्रुतिर्निराचष्टे।

किञ्च [2]'**तदात्मानमेवावेत्**' [3]'**ब्रह्मविद्**' [4]'**ब्रह्म वेद**' इत्यादीनां का गतिः। का गतिस्तर्हि तन्निषेधानां [5]'**यत्तदद्रेश्यमग्राह्यम्**'

[6]'**यस्यामतं तस्य मतं मतं यस्य न वेद सः।**
**अविज्ञातं विजानतां विज्ञातमविज्ञातमविजानताम्।।**'

[7]'**विज्ञातारमरे केन विजानीयात् येनेदं सर्वं विजानाति तं केन विजानीयात्**' [8]'**अगृह्यो न गृह्यते**' इत्यादीनां [9]'**तदात्मानमेवावेत्**' [10]'**ब्रह्म वेद**' इत्यादिवेद्यत्वश्रुत्यनुरोध एवेति ब्रूमः। वेद्यत्वश्रुतीनां वृत्तिपरत्वे लक्षणानिषेधेन ज्ञानविशेषनिषेधपरत्वे संकोचः। विशेषाकारलक्षणायामपि धर्मपरित्यागात् संकोच एव ज्यायान्। अन्तरङ्गलक्षणात्वात् भूयस्त्वाच्च वेद्यत्वश्रुतय एव बलवत्यः।

---

[1] क - घ - चैतन्यविषयताम्

[2] ब्रह्मा वा इदमग्र आसीत् **तदात्मानमेवावेत्** अहं ब्रह्मास्माति। तस्मात् तत् सर्वमभवत्। (बृ.उ.३.४.१०)

[3] तस्मै स होवाच। द्वे विद्ये वेदितव्ये इति ह स्म यद् **ब्रह्मविदो** वदन्ति, परा चैवापरा च। (मुण्डक.१.१.४)

[4] स यो ह वै तत्परमं **ब्रह्म वेद** ब्रह्मैव भवति नास्याब्रह्मवित्कुले भवति।
तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति।। (मुण्डक.३.२.९)

[5] **यत्तदद्रेश्यमग्राह्यम**गोत्रमवर्णमचक्षुः श्रोत्रं तदपाणिपादम्।
नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं **यद्भूतयोनिं परिपश्यन्ति धीराः**।। (मुण्डक.१.१.६)

[6] केन.उ.२.३.

[7] येनेदं सर्वं विजानाति, तं केन विजानीयात्।
**विज्ञातारमरे केन विजानीयादिति**। (बृ.उ.४.४.१४, ६.५.१५)

[8] स एष नेति नेत्यात्मा। **अगृह्यो न हि गृह्यते**। अशीर्यो न हि शीर्यते। असङ्गो न हि सज्यते। असितो न व्यथते न रिष्यति। (बृ.उ.५.९.२६, ६.२.४, ६.४.२२, ६.५.१५)

[9] बृ.उ.३.४.१०.

[10] मुण्डक.३.२.९.

## ६. अवेद्यत्वभङ्गः

न हि बह्वीनां लक्षणा न्याय्या। किञ्च [1]'**यत्तदद्रेश्यम्**' इत्यत्रैव '**यद्भूतयोनिं परिपश्यन्ति धीरा**' इति श्रूयते। तत्रैकस्यैव दृशिधातोरेकत्र ज्ञानपरत्वमिति स्ववृत्तिपरत्वमिति वैरूप्यमनुपपन्नम्। '**दयावती भगवती श्रुतिरेव धीरा**' इति पदेन निषेधस्याधीरविषयत्वं वदन्ती बोद्धृणा वैयाकुर्लीं निराचकार। धीरशब्देन धीमतामग्रेसरत्वप्रतीतिः। उणादौ दशपाद्यां [2]'**सुसूधागृधिभ्यः क्रन्**' इति सूत्रेण क्रन् प्रत्ययः। तद्वृत्तौ च '**दधात्यादि चित्तमिति धीर**' इति व्युत्पादितम्।

[3]'**यस्यामतम्**' इत्यत्र '**तस्य मतम्**' इति ब्रह्मणो मतत्वमुच्यते। किञ्च - यस्य ब्रह्मामतमिति मतम् तस्य मतमेव मतम्, तदेव मतं तदेव समीचीनं मतम्। यस्य ब्रह्म मतमिति मतम् स न ब्रह्म वेदेति हि परेषां योजना। तत्र नैयायिकस्य वायुः प्रत्यक्ष इत्यत्र षष्ठ्या मतद्वारकसंबन्धस्यैव '**यस्यामतम्**' '**मतं यस्य**' इत्यत्रापि षष्ठ्यामतद्वारकसंबन्धलाभात् मतमिति पदाध्याहाराभावेऽपि '**तस्य मतम्**' इत्यत्र सामीचीन्यपरममतपदान्तरमध्याहर्तव्यम्।

किञ्च '**यस्यामतम्**' '**मतं यस्य**' इत्यत्रामतपदस्य मतपदस्य च ब्रह्मपरत्वात् सदंशिनीन्यायेन मध्यस्थमतपदस्यापि ब्रह्मपरत्वमेव युक्तम्। अपि चोत्तरवाक्ये ब्रह्मण्यधिकारिविशेषवेदनविषयत्वस्य निषेधात् पूर्वत्राप्यधिकारिविशेषनिर्देशात् तदधिकारिवेदनविषयत्वविधिरेव स्वरसतोऽवगम्यते।

ननु '**यस्यामतम्**' '**मतं यस्य**' इत्युभयत्रापि व्याघात इत्याशंक्य विवृणोति '**अविज्ञातम्**' इति। 'वि' शब्देन कात्स्न्र्यलक्षणसामीचीन्यरूपो विशेषो विवक्षितः। ब्रह्म सम्यक् जानामीति मन्यमानानां ब्रह्माविज्ञातं याथार्थ्येन ज्ञातं न भवति। ब्रह्म सम्यक् न जानामीति मन्यमानानां ब्रह्म सम्यक् ज्ञातं याथार्थ्येन ज्ञातमित्यर्थः।

एवं [4]'**यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह**' इति श्रुत्यनुसारात् परिच्छिन्नतयाज्ञानमेव निषिध्यते। प्रकरणबलात्तत्र परिच्छेदनिषेध एव हि स्वरसतः

---

[1] मुण्डक.१.१.६.

[2] उणादि.सू.८.४०.

[3] **यस्यामतं तस्य** मतं मतं यस्य न वेद सः।
**अविज्ञातं** विजानतां विज्ञातमविजानताम्।। (केन.उ.२.३)

[4] तै.उ.२.४; २.९.

प्रतीयते। [1]"**आनन्दस्य मीमांसा भवति**' इत्युपक्रम्य शतगुणितोत्तरक्रमेणोत्कर्षः न्याय्यः [2]"**यतो वाचो निवर्तन्ते**' इत्यभिधानात् ।

किञ्च [3]"**केनेषितम्**' इत्यादिना परमात्मनः प्रेरकत्वमभिधाय राजादिवत् स कथं नोपलभ्यत इत्याकाङ्क्षायां तस्य लौकिकप्रमाणागोचरत्वाभिप्रायेण [4]"**न तत्र चक्षुर्गच्छति**' इत्याद्युक्तवाङ्मनसयोरपि निषेधादप्रामाणिकत्वम् '**मा प्रसांक्षीत्**' इति। [5]"**अन्यदेव तद्विदितादथोऽविदितादधि**' इत्युक्तम्। लौकिकप्रमाणगम्यादन्यदलौकिक-प्रमाणगम्येषु धर्मादिषु प्रधानमिति यावत्।

---

[1] **सैषानन्दस्य मीमांसा भवति**। युवा स्यात् साधु युवाध्यायकः। आशिष्ठो दृढिष्ठो बलिष्ठः। तस्येदं पृथिवी सर्वा वित्तस्य पूर्णा स्यात्। स एको मानुष आनन्दः। ते ये शतं मानुषा आनन्दाः। स एको मनिष्यगन्धर्वाणामानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं मनुष्यगन्धर्वाणामानन्दाः। स एको देवगन्धर्वाणामानन्दः। श्रोत्रियस्य चाकामहतस्य। ये ते शतं देवगन्धर्वाणामानन्दाः। स एकः पितृणां चिरलोकानामानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं पितृणां चिरलोकलोकानामानन्दाः। स एक आजानजानां देवानामानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतमाजानजानां देवानामानन्दाः। स एकः कर्मदेवानां देवानामानन्दः। ये कर्मणा देवानपियन्ति। श्रोत्रियस्य चाकामहतस्य। ते ये शतं कर्मदेवानां देवानामानन्दाः। स एको देवानामानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं देवानामानन्दाः। स एक इन्द्रस्यानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतमिन्द्रस्यानन्दाः। स एको बृहस्पतेरानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं बृहस्पतेरानन्दाः। स एकः प्रजापतेरानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं प्रजापतेरानन्दाः। स एको ब्रह्मण आनन्दः। श्रोत्रियस्य चाकामहतस्य। स यश्चायं पुरुषे। यश्चासावादित्ये। स एकः। स य एवंवित्। अस्माल्लोकात् प्रेत्य। एतमन्नमयमात्मानमुपसंक्रामति। एतं प्राणमयमात्मानमुपसंक्रामति। एतं मनोमयमात्मानमुपसंक्रामति। एतं विज्ञानमयमात्मानमुपसंक्रामति। एतमानन्दमयमात्मानमुपसंक्रामति। तदप्येष श्लोको भवति। (तै.उ.२.७) **यतो वाचो निवर्तन्ते**। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्। (तै.उ.२.९)

[2] तै.उ.२.९.

[3] **केनेषितं** पतति प्रषितं मनः केन प्राणः प्रथमः प्रैति युक्तः।
केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ति।। (केन.उ.१.१)

[4] **न तत्र चक्षुर्गच्छति** न वाग्गच्छति नो मनो न विद्मो न विजानीमो यथैतदनुशिष्यात् **अन्यदेव तद्विदितादथो अविदितादधि** इति शुश्रुम पूर्वेषां ये नस्तद्व्याचचक्षिरे।। (केन.उ.१.३)

[5] के.उ.१.३.

## ६. अवेद्यत्वभङ्गः

एवमलौकिकप्रमाणवेद्यत्वमुक्तम्। अनन्तरञ्च [१]'**यद्वाचानभ्युदितम्**' इत्यादिभिः [२]पञ्चभिर्मन्त्रैः [३]"**तदेव च ब्रह्म त्वं विद्धि**' इति वेद्यत्वं पञ्चकृत्वोऽभ्यस्तं मनःप्राण-चक्षुरादीनां प्रेरकत्वस्य तत्तत्कार्यसामर्थ्याधायकत्वस्य च ब्रह्मण्युपदिष्टत्वात्। तावता ब्रह्म कृत्स्नशो ज्ञातमिति मन्यमानं शिष्यं प्रत्याह [४]"**यदि मन्यस**' इत्यादि दभ्रमेव कृत्स्नमित्यर्थः। सूपसर्गेण वेदनविषयत्वं सुष्ठुवेदनायोग्यत्वञ्च उक्तम्। [५]"**सुवेदेति**' भ्रान्तिनिवृत्त्यर्थं ब्रह्मरूपं त्वया मीमांस्यमिति गुरुणोक्ते मीमांसित्वा शिष्य आह [६]"**मन्ये विदितम्**' इति विदितत्वहेतुमाह - [७]"**नाहं मन्ये सुवेदेति नो न वेदेति**'। अस्यार्थः - 'अहं सुवेदेति मन्ये न वेदेति च नो मन्य' इत्यर्थः। '**नो न वेद**' इत्यनन्तरमनुषक्तेन 'मन्ये' इति पदेन 'नो' शब्दस्यान्वयः सुवेदत्वभ्रमः। अवेद्यत्वभ्रमश्च नास्तीत्युक्तम्। किं तर्हि सन्देह एवेत्यत आह '**वेद च**' इति उपदिष्टाकारेण ब्रह्मावधारयामि चेत्यर्थः। यद्यपि '**नो न वेदेति वेद च**' इत्येकवाक्यत्वमेव स्वरसतः प्रतीयते। '**मन्य**' इत्यस्यानुषङ्गो न कार्यः। '**न वेदेति नो वेद**' इत्यन्वयात्। तथापि शङ्करानुसारादेवमुक्तम्। पदान्तरेणापि वेद्यत्वसिद्धेः।

---

[१] **यद्वाचानभ्युदितं** येन वागभ्युद्यते।
**तदेव ब्रह्म त्वं विद्धि** नेदं यदिदमुपासते।। (केन.उ.१.४)

[२] यन्मनसा न मनुते येनाहुर्मनो मतम्।
**तदेव ब्रह्म त्वं विद्धि** नेदं यदिदमुपासते।।
यच्चक्षुषा न पश्यति येन चक्षूँसि पश्यति।
**तदेव ब्रह्म त्वं विद्धि** नेदं यदिदमुपासते।।
यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदँ श्रुतम्।
**तदेव ब्रह्म त्वं विद्धि** नेदं यदिदमुपासते।।
यत्प्राणेन न प्राणिति येन प्राणः प्रणीयते।
**तदेव ब्रह्म त्वं विद्धि** नेदं यदिदमुपासते।। (केन.उ.१.५-८)

[३] केन.उ.१.४-८.

[४] **यदि मन्यसे सुवेदेति** दभ्रमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपम्।
यदस्य त्वं यदस्य देवेष्वथ नु मीमांस्यमेव ते मन्ये विदितम्।। (केन.उ.२.१)

[५] केन.उ.२.१.

[६] केन.उ.२.१.

[७] **नाहं मन्ये सुवेदेति नो न वेदेति** वेद च।
यो नस्तद्वेद तद्वेद नो न वेदेति वेद च।। (केन.उ.२.२)

यथोक्तज्ञानवानेव ब्रह्मविदित्याह - [1]'**यो नस्तद्वेद तद्वेद नो न वेदेति वेद च**' इति। '**यो नः**' - अस्माकं मध्ये सब्रह्मचार्यपेक्षया बहुवचनं तद्यथोक्तं सुष्ठु वेदनाशक्यत्वम्। '**वेद**'- स एव तत् ब्रह्म वेद यश्च '**नो न वेदेति वेद च**'- स एव च तद्वेदेत्यनुषङ्गः। '**यो नस्तद्वेद**' इत्यत्र तच्छब्देनैवात्यन्तवेद्यत्वाभावसंग्रहे शक्येति तस्य पृथक् कीर्तनं [2]'ब्राह्मणपरिव्राजक' न्यायेन तात्पर्यातिरेकेण प्राधान्यात् तात्पर्यहेतुश्च सर्ववस्तुविषयकज्ञानेऽपि ब्रह्मणो विशेष्यतया ग्रहणयोग्यतयैव पूर्वत्र वेद्यत्वं बहुशोऽभ्यस्तम्। उत्तरत्रापि [3]'**इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टि**' इति वेदनात् परमपुरुषार्थप्राप्तिमवेदनान्महानर्थप्राप्तिञ्च वदति।

एवं दुर्विज्ञानत्वं [4]'**ब्रह्म ह देवेभ्यो विजिग्य**' इत्युत्तरखण्डे प्रतिपाद्य चतुर्थखण्डे इन्द्रस्य [5]'**ततो हैव विदाञ्चकार ब्रह्म**' इति ब्रह्मवेदनमुक्त्वा इन्द्राच्चाग्निवाय्वोः ब्रह्मवेदनमभिप्रेत्य इन्द्रवाय्वग्नीनां प्रथमं ब्रह्मवेदनादन्यदेवताभ्य उत्कर्षं तेष्वपीन्द्रस्य प्रथमं ब्रह्मवेदनादग्निवायुभ्यामपि श्रेयस्त्वमुक्तम्[6]। एवं पूर्वोत्तरयोर्वेद्यत्वस्यैवाभिधानात् कथमत्र तन्निषेधः। '**येनेदं सर्वम्**' इत्यत्र कारणाक्षेपोऽभ्यवगम्यते। ततश्च येन परमात्मना [7]'**मत्तः स्मृतिर्ज्ञानमपोहनञ्च**' इत्युक्तरीत्या सर्वं ज्ञायते। तं तस्मादृते केन

---

[1] केन.उ.२.२.

[2] **ब्राह्मणपरिव्राजकन्यायः** - प्राशस्त्याप्राशस्त्यनिबन्धनस्संकोचः च अत्र। गोबलीवर्दन्याये तु प्रसिद्ध्यप्रसिद्धि निबन्धन इति भिदा। यथा 'ब्राह्मणा आगताः' 'परिव्राजकोऽप्यागत' इत्यत्र प्रथमवाक्येनैव ब्राह्मणत्वत्वेन रूपेण परिव्राजकस्याप्यागमनस्य सिद्धौ यत् 'परिव्राजकोप्यागत' इति वाक्यान्तरं प्रयुज्यते, तत्पूर्ववाक्यघटकब्राह्मणपदं परिव्राजकेतरबोधनपरतया पर्यवस्यतीति।

[3] **इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः**।
भूतेषु भूतेषु विचिन्त्य धीराः प्रत्यास्माल्लोकादमृता भवन्ति।। (केन.उ.२.५)

[4] **ब्रह्म ह देवेभ्यो विजिग्ये** तस्य ह ब्रह्मणो विजये देवा अमहीयन्त।
त ऐक्षन्तास्माकमेवायं विजयोऽस्माकमेवायं महिमेति।। (केन.उ.३.१)

[5] सा ब्रह्मेति होवाच ब्रह्मणो वा एतद्विजये महीयध्वमिति **ततो हैव विदांचकार ब्रह्मेति**। (केन.उ.४.१)

[6] तस्माद्वा एते देवा अतितरामिवान्यान् देवान् यदग्निर्वायुरिन्द्रः।
ते ह्येनन्नेदिष्ठं पस्पृशुः। ते ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति।।
तस्माद्वा इन्द्रोऽतितरामिवान्यान् देवान्। स ह्येनन्नेदिष्ठं पस्पर्श।
स ह्येनत्प्रथमो विदाञ्चकार ब्रह्मेति।। (केन.उ.४.२-३)

[7] सर्वस्य चाहं हृदि सन्निविष्टो **मत्तः स्मृतिर्ज्ञानमपोहनञ्च**।

विजानीयादित्यर्थः। [१]‘**तस्यैष आत्मा विवृणुते तनूं स्वाम्**’ इत्यर्थोऽभिप्रेतः। तस्माच्छ्रुतिरवेद्यत्वे न प्रमाणं वेद्यत्वश्रुत्या बाधितविषयत्वादनुमानमपि तत्र न प्रमाणम्।

यदेतन्नवीनोक्तम् - अनुभूतिरवेद्या अनुभूतित्वात्। व्यतिरेकेण घटादित्यनुमानं मानमवेद्यत्वञ्चेह चिदविषयत्वमभिमतम्। अतो वृत्तिविषयत्वमादाय न बाध इति तन्न। देवदत्तयज्ञदत्तादेः परस्परव्यवहारार्थमनुमित्यादिवृत्त्यवच्छिन्नचैतन्यविषयत्वस्यावश्यकत्वात्। न हि तत्राभेदस्संभवति। वास्तवाभेदस्यातिप्रसञ्जकत्वात् केवलवृत्तेर्व्यवहारहेतुत्वस्य त्वयाप्यङ्गीकारात्। ब्रह्मणोऽपि वृत्तिप्रतिबिंबितचैतन्यविषयत्वात् बिम्बप्रतिबिम्बाभावेन तयोर्भेदाल्लाघवेन भेदमात्रस्यैव विषयत्वप्रयोजकत्वात् धर्मिसमसत्ताकभेदस्य तत्राप्रयोजकत्वात् सुखित्वदुःखित्वाज्ञत्वसर्वज्ञत्वव्यवस्थावत्। आह च स्वयमेवं जानीयामिति जिज्ञासाया विषयित्वप्रयोजकधर्मभेदेन कल्पितभेदसत्वात् स्वविषयत्वमिति।

ननु स्वसमानसत्ताकचिद्विषयत्वस्याभावस्साध्य इति चेत् तथा सति तादृशवृत्तिविषयत्वस्याप्यभावेन बाधपरिहाराय विशिष्य चिद्घटितनिर्वचनायोगात् कारणत्वसत्यत्वानन्दत्वादीनामपि समानसत्ताकानामभावेन तेषां विधौ वेद्यत्वस्य निषेधे च हेत्वभावाच्च।

न च स्वप्रकाशत्वसिद्ध्यर्थं विशिष्यवेद्यत्वनिषेध इति वाच्यम्। स्वव्यवहारहेतु-प्रकाशत्वं हि स्वप्रकाशत्वम्। न च चिद्विषयत्वं स्वव्यवहारहेतुप्रकाशत्वविरोधि। घटादेः स्वव्यवहारहेतुप्रकाशकत्वाभावस्य चित्त्वप्रयुक्तत्वात्।

अतो वेद्यत्वनिषेधस्य स्वप्रकाशत्वेन कथञ्चिदभ्युपयोगः। अनुभूतिर्वेद्या वस्तुत्वादिति प्रत्यनुमानञ्च स्वविषयप्रकाशाभावे व्यवहारानुपपत्तेः। मोक्षे आनन्दप्रकाशाभावेऽपुरुषार्थत्वप्रसङ्गाच्च। तर्कसाचिव्यादस्यानु-मानस्य प्राबल्यादनेन बाधश्च।

न च संविदन्तराभावात् स्वस्य स्वविषयत्वानुपपत्तेश्च अवेद्यत्वानुमानेऽप्यनुकूल-तर्कोऽस्तीति वाच्यम्। स्वस्य विषयत्वे बाधकाभावात्। न च भेदप्रयोज्यसंबन्धः कथं भेदं

---

वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम्।। (महा.भीष्म.३९.१५, भ.गी.१५.१५)

[१] नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन।
यमेवैष वृणुते तेन लभ्यस**्तस्यैष आत्मा विवृणुते तनूँ स्वाम्**।। (कठ.उ.१.२.२३, मुण्डक.३.२.३)

विनेति वाच्यम्। संयोगस्यैव तथात्वात्। स्वरूपसंबन्धे तन्नियमाभावात्। शब्दशब्दस्य स्वेनैव वाच्यवाचकसंबन्धस्यावश्यकत्वात् सर्वमित्यादिपदजन्यवृत्तेः स्वविषयत्वाच्च।

यदत्राह नवीनः - तद्विषयप्रत्यक्षे तत्सन्निकर्षस्य हेतुत्वाज्जन्यप्रत्यक्षस्य स्वविषयत्वं विरुद्धम्। प्रकाशविषयत्वे जडत्वापत्तेश्च। विषयविषयिभावात्मकस्वरूपसंबन्धस्य भेदनिष्ठत्वाच्च। अत एव जन्यज्ञानस्यापि स्वविषयत्वमयुक्तम्। सर्वं जानीयामिति जिज्ञासा विषयत्वविषयित्वप्रयोजकधर्मभेदेन कल्पितभेदसत्वात् स्वविषयत्वं माऽभूद्वा स्वविषयत्वम्। तस्या विशिष्यज्ञातत्वात्। प्रमेयत्वाकारिका वृत्तिश्च न स्वविषया मानाभावात्। घटादिवृत्तिविषयकव्यवहारस्यापि तदभिव्यक्तचैतन्यादेवोपपत्तिरिति।

अत्रोच्यते - वृत्तेरपरोक्षत्वं न स्वाभाविकम्। अपि त्वपरोक्षार्थविषयत्वनिबन्धन-मिति त्वयैवोक्तम्। तथा चापरोक्षतदर्थविषयवृत्तित्वावच्छेदेन तत्सन्निकर्षः कारणमिति पर्यवसितम्। तच्चापरोक्षघटाद्यर्थविषयानुमितिशाब्दवृत्त्यादिष्वतिप्रसक्तम्। 'दशमस्त्वमसि' इत्यादिवाक्यजन्यज्ञानेष्वप्यतिप्रसक्तम्। तस्मात्तवापि न विषयमात्रस्य सन्निकर्षनियमः। तस्मात् ज्ञानातिरिक्तविषयप्रत्यक्षे तत्सन्निकर्षः कारणम्। तच्च त्वयापि वाच्यम्। अन्यथा एतत्कालवर्तिशाब्दज्ञानवांस्त्वमिति वाक्यजन्यज्ञाने व्यभिचारात्। तद्धि स्वविषयमेव, तत्काले शाब्दज्ञानान्तराभावादपरोक्षञ्चापरोक्षविषयत्वात्।

नन्विन्द्रियातिरिक्तमानान्तराजन्यत्वं विशेषणम्। अत एव न तत् पूर्वोक्ताति-प्रसक्तिरपीति चेत् एवमपि गौरवमपरिहार्यम्।

अस्मन्मते तु ज्ञानातिरिक्तत्वं विशेषणमिति लाघवम्। यच्च प्रकाशविषयत्वे जडत्वापादनं तदकस्मादप्रयोजकत्वाद्विविषयविषयिभावस्य भेदाधीनत्वनिर्बन्धोऽपि निर्निबन्धनः। एतत्कालवर्तिविशिष्टज्ञानवांस्त्वमिति पूर्वोक्तविषये स्वविषयकत्वस्यावश्य-कत्वात् वृत्तिरनित्या जडेत्यादिवृत्तेः स्वविषयत्वमपरिहार्यम्। स्वविषयत्वाभावेऽन्य विषयत्वेऽपि न मानं पश्यामः। वृत्तिशब्दार्थत्वमेव ह्यन्यस्य विषयत्वे मानम्। तदिहापि तुल्यमेव। स्वविषयत्वे चायोग्यत्वादबाधकञ्च न किञ्चिदस्ति। स्वविषयत्वाभावे च ज्ञानव्यवहारो न स्यात्। व्यवहर्तव्यप्रकाशस्य व्यवहारहेतुत्वात्।

ननु व्यवहारमात्रे प्रकाशः प्रकाशत्वेन हेतुः, न तु व्यवहर्तव्यप्रकाशत्वेन गौरवात्। अनात्मव्यवहारे व्यवहर्तव्यप्रकाशो विशेषहेतुः। आत्मव्यवहारे आत्माभिन्नप्रकाशः यत्सामान्ये यत्समान्यस्य हेतुत्वं तद्विशेषे तद्विशेषस्य हेतुत्वमिति चेत् किमनात्मप्रकाश-

गोचराप्रकाशत्वेनानात्मगोचरव्यवहारत्वेन हेतुहेतुमद्भावोऽभिमतः, उतानात्मगोचर-तद्विषयकप्रकाशत्वेनानात्मगोचरतद्विषयकप्रकाशत्वेनानात्मगोचरतद्विषयकव्यवहारत्वेन हेतु-हेतुमद्भावः।

नाद्यः, तथा कल्पनस्यानपेक्षितत्वात्। अन्यथा अघटप्रकाशत्वादिनापि कल्पनापत्तेः। न द्वितीयः, अनात्मविशेषणप्रवेशे गौरवात्। अस्तु वा अनात्मगोचर-प्रकाशत्वेनानात्मगोचरव्यवहारत्वेन कार्यकारणभावः। अनात्मगोचरतद्विषयकव्यवहारत्वेन कार्यकारणभावश्च। तथापि त्वदुक्तन्यायेनैव तद्विषयप्रकाशस्य तद्विषयव्यवहारे कारणत्वं सिध्यत् केन वार्यते।

नन्ववच्छेदकानुप्रवेशो माऽभूत्। तथाप्यतिप्रसङ्गवारणार्थमनात्मसु प्रकाश-व्यवहारयोः समानविषयत्वेन कार्यकारणभावो वाच्यः। आत्मनि तु लाघवात् तदभिन्नप्रकाशत्वेन सामान्यसामग्र्यैव वा तद्व्यवहार इति चेन्न। घटादिप्रकाशव्यवहारयोः कार्यकारणभावकल्पनादशायां गौरवेणात्मत्वस्याननुप्रवेशेन समानविषयत्वेन कार्यकारण-भावकल्पनायामात्मप्रकाशव्यवहारयोरप्यनुप्रवेशात्। अन्यथा तत्प्रत्यक्षे तत्सन्निकर्षस्य हेतुतया ज्ञाने सन्निकर्षाभावात् प्रत्यक्षमनुपपन्नमित्युक्तं विरुध्यते।

किञ्चात्मव्यवहारे व्यवहर्तव्याभिन्नभिन्नप्रकाशो हेतुः। अन्यत्र तद्विषयप्रकाश इत्युक्तिश्च परकीयन्यायकुलीशदर्शनसन्धुक्षितभीत्याहितस्वमतविस्मरणनिबन्धना घटादेरपि न चैतन्यविषयता। किन्त्वाध्यासिकतदभेद एव प्रवृत्तेः परं घटादिर्विषय इति हि तव मतम्। ततश्च वृत्तिविषयत्वं चैतन्याविषयत्वञ्च सर्वत्राविशिष्टमिति इष्टमिति कथं व्यवस्थया वेद्यत्वविधिनिषेधौ। न चाध्यासिकाभेद एव विषयत्वमिति शक्यं वक्तुं वृत्तेः घटविषयत्वाभावप्रसङ्गात्। विषयपदस्य नानार्थत्वाङ्गीकारश्चानुपपन्नं, मानाभावात्।

ननु वृत्तौ सविषयत्वव्यवहारः सविषयकज्ञानावच्छेदकत्वादिति चेन्न। ब्रह्मणि वृत्तिविषयत्वव्यवहारविरोधादिदमाकारवृत्तेः रजतविषयत्वप्रसङ्गाच्च। किञ्च व्यवहारे हि पदज्ञानं तदर्थज्ञानं च कारणम्। तयोश्च द्वयोरपि कारणत्वार्थं पदज्ञानत्वेन तदर्थगोचर-ज्ञानत्वेन च कारणत्वं कल्प्यम्। अत उभयानुगतकारणतावच्छेदकस्यानपेक्षितत्वान्न प्रकाशत्वेन कारणता। तथा सति दण्डचक्रादेर्द्रव्यत्वेनापि कारणतापत्तेः। किञ्च सामान्यकारणतायामेव समानविषयत्वेन विशेषणादतिप्रसङ्गपरिहारादात्मानात्म-व्यवहारयोः तदभिन्नप्रकाशतद्विषयत्वप्रकाशत्वाभ्यां विशेषकारणत्वकल्पनं गौरवपराहतम्।

किञ्च प्रत्यक्षत्वेन सन्निकर्षत्वेन कार्यकारणभावस्सामान्यतो लाघवात् ज्ञानान्यप्रत्यक्षे तत्सन्निकर्षः। ज्ञाने तु सामान्यसामग्र्यैव प्रत्यक्षमिति संभवात् ज्ञानस्य स्वविषयत्वमविरुद्धम्। तथा चात्मव्यवहारेऽप्यात्मगोचरप्रकाशो हेतुरस्तु।

किञ्च त्वया अपरोक्षस्थले तादात्म्यस्यैव व्यवहारप्रयोजकत्वेनाङ्गीकारात्। तत्र भेदविलक्षणं भिन्नत्वे सत्यभिन्नसत्ताकलक्षणतादात्म्यं व्यवहारहेतुः। आत्मन्यभेदः परोक्षे तद्गोचरत्वमित्यतिगौरवं यच्च संविदन्तराभावादिति।

तदप्यनुपपन्नम्। तथा हि किं संविदमनपेक्ष्य सर्वव्यवहारसिद्धेः संविदन्तराभावः उत संविदन्तरे मानाभावात्, उत ब्रह्मचैतन्येनैव सर्वव्यवहारसिद्धेः। नाद्यः, सर्वेषां सर्वदा सर्वव्यवहारस्य वा प्रसङ्गात्। न द्वितीयः, तदुक्त्यसंभवादेव सर्वस्य वस्तुनोऽपि संविदधीनसिद्धित्वमभ्युपगम्यैव हि मानाभावात् संविदसिद्धिरुच्यते। अतो व्याघातः। न तृतीयः, ब्रह्मणो घटादिविषयत्वस्य स्वाभाविकत्वे तस्यैव च व्यवहारहेतुत्वे सर्वेषां सर्वदा सर्वव्यवहारप्रसङ्गः। कादाचित्कत्वेऽप्येकस्य व्यवहारदशायां सर्वेषां तद्विषयव्यवहार-प्रसङ्गः।

तस्मात् [१]प्रतिमात्रप्रमाणव्यापारभेदं संविद्भेदो वाच्यः। उत्पत्तिविनाशप्रतीत्या च संविदां भेदसिद्धिः। न चोत्पत्त्यादिप्रतीतिर्भेदकोपाधिविषया घटाकाशो नष्ट इत्यादाउपाधि-भूतघटनाशवदिहोपाधेये उपलभ्यमाने उपाधिनाशस्याप्रतीतेः। अन्वयव्यतिरेकाभ्यां व्यवहारहेतुतया क्लृप्तात् सविषयकतयोत्पत्तिविनाशवत् तया चोपलभ्यमानादतिरेकेण तदुपाधेयस्य कस्यचिदङ्गीकारेऽपि न सा संवित्।

न चाङ्गीकृतेनापि तेन किञ्चित् प्रयोजनमन्यत्, गौरवात्। न चैवं संविदङ्गी-कारे लाघवम्। त्वया संविद्विषयतयोत्पत्तिविनाशवत्तया चोपलभ्यमानानामप्यङ्गीकारात्। तदतिरिक्तस्यापि तदुपधेयतया कल्पने गौरवात्।

ननु प्रकाशस्य व्यवहारकारणत्वात् ब्रह्मणश्च प्रकाशरूपताया श्रुतिसिद्धत्वात्। अन्यस्यापि प्रकाशकल्पने गौरवमिति चेन्न। परस्सहस्रवाक्यैर्जन्यस्य चेतनधर्मस्यापि प्रकाशरूपताप्रतीतेः। किञ्च श्रुतिर्हि व्युत्पन्नज्ञानप्रकाशादिपदस्यैव प्रकाशब्रह्मसंसर्गं बोधयति। व्युत्पत्तिः चोत्पत्त्यादियोगिनि चेतनधर्म एव। ततश्च श्रुत्यापि

[१] क - श्रुतिमात्र; घ - प्रतिमात्र

## ६. अवेद्यत्वभङ्गः

यज्ज्ञानपदप्रवृत्तिनिमित्ततया सविषयत्वं गृहीतं तत्संसर्ग एव ब्रह्मणो बोध्यते स्वप्रकाशश्रुत्या स्वविषयत्वम्।

ननु जीवब्रह्मणोरभेदश्श्रुतिसिद्धः। अतः प्रकाशात्मकब्रह्माभेदात् स्वस्यापि प्रकाशात्मतया स्वस्वरूपेणैव घटादिप्रकाशोपपत्तौ प्रकाशान्तरकल्पनमनुपपन्नमिति चेन्न। एवमपि घटादिविषयतया संप्रतिपन्नेनैव सर्वव्यवहारोपपत्तौ स्वरूपस्यापि घटादि प्रकाशत्वकल्पनाया गौरवपराहतत्वात्। न च संविदन्तराङ्गीकारेऽद्वैतक्षतिः। मिथ्यात्वेनोपपत्तेः। जीवेनैव सति ज्ञानाध्यासोपपत्तेः।

ननु जीवस्य ब्रह्मस्वरूपमिदानीमनवच्छिन्नं न भासते, किन्तु घटाद्यवच्छिन्नमेव घटःसन्निति। तस्मादधिष्ठानप्रकाशसापेक्षो ज्ञानाध्यासः किञ्चिदवच्छिन्न एव शुक्त्यवच्छिन्ने सति रजताध्यासवत्। अत्र च किञ्चित् सदवच्छेदकं न प्रतीतमिति कथमध्यासः, न। अध्यासमात्रेऽधिष्ठानज्ञानं न कारणम्। अजन्यस्याप्यविद्याध्यासस्य दर्शनात् सादृश्याधीनाध्यास एवाधिष्ठानज्ञानस्य कारणता अध्यासस्याधिष्ठानगोचरत्वमेव नियतं तदिहापि संभवत्येव। ज्ञानावच्छिन्नस्यैव सतो भानसंभवादनवच्छिन्नाप्रकाशोऽपि स्थित एव। अत एव स्वाप्नाध्यासोपपत्तिः शंखपीताध्यासोपपत्तिश्च। एवं चावरणकल्पनागौरवं च न भविष्यति। स्वरूपेण प्रकाशप्रसक्त्याभावात्।

ननु वृत्तिर्निर्विषयैव चैतन्यावच्छेदिका। अतो वृत्त्या व्यवहारासंभवात् ब्रह्मचैतन्य-संबन्धादेव व्यवहारो वाच्य इति चेन्न। उत्पत्यादिसामानाधिकरण्येनोपलभ्यमानविषय-संबन्धस्यान्यनिष्ठत्वकल्पने बाधात्।

किञ्च वृत्तेर्निर्विषयत्वे तद्विषयप्रत्यक्षस्य तत्सन्निकर्षजन्यत्वनियमः पूर्वोक्तो भज्येत। यदि विषयसंबन्धिप्रकाशावच्छेदकत्वमेव वृत्तेः सविषयत्वं तदा रजताध्यासासंभवः, तत्सन्निकर्षाभावात्। शुक्तीदमाकारवृत्त्यवच्छिन्नमेव हि चैतन्यं रजतावभासकं त्वयेष्यते। अत इदमाकारवृत्ती रजतावभासकचैतन्यावच्छेदकत्वाद्रजत-विषया। अतस्तत्र सन्निकर्षाभावात् सा न स्यात्। तस्मात् स्वतः सविषयत्वमङ्गीकृत्य शुक्तीदमाकारवृत्तेरिदं विषयत्वमेव न रजतविषयतेति वाच्यम्।

ननु यत्साक्षादपरोक्षाद्ब्रह्मेति ब्रह्मण आपरोक्ष्यश्रवणात् तत्संबन्धादेवार्थापरोक्ष्य वाच्यमित्यर्थापरोक्ष्यहेतोः चैतन्यस्यैव हेतुता[१] वाच्येति न। एवमपि परोक्ष

[१] क - व्यवहारहेतुता; घ - हेतुता

तद्विषयकज्ञानस्यैव व्यवहारहेतुतया, अन्यत्रापि तथैव कल्पनस्योचितत्वात्। तथा चापरोक्षीभूतार्थविषयवृत्तिरेव व्यवहारहेतुः स्यात्। आपरोक्ष्यं च नार्थगतमिति व्यवस्थापितम्। प्राक् तस्मात् सविषयत्वमापरोक्ष्यं व्यवहारहेतुत्वञ्च वृत्तेरेव। अतो वृत्तिरेव घटादिसंवित्।

ननु कथं वृत्त्यध्यासः मिथ्यार्थस्य ज्ञानव्याप्तेः। अतस्तत्र ज्ञानान्तराङ्गीकारे अनवस्थाप्रसङ्गादात्मैव वृत्तिगोचरज्ञानमिति वाच्यम्। ततश्च तस्यैव घटादिज्ञानत्वमपीति चेन्न, वृत्तेरेव स्वविषयतया स्वज्ञानत्वात्।

अथ कथमविद्याध्यासः अविद्याया ज्ञानरूपत्वसिद्धेः ज्ञानान्तराभावाच्च। अतो ब्रह्मैवाविद्याध्यास इति वाच्यम्। अतस्सर्वत्र तदेव प्रकाशकं कल्पयितुं युक्तमिति चेन्न। ब्रह्मणोऽविद्याध्यासत्वे ज्ञानाध्यासेन सहैवार्थाध्यासनिवृत्तेर्ब्रह्मणोऽपि निवृत्तिरविद्याया अनिवृत्तिर्वा स्यात्। अतो विद्याध्यासरूपज्ञानमविद्यैव वा तत्संबन्धवदनादिसिद्धमविद्या-साक्षिरूपज्ञानानन्तरं वा विद्यया सह निवर्त्यमित्यास्थेयम्। मा भूद्वाविद्याध्यासः किमावयोश्छिन्नम्। '**सत्यवादिनस्तावन्न किञ्चिदपि हीयत**' इति सुप्रसिद्धम्। असत्यवादिनोऽपि किमविद्याध्यासेन। कथं तर्हि मिथ्याभूतघटादिपरिणामः। मृदादौ सति का कथंता, मृदादेरपि मिथ्यात्वात्। सर्वस्यापि मूलतया विद्यैष्टव्येति चेत् किं त्वं सर्वकार्यरूपेण परिणममानान्तरं पश्यसि। भावकार्यत्वात् कार्यस्य मिथ्यात्वाच्च मिथ्याभूतां तां पश्यामीति चेत् कथं तर्हि रजतोपादानं विना रजतोत्पत्तिं पश्यसि। तस्माद्भावकार्यमपि किञ्चिन्न परिणाम्युपादानकमिति स्वीकुरु। न किञ्चिदपि हीयते अद्वैतस्याहानेः। न च दोषाभावादनध्यासः भेदवासनायास्सत्वात्।।

ननु कोऽयमध्यासो घटादेरिति चेत् दृष्टसृष्टिरिति रहस्यमित्यसदस्यं ब्रुवतः किं नामानुपपन्नम्। अज्ञातमपि मिथ्यावस्तु[१] वर्तत इति वदतो वा प्रातिभासिकस्यैव ज्ञानसापेक्षत्वम्। न व्यावहारिकस्येति संभवात्। आध्यासिकस्य ज्ञानव्याप्त्यङ्गीकारेऽपि वस्तुजातं स्वस्वाधिष्ठानयोः प्रकाशकमित्यस्तु इतो वरमेकप्रकाशेनैवाध्यासाङ्गीकार इति चेन्न। पूर्वोक्तरीत्या ब्रह्मणोऽपि निवृत्तेरध्यस्तस्यानिवृत्तेर्वा प्रसङ्गस्य दुर्वारत्वात् ।

न चावेद्यत्वश्रुतिमहिम्नैव वृत्तेर्जडत्वकल्पनं वेद्यत्वश्रुतिमहिम्ना जडत्वस्यैव कल्पनीयत्वात्। न हि '**नातिरात्रे षोडशिनं गृह्णाति**' इति निषेधबलादतिरात्रे षोडशिनं

[१] क - घ - मिथ्याभूतवस्तु

गृह्णातीति वाक्यं षोडशिग्रहणातिरिक्तं किञ्चिद्विधातुं समर्थम्। अतस्तत्र विधिनिषेधयोः षोडशिग्रहणपदस्य समानार्थत्वे स्थित एव यथा व्यवस्था तथात्रापि युक्ता। युक्ता च सा।

ननु नित्या तावदेका संविदवश्याभ्युपगन्तव्या। तथैव निखिलज्ञानकार्योपपत्तेः न वृत्तिरपि संविद्गौरवात्। तथा हि - अस्ति तावत् घटादिज्ञानधारानुसन्धानमेतावन्तं कालं घटमद्राक्षमिन्दिरारमणमध्यासिषमिति। तच्च तत्तज्ज्ञानानां तत्तत्कालीनात्मनश्च पूर्वानुभवाभावे न संगच्छते। न च मध्येऽनुव्यवसायस्संभवति विच्छेदे ध्यानत्वाद्यनुपपत्तेः। 'जिज्ञासितश्रीवेङ्कटाचलेशलीलाकमनीयविग्रहदर्शनधारानुसन्धानानुपपत्तेः तत्र बुभुत्सा-घटितभगवद्विग्रहदर्शनसामग्र्याः प्रबलत्वात्।' तत्रानुव्यवसायाभ्युपगमे तत्सामग्री-प्राबल्यापत्या बाह्यज्ञानोच्छेदाज्ज्ञानधारानुपरमप्रसङ्गात् बाह्यज्ञानसामग्रीप्राबल्यात् तदुपरमेऽनुव्यवसायमात्रविलोपप्रसङ्गात्।

किञ्च नैरन्तर्येण द्वादश नामानि शृण्वतो '**द्वादश नामान्यश्रौषम्**' इत्यनु-सन्धानानुपपत्तिः। मध्येऽनुव्यवसायश्चेत् कल्प्यते। तत्सामग्रीकालोत्पत्तिर्न नाम्नो अनुभवाभावेन द्वादशत्वप्रतिसंधानायोगः न चेदनुसन्धानस्यैवायोगः।

किञ्च सुखजनकेष्टज्ञानस्यानुसन्धानानुपपत्तिः इष्टज्ञानस्य चरमकारणत्वेनानन्तरं सुखोत्पत्तेः। सुखात् प्रागनुव्यवसायकल्पने तत एवेष्टज्ञानविनाशात् सुखानुपपत्तेः। सुखानन्तरमनुव्यवसायश्च सुखस्यावश्यवेद्यत्वान्न संभवति। सुखज्ञानयोः समूहालम्बनसंभवेऽपि पौर्वापर्याग्रहात् कार्यकारणभावग्रहासंभवः।।

ननु ज्ञानस्य स्वप्रकाशत्वात् सर्वमुपपद्यत इति चेन्न। जानामीति प्रतीयमानस्य घटवद्विषयत्वावश्यंभावात् स्वप्रकाशत्वानुपपत्तेः। चिदविषयत्वस्य स्वप्रकाशत्वरूपत्वात्। किञ्चैकविषयज्ञानधारानन्तरमेतावन्तं कालं नेतः परमद्राक्षमितीतरज्ञानाभावानुसन्धानं [१]अनित्यज्ञानं विना सर्वथानुपपन्नम्। न चेयं न स्मृतिः, किन्त्वनुमितिरिति वाच्यम्। एकज्ञानस्य तदितरज्ञानाभावेन व्याप्त्यभावात्। तदज्ञानेऽपीतरज्ञानाभावज्ञानात् न चान्यल्लिङ्गमस्ति।

एवं स्वप्नसाक्षितयापि नित्यसंवित्सिद्धिः। न च स्वाप्नगजादिज्ञानं स्मृतिः प्रत्यक्षत्वानुभवात्, नापि जन्यप्रत्यक्षं चक्षुराद्युपरमात्। न मानसम्, मनसो बहिरस्वातन्त्र्यात्। न च स्मर्यमाणगजादेस्स्मर्यमाणदेश आरोपः। तथात्वेऽन्धस्य

---

[१] क - नित्यज्ञानं

स्मर्यमाणपुरोदेशे स्मर्यमाणरूपारोपस्येव सत्तानिश्चयरूपत्वस्यापरोक्षत्वस्य चानुपपत्तेः। अस्मन्मते त्वनावृतसाक्ष्यध्यासात् सर्वमुपपद्यत इति।

एवमहमस्वाप्समित्यादिसौषुप्तिकात्मादिपरामर्शादपि नित्यानुभवसिद्धिः। परामर्श-हेत्वनुभवस्य सुषुप्तान्वन्यस्यासंभवात्। यत्तु अयं न सौषुप्तिकाज्ञानपरामर्शः, किन्त्वज्ञानानुमानमिति। तत्र न तावदहं ज्ञानाभाववानवस्थाविशेषवत्वादित्यनुमानम्। अहमर्थमात्रपक्षीकारे जाग्रति तस्मिन् ज्ञानसत्वे अंशतो बाधात्। सुषुप्तिकालीनाहमर्थस्य पक्षत्वे सुषुप्तेः निखिलज्ञानाभावरूपायाः पूर्वमसिद्धत्वात्। साध्यञ्च यत्किञ्चित् ज्ञानाभावश्चेत्तदा न किञ्चिदवेदिषमित्यनुभवासंभवः। निखिलज्ञानाभावश्चेत् व्याप्ति-ग्रहायोगः। हेतुश्च यदि सुषुप्तिस्तदा साध्याविशेषः। निखिलज्ञानाभावरूपत्वात् सुषुप्तेः।

ननु जाग्रत्स्वप्नातिरिक्तकालत्वं तत् तन्न, निखिलज्ञानाभावज्ञानात् प्राक् तदतिरिक्तत्वस्य दुर्विज्ञानत्वात्। एतेन सामग्र्यभावेन ज्ञानाभावोऽनुमीयत इति प्रत्युक्तम्। तत्रापि पक्षस्य दुर्निरूपत्वात् सामग्र्यभावस्यापि कार्याभावोन्नेयत्वात्। इन्द्रियप्रसादेन तदुपरमानुमानात् सामग्र्यभावसिद्धिः। बाह्येन्द्रियोपरमेऽपि स्वप्ने विषयज्ञानतत्सामग्र्योः सत्वात् शोभनस्वप्नादपि मनःप्रसादस्यान्यथासिद्धेश्च। नापि तत्तुल्ययोगक्षेमात्मादौ स्मर्यमाणे सति अस्मर्यमाणत्वं ज्ञानाभावे लिङ्गं, विशेषणासिद्धेः। आत्मनि ज्ञानस्य स्मर्यमाणत्वाद्विशेष्यासिद्धिश्च। नापि सुषुप्तिकाले अस्मर्यमाणत्वं विवक्षितम्। निखिलज्ञानाभावात्मकसुषुप्तेः प्रागज्ञानात् पथि स्पृष्टतृणादौ व्यभिचाराच्चेति।

अत्रोच्यते धाराज्ञानं तावदुत्पत्त्याद्यवस्थायोगिन एव ज्ञानत्वानुभवविषयस्य स्वप्रकाशत्वादेवोपपद्यते। तेनैव तत्कालीनात्मग्रहोऽपि ज्ञानसामग्रीमात्रस्य ज्ञानात्मनोः ग्रहणसामग्रीत्वात् प्रत्यक्षसामग्रीमात्रस्य कालग्रहणहेतुत्वाच्च जानामीति प्रतीयमानस्य विषयत्वावश्यंभाव इति। तत्र किं विशेषणेऽपि तात्पर्यमुत विशेष्य एव। नाद्यः, प्रयोजनाभावात्। प्रतीयमानत्वस्यैव विषयताव्याप्त्या विशेषणवैयर्थ्यात्। न हि विशेष्यं विषयतां व्यभिचरति। अप्रयोजकत्वं विशिष्टेऽपि तुल्यम्। न द्वितीयः, स्वप्रकाशस्य ब्रह्मणो विषयत्वप्रसङ्गात्। प्रतीयमानत्वं ब्रह्मणो नास्तीत्येवेति चेत्तत्किम् प्रतीयमानं प्रतीत्याहितव्यवहारभाक्तमुत प्रतीतिविषयत्वमेव। आद्ये ब्रह्मणि तदस्त्येव। द्वितीये साध्याविशेषः। अत एव द्वादश नामान्यश्रौषमिति प्रतिसन्धानमपि निर्व्यूढम्। इष्टज्ञानसुखयोरपि कार्यकारणभावग्रहणमत एवोपपन्नम्। मन्मते सुखस्यापि ज्ञानविशेषत्वेन स्वप्रकाशत्वात्।

## ६. अवेद्यत्वभङ्गः

वस्तुतस्तु इष्टज्ञानमेव सुखम्। तदन्यकल्पने गौरवात्। अनुव्यवसायवादिनामपि न दोषः। न च धाराध्यानयोर्विच्छेदः। विजातीयप्रत्ययव्यवधानादिति वाच्यम्। सजातीयानधिकरणकालाव्यवधानादेव तदुपपत्तेः। तत्र चाद्यज्ञाने ज्ञानत्वनिर्विकल्पकं, ततस्तदनुव्यवसायः, ततो द्वितीयज्ञानं, तस्मादेवानुव्यवसायात् विशेषणज्ञानात्मकात् द्वितीयज्ञानानुव्यवसायः, ततस्तृतीयज्ञानमिति क्रमेण ज्ञानधारासंभवः। क्वचिच्चाभिन्न-विषयकज्ञानानुव्यवसायानन्तरोत्पन्नघटादिज्ञाने जाते आद्यज्ञानप्रभृत्येव ज्ञानधारोपपद्यते।

न च जिज्ञासितश्रीवेङ्कटाचलेशविग्रहानुभवसामग्रीप्राबल्यादनुव्यवसायसंभवः। तत्संभवे वा तत्प्राबल्यात् ज्ञानज्ञानधारानुपरमः बाह्यानुभवासंभवश्चेति वाच्यम्। जिज्ञासायास्तत्तद्घटितबाह्यसामग्र्याः तदघटितबाह्यसामग्रीतो बलवत्वापादकत्वेऽपि ततोऽपि स्वविषयीभूतज्ञानानुव्यवसायसामग्रीबलवत्वापादकत्वात्। महद्रमणीयबुभुत्सितात् भूतभयानकादिविषयानुभवस्मरणस्यानन्तरं दर्शनेन विषयरामणीयकादिके सति ज्ञानानुभवसामग्रीप्राबल्यस्य कल्पनात्। 'द्वादश नामान्यश्रौषम्' इत्यत्रापि नानुव्यवसायानुपपत्तिः प्रथमवर्णोत्पत्तिलक्षणापेक्षया स्वज्ञानेच्छाकृतिकरणव्यापारादि बहुक्षणव्यवधानेनैव द्वितीयक्षणोत्पत्तेः।

एतेन प्रयत्नानिष्पाद्यकीचकसुषिरसन्ततिसन्ततवाताभिघातक्रमोत्पादितशब्द-सन्तानानुभवधारानुसन्धानं न स्यादिति प्रत्युक्तम्। तच्छब्दसन्तानगोचरस्मृत्या तदनुभवानुमितेस्तत्स्मरणोपपत्तेश्च।

न च प्रणाडीकल्पने मानाभावः, अनुसन्धानस्यैव मानत्वात्। यदि च तत्कल्पनेऽनुपपत्तिः। तदा तच्छब्दज्ञानस्य स्वप्रकाशत्वं कल्प्येत। न च संविदाख्य-धर्मान्तरं, गौरवात्। इष्टज्ञानसुखयोरपि समूहालंबनसंभवात् नानुपपत्तिः। न च पौर्वापर्याग्रहः। इष्टस्वरूपमात्रस्य सुखं प्रति व्यभिचारात्। सुखानुभवकाले इष्ट-ज्ञानस्यैवानुभवाच्च। परिशेषादिष्टज्ञानस्यैव कारणत्वग्रहसंभवात्।

किञ्च इन्द्रियसन्निकर्षाद्यन्वयव्यतिरेकानुविधानदर्शनात् सुखकाले प्रतीत्यनुभवाच्च प्रतीतिकारणतया क्लृप्तस्य सन्निकर्षादेस्तद्व्यवधानेन सुखप्रयोजकत्वं कल्प्यते। यथा पुत्रस्ते जात इति वाक्योच्चारणानन्तरं मुखविकासानुमितस्य सुखस्य वाक्यान्वय-व्यतिरेकानुविधानदर्शनात्। अव्युत्पन्नस्य च तद्दर्शनाद्वाक्यार्थप्रतीतिद्वारा सुखप्रयोजकत्वं गृह्यते।

किञ्च फलबलाद्घटादिगोचरज्ञानस्याहंत्वाप्रकारकस्यापि तत्प्रकारकसंस्कार-जनकत्वस्य त्वयाङ्गीकारादात्मस्वात्माविषयस्यापि ज्ञानस्य तत्संस्कारजनकत्वमस्तु। किञ्च तैलधारानुसन्धानार्थं नेयं संवित्, किन्तु संविद्धारानुसन्धानार्थम्। ततश्च सा यथा धारान्नोत्सादयति तथा संवित्वमपि प्रत्युत यथा धारांशं साधयति तथा संवित्त्वमपि।

ननु धारानुसन्धानार्थं संविदि सिद्धायां तयैव सर्वव्यवहारोपपत्तौ बहूनां संवित्त्वकल्पने गौरवम्। अत एव ज्ञानत्वानुभवो ज्ञानाभेदाध्यासनिबन्धन इति चेन्न। अनन्तानां विषयसंबन्धानां कादाचित्कप्रकाशार्थमनन्तानामावरणानां तद्धेत्वज्ञानादीनां च कल्पनापेक्षया विषयसंबन्धितया संप्रतिपन्नेषूपक्लृप्यज्ञानत्वस्य कल्पने लाघवात्। बह्वीनां ज्ञानत्वप्रतीतीनामप्रामाण्यकल्पने गौरवाच्च। किञ्च उभयोरन्यतरस्मिन्नन्यतरक्लृप्तनाप्रसङ्गे अनुभवानुरोधेन क्लृपनं न्यायम्।

किञ्च क्लृप्तस्य कल्प्यसंविदनपेक्षस्वविषयव्यवहारहेतुत्वेनातिप्रसङ्गः। कल्प्यमानायाः क्लृप्तानपेक्षत्वे अतिप्रसङ्गः। तस्मात् क्लृप्तस्यैव व्यवहारहेतुत्वात् ज्ञानत्वमनिवार्यम्। यच्चोक्तमेकविषयकधारानन्तरं नेतोऽन्यत् जानामीति[१] परामर्शानुपपत्तिरिति। तन्न, प्रातर्गजाभावज्ञानवदुपपत्तेः। तद्यथानुपलब्धं तथेहापि अथानुमितिः तथेहापि। ननु साक्षिसिद्धेन गजानुभवाभावेन गजानुभवोऽनुमीयत इति चेत्, तथा ह्यननुभवमात्रस्य तृणादिष्वभावव्यभिचारादनुभवितुं योग्यस्याननुभवोऽर्थाभावे लिङ्गम्। तथा स्मर्तुं योग्यस्य स्मरणमननुभवे लिङ्गमित्युपपत्तेः।

किञ्च ज्ञानाभावस्य साक्षिवेद्यत्वे सौसुषुप्तिकपरामर्शाद्भावरूपज्ञानसिद्ध्युपवर्णन-विरोधः। किञ्च साक्षिणोऽनित्यत्वेन संस्कारानुत्पत्तेस्त्वन्मते कथमनुसन्धानम्। न च घटाकारवृत्त्यवच्छिन्नसाक्ष्येव यथा घटतद्वृत्तितदाश्रयाहमर्थात् अतिगोचरसंस्कारमाधत्ते तथा ज्ञानाभावेऽपीति वाच्यम्। तथा सति घटवृत्तेरेवान्यज्ञानाभावगोचरसंस्कारसंभवे साक्षिवैयर्थ्यात्।

किञ्च विषयविशेषावच्छिन्नप्रतियोगिविशिष्टतया ज्ञानाभावग्रहणे क्वाप्यननुभूत-द्वीपान्तरवर्तिवस्तुनः तत्तत्प्रातिस्विकरूपावच्छिन्नज्ञानाभावानुभवस्मरणव्यवहारप्रसङ्गः सार्वज्ञापत्तिश्च। अज्ञानावच्छेदकतया इदंग्रहणवत् तत्तज्ज्ञत्वाविरोधित्वात्।

---

[१] क - अद्राक्षमिति; घ - जानामीति

## ६. अवेद्यत्वभङ्गः

विषयविशेषानवच्छिन्नज्ञानाभावग्रहणे घटधारानन्तरमपूर्ववस्तुदर्शने सति एतावन्तं कालमिममर्थं नावेदिषमिति प्रतिसन्धानानुपपत्तिः।

किञ्च यत्र चिरं घटमनुभवन्नेवान्तरान्तरा किञ्चित्तृणाद्यनुभवति तत्र तत्संस्कार-विच्छेदानुदयाद्वा धारानन्तरं घटमेवान्वभूवं नान्यत्किमपीति प्रतिसन्धानं कथम्। साक्षिणोपपाद्यताम्, विषयाभावात्। तत्र चानुमानमेव शरणमिति सर्वत्रापि तथैव युक्तम्।

किञ्चायमन्यज्ञानाभावपरामर्शो न घटधाराकाले ज्ञानान्तराभावज्ञानं साधयति। किन्तु घटव्यतिरिक्तस्य ज्ञानान्तराभावस्य ज्ञानं बाधत एवेति वैपरीत्यम्। स्वाप्नानुभवानुरोधेनापि न नित्यसंवित्सिद्धिः। स्मर्यमाणदेशे स्मर्यमाणगजादेः मनसारोप-संभवात्। न चान्धस्य तादृशरूपज्ञानवत् सत्तानिश्चयत्वाभावप्रसङ्गः। तस्य बुद्धिपूर्वतया आहार्यत्वात्। अस्य च तथात्वात्।

वस्तुतस्तु [१]'**सन्ध्ये सृष्टिराह हि**' इति मीमांसितश्रुत्यनुरोधात् तदा सृष्टशरीरगतेन्द्रियजन्यमेव तादृशार्थप्रत्यक्षमिति न कश्चिद्दोषः। सुप्तोत्थितपरामर्शस्तु **सद्विद्याविजये** समर्थयिष्यते।

ननु घट स्फुरति घटं जानामीत्याश्रयभेदेन सकर्मकतयाकर्मकतया चोपलम्भात् ज्ञानातिरिक्तस्फुरणात्मकसंवित्सिद्धिरिति चेन्न। 'देवदत्तो मोदकमिच्छति' 'देवदत्ताय रोचते मोदक' इत्यत्रापीच्छारुच्योर्भेदप्रसङ्गाद्देवदत्तगताभिलाषे मोदकस्याभिलाषहेतुरसपरिमलादि गुणैर्हेतुत्वेन कतृत्वात् मोदको रोचत इति प्रयोगः। यथा स्फीतालोकमध्यवृत्तित्वादिना देवदत्तगतज्ञानहेतुत्वाद्देवदत्तस्य घटः प्रकाशत इति प्रयोग इति शब्दाभियुक्तैरुक्तत्वाच्च।

एवञ्च यत्संविदभेदसाधकान्यनुमानानीतराणि ज्ञानपदव्युत्पत्तिगोचरविषयत्वेन अधीतान्यतिरिक्तसंविद्विषयत्वे आश्रयासिद्धानि। अपि च ज्ञानातिरेकेन वृत्तौ मानाभावान्न वृत्तिविषयत्वं ब्रह्मणः।

तथा हि वृत्तावपि परस्परं निघ्नन्ति। केचिदाहुः - ब्रह्मैव हि जगदुपादानम्। अतस्तदेव सर्वतादात्म्यात् सर्वमवभासयति। अत एव तस्य सार्वज्ञम्। जीवचैतन्यं त्वविद्योपाधिकतया सर्वगतत्वेऽप्यनुपादानत्वेनासङ्गित्वात् अन्येनासंसृष्टमपि। यथा सर्वगतापि गोत्वादिजातिस्सास्नादिमद्व्यक्तिभिरेव संसृज्यते तथा स्वभावादन्तःकरणेन संसृज्यते। यदान्तःकरणपरिणामरूपा वृत्तिरिन्द्रियद्वारा निर्गत्य विषयपर्यन्तं झटिति

---

[१] ब्र.सू.३.२.१.

दीपप्रभावत् परिणमय्य विषयं व्याप्नोति तदा तामुपारुह्य विषयं गोचरयति। एवं चिदुपरागार्था वृत्तिरिति।

अन्ये तु - जीवस्सर्वगतोऽप्यविद्यावृतत्वात् स्वयमप्रकाशतया विषयाननवभासयन् विषये वृत्त्युपरागादावरणतिरोधानेन तत्रैवाभिव्यक्तः। तमेव विषयं प्रकाशयति एवं आवरणाभिभवार्थावृत्तिरिति।

अपरे - त्वन्तःकरणोपाधितया जीवः परिच्छिन्नः। अतस्संसर्गाभावान्न घटादिकमवभासयति। वृत्तिद्वारा तत्संसृष्टविषयावच्छिन्नब्रह्मचैतन्याभेदाभिव्यक्तौ तं विषयं प्रकाशयति। एवं विषयचैतन्याभेदाभिव्यक्त्यर्था वृत्तिरिति।

अत्र प्रथमपक्षे किमिदमसङ्गित्वम्। न तावदनधिष्ठानत्वं वृत्त्यापि तदसंपादनेन वृत्तिवैयर्थ्यात्। नापि कथञ्चिदपि संबन्धाभावः स्वावच्छेदाविद्याद्वारकस्य स्वाभिन्नबिम्ब-चैतन्यद्वारकस्य च संबन्धस्यावर्जनीयत्वात्। नापि संयोगाभावः, तत्र मानाभावात्। '**असङ्गो ह्ययं पुरुष**' इत्यस्य हेयसंबन्धस्य कर्मकृतत्वेन स्वाभाविकत्वनिषेधे तात्पर्यात्। अन्यथा तदपवादकाभावेनान्तःकरणेनापि संयोगाभावप्रसङ्गात्।

न चान्तःकरणसंबन्धार्थमेव तत्कल्पना परस्पराध्यासेन तादात्म्यसंबन्धसिद्धेः। अन्तःकरणेन संबन्धस्तादात्म्यमेव, न तु संयोगः। अतो नासङ्गित्वश्रुतिविरोध इति चेन्न, एवं सति वृत्त्या तत्संपादनेऽपि श्रुतिविरोधप्रसङ्गात्। किञ्च यद्यसङ्गित्वं स्वाभाविकं तदा वृत्त्यापि तत्संपादनासंभवः। यदि न व्यापकत्वादेव संयोगो दुर्निवारः वृत्त्यधीनो विषयोपरागो दुर्वचः। अत्रापि कलहः।

केचिदाहुः - विषयविषयिभावसंबन्ध इति। अन्ये तु विषयसन्निहितजीवचैतन्य-तादात्म्यापन्नायाः वृत्तिविषयसंयोगे जीवचैतन्यस्यापि तद्वारकः परंपरासंबन्धो लभ्यत इति। स एव चिदुपराग इति।

अपरे तु - साक्षादपरोक्षसंसर्गिण एव सुखादेरापरोक्ष्यदर्शनादपरोक्षविषये साक्षात् संसर्ग एष्टव्यः। तस्माद्वृत्तेर्विषयसंसर्गे वृत्तिरूपावच्छेदकलाभात्तदवच्छेदेन तदनुपादानस्य जीवस्यापि संयोगजसंयोगस्संभवति। कारणाकारणसंयोगात् कार्याकार्यसंयोगवत् कार्याकार्यसंयोगात् कारणाकारणसंयोगस्यापि तुल्यन्यायेनाभ्युपगन्तुं युक्तत्वादिति।

परे तु - अन्तःकरणोपहितस्य विषयावभासकचैतन्यस्य विषयतादात्म्यापन्नब्रह्म-चैतन्याभेदाभिव्यक्तिद्वारा विषयतादात्म्यसंपादनमेव विषयोपराग इति।

## ६. अवेद्यत्वभङ्गः

अत्र विषयविषयिभावस्तावदनुपपन्नः। वृत्तेर्विषयविषयीभावनियामकत्वे तस्या अनिर्गताया एव तत्संभवात्तदर्थं वृत्तिनिर्गमाभ्युपगमोऽनुपपन्नः। सत्यम्, विषयविषयिभावेन वृत्तिनिर्गमापेक्षा परोक्षवत्। परन्तु साक्षात्वार्थं विनिर्गता वृत्तिर्हि साक्षाद्विषयेण संयुज्यत इति चेन्न। तथा सति रूपादेस्संयोगाभावेन साक्षात्त्वाभावप्रसङ्गात् वृत्तेरापरोक्ष्याभाव-प्रसङ्गाच्च। वृत्तिसंयुक्ताश्रयत्वादुभयत्रापरोक्ष्योपपादने शब्दादिना धर्मज्ञाने तस्यापरोक्ष्य-प्रसङ्गः। तस्मात् वृत्तावेवापरोक्ष्यं कारणविशेषाद्वाच्यम्।

किञ्च किञ्चिज्ज्ञ इत्यत्र यस्संबन्धो ज्ञानार्थयोः प्रतीयते सर्वज्ञ इत्यत्रापि स एव वाच्यः। अन्यथा किञ्चिज्ज्ञस्यापि व्यापकत्वोक्तेर्व्याप्यव्यापकभावसंबन्धेन स्वावच्छेदका-विद्याद्वारकसंबन्धेन वा सर्वज्ञत्वप्रसङ्गात्। एतेन द्वितीयतृतीयपक्षौ निरस्तौ। किञ्च सूर्यनक्षत्रपथपर्यन्तव्यापिन्यावृत्तेरान्तरालिकसर्वपदार्थसंयोगावश्यंभावाद्युगपत् सर्वप्रकाश-प्रसङ्गः।

ननु जीवचैतन्यस्यान्तरालिकैस्सर्वैः पदार्थैः परम्परासंबन्धे संयोगजसंयोगे सत्यपि तदाकारवृत्तिघटितपरम्परासंबन्धस्य तद्वृत्तिसंयोगजसंयोगस्य वा तद्व्यहारकारणत्वान्नाति-प्रसङ्ग इति चेदेवमपि तदाकारवृत्त्यापि चिदुपरागसिद्धेः। तत्र च विषयावभासाभावात् निरुक्तचिदुपरागाङ्गीकाराच्च न चिदुपरागप्रयुक्तो विषयावभासः। किन्तु तदाकारवृत्ति-प्रयुक्त इति वृत्तिनिर्गमो व्यर्थः असङ्गित्वकथनञ्च व्यर्थम्।

किञ्च संप्रतिपन्नचक्षुस्सन्निकर्षघटितयोग्यपरम्परासंबन्धस्य तत्संयोगजसंयोगस्य वा व्यवहारहेतुत्वस्य कल्पयितुमुचितत्वात् वृत्तिकल्पनं व्यर्थम्। अतिप्रसङ्गस्तु तवापि तुल्यः कारणाकारणसंयोगात् कार्याकार्यसंयोगेनातिप्रसङ्गः। कार्याकार्यसंयोगात् कारणाकारण-संयोगेऽतिप्रसङ्गः। अग्रे तु कपिसंयोगात् मूलेऽपि तत्प्रसङ्गात्।

किञ्च किञ्चिद्द्रव्यसंयुक्ततन्तुभिः पट आरभ्येत। द्रव्ये पटे च क्रियाया विरहेऽपि तयोस्संयोगः प्रतीतिसिद्ध इति तत्र कारणाकारणसंयोगः असमवायिकारणतया कल्प्यते। इह न तादृशं कल्पकमस्ति। न च विषयप्रकाशार्थमेव तथा कल्पना। सुखादौ दृष्टतादात्म्यस्येव साक्षात्त्वस्याप्यप्रयोजकत्वात्।

नापि चतुर्थः - बिम्बप्रतिबिम्बयोः स्वाभाविकाभेदस्य वृत्तिनिरपेक्षत्वात् तदभिव्यक्तिर्वृत्तिसापेक्षेति चेन्न। तस्य तदाकारवृत्तिभास्यत्वेन घटाकारवृत्तिभास्यत्वासिद्धेः। तथापि प्रकाशप्रयोजकस्य तादात्म्यस्य वृत्तिसाध्यत्वासिद्धेश्च। उपाधिकृतबिम्बप्रतिबिम्ब-भेदश्च न वृत्तिनिवर्त्यः, सद्यो मुक्तिप्रसङ्गात्। आमोक्षस्थायित्वात् जीवभावस्यौपाधिक-

भेदे सत्यपि वृत्तिव्याप्तिमात्रादभेदाङ्गीकारे प्रमात्रोः परस्पराभेदः प्रसज्यते। देवदत्तेन घटे चक्षुषा गृह्यमाणे यज्ञदत्तेन त्वचा स्पर्शे गृह्यमाणे प्रमातृचैतन्यद्वयस्याप्यभेदापत्या देवदत्तस्यापि स्पर्शप्रकाशप्रसङ्गः घटाद्यवच्छिन्नचैतन्यस्यैव स्पर्शाद्यवभासकत्वात् प्रमात्रन्तरमनपेक्ष्यापि स्पर्शावभासो वर्जनीयः, परोक्षार्थानवभासप्रसङ्गः।

नन्वपरोक्ष एवोपरागापेक्षा। परोक्षे तु तद्विषयवृत्तिरेव व्यवहारकारणमिति चेत् हन्त, एवं सर्वत्र वृत्तेरेव व्यवहारकारणत्वापत्या विषयोपरागः प्रत्यक्षेऽपि न वाच्यः। आपरोक्ष्यञ्च सामग्रीवैचित्र्यादेवोपपद्यते। तस्मान्न कथञ्चिदपि चिदुपरागार्थता वृत्तेरिति। आवरणाभिभवार्था वृत्तिरिति द्वितीयपक्षोऽप्यनुपपन्नः।

अत्रापि विवदन्ते - केचिदाहुः चैतन्यमात्रावारकस्याज्ञानस्य विषयावच्छिन्नप्रदेशे खद्योतादिप्रकाशेन महान्धकारस्येव ज्ञानेनैकदेशे नाशोऽभिभवति। अन्ये तु - कटवत् संवेष्टनमिति। अपरे तु - भीरुभटवदपसरणमिति। अपरे तु - अज्ञानस्यैकदेशनाशे उपादानाभावात् पुनस्तत्र कन्दलनायोगेन सकृदवगते समयान्तरे आवरणाभावप्रसङ्गात्। निष्क्रियस्यापसरणसंवेष्टनयोरभावादस्पर्शतया नोदनाभिघातयोरभावाच्च न यथोक्त-रूपोऽभिभवस्संभवति। अतश्चैतन्यमात्रावारकस्याप्यज्ञानस्य तत्तदाकारवृत्तिसंसृष्टावच्छिन्न विषयावच्छिन्नचैतन्यानावारकत्वस्वाभाव्यमेवाभिभवतीति। तत्रादौ त्रयः पक्षाः परैरेव निरस्ताः।

किञ्च देवदत्तस्य ज्ञानेन घटाद्यवच्छेदेनाज्ञानच्छिद्रे यज्ञदत्तस्यापि घटप्रकाश-प्रसङ्गः। न च तत्प्रमातृवृत्तिकृतच्छिद्रापेक्षानियमः। देवदत्तीय दीपेन तमोनिवृत्तावपि यज्ञदत्तस्य विषयोपलंभदर्शनात्। किञ्च देवदत्तेन ज्ञायमानदशायामेव यज्ञदत्तस्येन्द्रिय-संप्रयोगे सति तस्य प्रकाशो न स्यात्। छिद्रे पुनश्छिद्रकरणसंभवात्।

चतुर्थेऽपि पक्षे वृत्तिसंसृष्टविषयावच्छिन्नचैतन्यानावारकत्वस्वाभाव्यस्य [१]अविद्या-स्वरूपानुबन्धित्वान्न तस्य वृत्त्यधीनत्वमिति नावरणाभिभवार्थता वृत्तेः। अविद्याकृतमावरणं वृत्त्या निवर्तत इति विवक्षितमिति चेत् देवदत्तघटवृत्त्या घटावच्छिन्नचैतन्यावरणे निवृत्ते यज्ञदत्तस्यापि घटप्रकाशप्रसङ्गः। प्रतिप्रमातृविषयभेदं आवरणभेदाङ्गीकारेऽपि सकृत्प्रतीतस्य सर्वदा प्रकाशप्रसङ्गः। पुनरावरणोत्पत्तिश्च न संभवति। आवरणत्वेन

---

[१] क - अविद्या; घ - विद्या

## ६. अवेद्यत्वभङ्गः

अभिमतायाः नास्ति न प्रकाशत इति [1]व्यवहारयोग्यता वा नाशोत्पत्त्योरसंभवस्य **सद्विद्याविजये** वक्ष्यमाणत्वात्।

किञ्चाज्ञानस्य तदाकारवृत्तिसंसृष्टविषयचैतन्यानावारकत्वस्वभावत्वे नाडीहृदय-धर्मादिगोचरपरोक्षवृत्तौ सत्यां तत्रावरणाभावप्रसङ्गः। इन्द्रियजन्यत्वेन तदाकारवृत्तेः विशेषणे इन्द्रियजन्यवृत्तिविषयचैतन्यतावारकत्वस्वाभाव्यस्य च सुवचत्वाद्वृत्तेः विषयसंसृष्टत्वमप्रयोजकं तदर्थञ्च निर्गमाभ्युगमो निर्मूलः।

किञ्च ज्ञानानामावरणनिवर्त्तकत्वे [2]ब्रह्मज्ञानादपि आवरणनिवृत्तिरेव [3]स्यादिति मुक्तावप्यज्ञाननिवृत्तिर्न स्यात् घटज्ञानेन घटाज्ञाननिवृत्तमित्यनुभवविरोधश्च।

नन्वस्तु तर्ह्यज्ञानस्यैव सर्वत्र निवृत्तिः न च सद्योमुक्तिप्रसङ्गः। मूलाज्ञानस्यैकत्वेप्यवस्थाज्ञानानामनेकत्वात्। यावन्ति ज्ञानानि तावन्त्यज्ञानानि इत्यभ्युपगमात्। एवञ्च सर्वगतोऽपि जीवोऽविद्यावृतत्वात् स्वयमभासमानतया पूर्वं विषयाप्रकाशकोऽपि विषयविशेषे वृत्त्युपरागादावारकाज्ञाननाशेन तत्रैवाभिव्यक्तस्तमेव विषयं प्रकाशयतीति व्यवस्थेति चेन्न। घटाद्यज्ञानन्निवृत्तमित्यनुभवादज्ञाननिवर्तकत्वमुच्यते। तच्चाज्ञानं घटं न जानामीत्यनुभवसिद्धं घटतादात्म्यापन्नतदधिष्ठानगोचरं जडस्य स्वयमज्ञानविषयत्वादधिष्ठानञ्च ब्रह्मैवेति जीवचैतन्यस्य नित्यं [4]आवृतत्वात् सर्वप्रकाशप्रसङ्गो दुर्वारः। अत्र सर्वस्मिन्नपि[5] पक्षे वृत्तेर्निर्गमः किमर्थः अविद्याया विषयगतत्वात् तत्र गत्वैव निवर्तनीयमिति[6] चेन्न। समानदेशत्वेन निवर्तकत्वे मुद्गरादिनापि निवृत्तिप्रसङ्गात्। यदीया वृत्तिर्यदाकारा सा तस्य तद्गोचराज्ञाननिवर्तिकेति हि वाच्यम्। एकाविद्यापक्षेऽप्येकदेशस्य कञ्चित्प्रत्यावरकत्वमङ्गीकृत्योक्तनियमो वाच्यः। ततश्च निर्गमो व्यर्थः। इह छित्वैव[7] निवर्तकत्वसंभवात्। न हीदमभिघातादिदृष्टमुखेन निवर्तकम्। किञ्चावरणस्य विषयगतत्वे मानाभावाच्च न वृत्तिनिर्गमः कल्प्यः।।

---

[1] क - व्यवहारयोग्यतायाः; घ - व्यवहारयोग्यता वा

[2] क - ब्रह्मज्ञानादपि; घ - ब्रह्मज्ञानात्

[3] क - न स्यादिति; घ - स्यादिति

[4] क - अनावृतत्वात्; घ - आवृतत्वात्

[5] क - पूर्वस्मिन्नपि; घ - सर्वस्मिन्नपि

[6] क - निवर्तनीया सेति; घ - निवर्तनीयमिति

[7] क - स्थित्वैव; घ - छित्वैव

न चावरणत्वादेव तमोवद्विषयनिष्ठता। तमस आवरणत्वासिद्धेः। लोके स्वयं योगेन[१] इन्द्रियसन्निकर्षप्रतिबन्धकं ह्यावरणमुच्यते। न च तमस्तादृशं लोकसिद्धमावरणमपि किञ्चिन्मुखगतम्। यथा पक्ष्म किञ्चिद्गोलगतं यथा पटलादि किञ्चिच्च विषयगतं यथावकुण्ठनपटादि किञ्चिच्चान्तरालगतं यथा कुड्यादि। अस्य च पारिभाषिकावरणस्य देशविशेषनियतिर्न न्यायतस्संभवति। वृत्तिसमानदेशत्वं त्वहमज्ञ इति प्रतीत्यनुग्रहाद्युज्यते। तस्मादिहत्य एवाविद्यैकदेशो विषयमावृणोतीति न वृत्तिर्निर्गमापेक्षा।

न च प्रमातृगताविद्यैकदेशस्यावारकत्वे घटवृत्त्यां तन्निवृत्तौ कृत्स्नभानप्रसङ्गात् तद्विषयावच्छेदेन [२]छिद्रीकरणम् एवावस्थेयमिति वाच्यम्। तत्राप्यतिप्रसङ्गस्य देवदत्तवृत्त्या छिद्रे यज्ञदत्तस्यापि प्रकाशप्रसङ्ग इति प्रागेवाभिधानात्।

चतुर्थपक्षे नानाविद्यापक्षे च न शङ्कालेशोऽपि तस्मादविद्यानिवृत्त्यर्थन्न वृत्तिनिर्गमः कल्प्यः। नाप्यविद्यानिवर्त्तकता वृत्तेर्युक्ता। जडत्वेऽप्यज्ञाननिवर्तकत्वे इन्द्रियसन्निकर्षस्यैव निवर्तकत्वप्रसङ्गाद्वृत्तिरपि न सिद्ध्येत्। अन्तःकरणावच्छिन्नो जीवः अभेदाभिव्यक्त्यर्थावृत्तिरिति तृतीयपक्षोऽप्यनुपपन्नः। अत्रापि विवदन्ते।

केचिदाहुः - कुल्याद्वारा तटाककेदारसलिलयोरिव विषयान्तःकरणावच्छिन्न-चैतन्ययोर्वृत्तिद्वारा एकीभावो भेदाभिवृत्तिरिति।

अन्ये तु - विषयावच्छिन्नं ब्रह्मचैतन्यं विषयसंसृष्टाया वृत्तेरग्रभागे विषयप्रकाशकं [३]प्रतिबिम्बमिव मर्षयतीति तस्य प्रतिबिम्बस्य जीवचैतन्येनैकीभावो भेदाभिव्यक्तिः। एवं चान्तःकरणवृत्तिविषयावच्छिन्नचैतन्यानां प्रमातृप्रमाप्रमेयभावेनासांकर्यमप्युपपद्यते। न च वृत्त्युपहितचैतन्यस्य विषयप्रमात्वे तस्य विषयाधिष्ठानचैतन्यस्यैव विषयेणाध्यात्मिक-संबन्धाभावाद्विषयापरोक्ष्ये आध्यात्मिकसंबन्धस्तन्त्रं न स्यादिति वाच्यम्। विषयाधिष्ठान-चैतन्यस्यैव विषयेणावच्छिन्नस्य वृत्तौ प्रतिबिम्बतया तदभेदेन तत्संबन्धस्यैव तत्संबन्धत्वादिति।

---

[१] क - स्वयं संयोगिन; घ - स्वसंयोगेन

[२] क - छिद्रकारणम्; घ - छिद्रीकरणम्

[३] क - प्रतिबिम्बयतीति; घ - प्रतिबिम्बमिव मर्षयतीति

## ६. अवेद्यत्वभङ्गः

अपरे तु - बिम्बभूतविषयाधिष्ठानचैतन्यमेव साक्षात् [१]आध्यासिकसंबन्धलाभात् विषयप्रकाशकमिति तस्यैव बिम्बत्वविशिष्टरूपेण भेदसद्भावेऽपि तदुपलक्षित-चैतन्यात्मनैकीभावो भेदाभिव्यक्तिः। एवञ्च अन्तःकरणावच्छेदात् विषयचैतन्यस्य तदनवच्छेदकृतभेदनिवृत्तिरवभासप्रयोजिका। न चैवं सति जीवब्रह्मसाङ्कर्यम्। न वा ब्रह्मणः सर्वज्ञत्वविरोधः। बिम्बात्मना तस्य यथापूर्वमवस्थानादिति।

तत्र प्रथमः पक्षः औपाधिकजीववादे उत प्रतिबिम्बजीववादे। आद्ये जीवब्रह्मणोः वृत्तिद्वारा भेदे जीवे ब्रह्मगतघटतादात्म्यवद्ब्रह्मणि जीवगतदुःखित्वं प्रसजेत्। तदानीं घटचैतन्यस्य जीवोपाधिव्याप्त्या जीवाभावेन ब्रह्मत्वासिद्धेः। न ब्रह्मणो दुःखित्वमिति चेत्तर्हि तदानीं ब्रह्मणः सार्वज्ञ्यं न स्यात्।

नापि द्वितीयः, भेदकोपाधौ सति वृत्तिमात्रात् बिम्बप्रतिबिम्बयोरभेदायोगात् स्वाभाविकाभेदस्य च वृत्त्यनपेक्षत्वात्। यदि तूपाधिमपि विनाशयेत् तदा परं स्यात् आनन्दः। किन्तु तदा प्रतिबिम्बजीवस्यापि नाशात् न तं प्रति प्रकाश उपपद्यते। द्वितीये अन्तःकरणवृत्तिरूपोपाधिभेदात् प्रतिबिम्बयोः नैक्यसंभवः। बिम्बभेदाच्च चैतन्यस्वरूप-मात्रस्यान्तःकरणे प्रतिबिम्बत्वात् वृत्तौ च घटावच्छिन्नस्य प्रतिबिम्बात् कालभेदाच्च। जीवस्यानादित्वात् वृत्तितत्प्रतिबिम्बयोरद्यतनत्वात्।

किञ्च विषयावच्छिन्नप्रतिबिम्ब इति किं विषयापादितभेदवच्चैतन्यं विवक्षितम्। किं वा विषयविशिष्टमुत विषयोपलक्षितमधिष्ठानस्वरूपम्।

आद्ये विशिष्टज्ञाने समूहालम्बने च विषयभेदेन तदवच्छिन्नचैतन्यानां भिन्नतया वृत्तौ तत्प्रतिबिम्बा भिन्नाः स्युः। ततश्च न तैर्जीवात् प्रतिबिम्बस्य एकस्यैक्यसंभवः।

द्वितीये विषयप्रतिबिम्बाभ्युपगमो व्यर्थः। प्रकाशकाधिष्ठानचैतन्याभेदे तस्याप्रयोजकत्वात्। तदीयवृत्तिप्रतिबिम्बितत्वमेव प्रकाशप्रकाशप्रयोजकं इति चेन्न। तदा वृत्तेरभेदाभिव्यक्त्यर्थतोक्तिविरोधः।

तृतीये घटज्ञानदशायां सर्वभानप्रसङ्गः। किञ्चान्तःकरणवृत्तिप्रतिबिम्बयोरैक्येपि बिम्बभूतप्रकाशकाधिष्ठानचैतन्यस्य भिन्नत्वान्न प्रकाशकचैतन्यार्थता[२] वृत्तेः। वृत्त्यग्रभाग-

---

[१] क - घ - आध्यात्मिक

[२] क - चैतन्याभेदार्थता; घ - चैतन्यार्थता

वृत्तिप्रतिबिम्बतद्बिम्बयोः वास्तवाभेदस्त्वप्रयोजकः। अन्यथान्तःकरणप्रतिबिम्बस्य तत् बिम्बाभेदात् घटादिप्रकाशप्रसङ्गात् घटाद्यवच्छिन्नचैतन्यस्य तद्बिम्बान्तर्भावात्।

तृतीयेऽपि पक्षे अन्तःकरणानवच्छेदकृतभेदनिवृत्तेरवभासप्रयोजकत्वे घटप्रकाश-दशायां स्पर्शस्यापि प्रकाशप्रसङ्गः। तदाकारवृत्तिकृतभेदनिवृत्तिरवभासप्रयोजिकेति चेत्तथा सति आकाशस्यालोकाकारवृत्त्यभिव्यक्ति[१]चैतन्याभावभास्यत्वाङ्गीकारविरोधः। किञ्चैवं घटप्रकाशदशायां स्पर्शस्याकाशार्थमावरणन्न कल्प्येत, उक्तावभासप्रयोजकाभावादेवानव-भाससिद्धेः।

नन्वन्तःकरणावच्छिन्नचैतन्याभेद एवावभासप्रयोजकः, न तु तदाकारस्य तत्रान्तर्भावः। एवञ्चावभासप्रयोजके सत्यप्यननवभासार्थं स्पर्शस्यावरणं कल्प्यत इति चेत्तर्ह्यावृतचैतन्यसंबन्धात्[२] घटोऽपि न प्रकाशेत।

ननु घटावच्छिन्नचैतन्यमनावृतं स्पर्शावच्छिन्नचैतन्यमावृतं इति चेन्न, चैतन्यभेदासिद्धेः। तत्सत्त्वे हि घटाकारवृत्त्या तदवच्छिन्नचैतन्यस्यैव भेदनिवर्तनसंभवात् स्पर्शावच्छिन्नचैतन्यस्य भेदादेव स्पर्शाप्रकाशोपपत्तौ पुनरावरणकल्पनवैयर्थ्यम्। न च स्पर्शावच्छिन्नमिति विशिष्टस्यावृतत्वं [३]विवक्षितुं शक्यम्। जडस्यावरणविषयत्वासिद्धेः।

ननु घटाधिष्ठानचैतन्य एव घटावच्छिन्नं किञ्चिदावरणं किञ्चिच्च स्पर्शावच्छिन्नं घटाकारवृत्त्या घटावच्छिन्नं निवृत्तं स्पर्शाकारवृत्त्यभावात् तदवच्छिन्नावरणमनिवृत्तम्। अविद्यमानतदवच्छिन्नावरणकचैतन्याभेद एव च तत्प्रकाशः। अतो न स्पर्शप्रकाश इति चेत्, अनतिरिक्तवृत्तित्वादेरवच्छेद्यद्वयं प्रत्यवच्छेदकद्वयस्याविशेषादवच्छेदनियमासिद्धेः।

ननु तन्निरूपकत्वं तदवच्छेदकत्वम्। घटावच्छिन्नचैतन्यं स्पर्शं प्रत्यावृतं घटं प्रत्यनावृतमिति भवतु तयोरावरणनिरूपकत्वम्। एवञ्च तन्निरूपितावरणनिवृत्तौ तस्य प्रकाश इति चेत् किञ्च तं प्रत्यावरणं प्रकाशासंबन्धस्य साध्यत्वात् नास्तीति व्यवहारहेतुत्वं चेदस्तु तर्हि प्रकाशे सत्यप्यविद्यामाहात्म्यान्नास्तीति व्यवहारः। चोरभीत्या द्रविणसद्भावं ज्ञात्वापि नास्तीति व्यवहारवत् स्पर्शप्रकाशस्य सत्वात्तद्व्यवहारोऽपि स्यात्। तदपि प्रतिबध्यत इति चेदस्तु पूर्वन्यायेनैवास्तीति व्यवहारभावोऽपि मूकस्यैव

[१] क - व्यक्त; घ - व्यक्ति

[२] क - चैतन्यासंबन्धात्; घ - चैतन्यसंबन्धात्

[३] क - विवर्तितुम्; घ - विवक्षितुम्

### ६. अवेद्यत्वभङ्गः

स्पर्शप्रकाशो वर्जनीयः। घटं पश्यतो मूकस्य घटमस्पृष्टवतो घटस्पर्शप्रकाशयोः अविशेषापत्तिः [१]विप्रलम्भनार्थं घटस्पर्शाभावेऽपि घटं चक्षुषा पश्यन् स्पर्शो मया साक्षात्कृत इति यो वदति तस्य विप्रलम्भकत्वाभावप्रसङ्गः। तत्रैव व्यभिचारात् प्रतिबन्धकत्वाभावश्च सिद्धः।

ननु स्वज्ञाते विपरीताकारवृत्त्युत्पादनेच्छा हि विप्रलम्भः। स कथं न स्यादिति चेत् किं वस्तुतः स्वाज्ञातविपरीताकारो विवक्षित उत स्वज्ञाततया ज्ञातविपरीताकारः। नाद्यः, स्वस्य स्पर्शसाक्षात्कारज्ञानसत्वात्। घटसाक्षात्कार एव हि घटसाक्षात्कार-ज्ञानमनुव्यवसायानङ्गीकारात्। एवं स्पर्शसाक्षात्कार एव स्पर्शसाक्षात्कारज्ञानमिति। अत एव न द्वितीयः। घटज्ञानमेव हि घटज्ञानस्य ज्ञातताज्ञानमपि। किञ्च ज्ञातत्वाभावज्ञानात् खलु विप्रलम्भः। ज्ञातताज्ञाने जाग्रति कथं विप्रलम्भः।

किञ्चैवं सत्यावरणनिवृत्त्यर्था वृत्तिः इति तदर्थमेव निर्गमनम्। तस्मिन् सति नान्तरीयकोऽन्तःकरणावच्छिन्नचैतन्याभेदो विषयावच्छिन्नचैतन्यस्य नत्ववभासे प्रयोजक इति पर्यवस्येत्। किञ्च तदाकारवृत्त्यवच्छिन्नचैतन्यसंबन्ध एवावभासप्रयोजक इति कल्पयितुमुचितम्, न त्वन्तःकरणावच्छिन्नचैतन्यसंबन्धमात्रमवभासप्रयोजकं कल्पयित्वा तथाप्यप्रकाशार्थम् अज्ञानावरणं वृत्त्या[२] च तन्निवृत्तिं कल्पयितुं गौरवात्।।

## इति अवेद्यत्वभङ्गः।

[१] क - विप्रलम्भनार्थमेव; घ - विप्रलम्भनार्थम्

[२] क - अज्ञानावरणं वृत्त्या; घ - अज्ञानावरणवृत्त्या

## ७. निर्विशेषस्य जिज्ञास्यत्वभङ्गः

[1]'**तद्विज्ञानार्थम्**' [2]'**अक्षरं पुरुषं सत्यं ब्रह्म विद्याम्**' इति सविशेषस्यैव जिज्ञास्यत्वमुक्त्वा निर्विशेषस्य जिज्ञास्यत्वं निराकरोति। तथाहि न निर्विशेषस्य जिज्ञास्यत्वं संभवति। तस्य स्वप्रकाशतया नित्यबुद्धत्वात्। न जीवेन बुद्धं तदिति चेत् किं जीवो ब्रह्मणोऽन्यः। अधिरोह तत्वविदां गोष्ठीम्। न चौपाधिकभेदेन वा प्रतिबिम्बभावेन वा ब्रह्मणो भेदः [3]सप्रकारत्वं वा नश्यति। स्वरूपनाशप्रसङ्गात् निर्विशेषस्वरूपमज्ञानावृतमिति चेदस्त्वावरणशब्दार्थो यः कश्चन मां जानामि ज्ञानं जानामीति प्रकाशे विद्यमाने कथमावरणम्। विशिष्टगोचर एवायं प्रकाशो न तु विशेष्यगोचर इत्युक्तिस्तु विशिष्टपदव्युत्पत्तिविधुराणां गोष्ठीष्वेव शोभते। रूपी घट इति ज्ञानमपि हि घटगोचरमेव।

विशिष्टस्वरूपविशेषो निर्विशेषस्वरूपविशेष इत्येवं स्वरूपविशेषास्सन्ति। ततश्च विशिष्टबुद्धौ विशिष्टस्वरूपविशेष एव भासते न निर्विशेषस्वरूपविशेष इति चेत् तत्र किं स्वरूपप्रकाशो निर्विशेषस्वरूपप्रकाश उत निर्विशेष इति प्रकाशः। आद्ये विशिष्टज्ञानस्य [4]निर्विशेषगोचरत्वाभावः। किं स्वरूपयोः स्वाभाविकभेदात् किं वौपाधिकभेदादुत कल्पितभेदात्। नाद्यः, असिद्धेः अङ्गीकाराच्च। द्वितीयेऽपि किं स भेदो विशेषणे पर्यवसित उत विशेष्ये। नाद्यः, अप्रयोजकत्वात्। न द्वितीयः, विशेषणयोः घटाकाश-मठाकाशादौ परस्परावच्छिन्नभेदप्रयोजकत्वदर्शनेन विशेषणस्य स्वरूपमात्रप्रतियोगिकभेद-प्रयोजकत्वासिद्धेः। न तृतीयः, वह्नौ गुञ्जारोपवदप्रयोजकत्वात्। न द्वितीयः, विशेषाभाव विशिष्टबुद्धेरपि विशिष्टगोचरत्वावश्यंभावात् [5]विशेषस्वरूपस्य स्वप्रकाशत्वाभाव-

---

[1] परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्।
नास्त्यकृतः कृतेन **तद्विज्ञानार्थं** स गुरुमेवाभिगच्छेत्।। (मुण्डक.१.२.१२)

[2] तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय।
**येनाक्षरं पुरुषं वेद सत्यं** प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्।। (मुण्डक.१.२.१३)

[3] क - स्वप्रकाशत्वम्; घ - सप्रकारत्वम्

[4] क - निर्विशेषस्वरूप; घ - निर्विशेष

[5] क - निर्विशेष; घ - विशेष

प्रसङ्गाच्च तस्य तद्रूपत्वासिद्धेः। तथा च निर्विशेषनित्यसत्यज्ञानानन्दानन्तस्वरूप-विशेषाणामस्वप्रकाशत्वात् स्वरूपविशेषान्तराभावात् तत्सत्वे तत्रापि तादृशज्ञानस्यैव वाच्यतया स्वरूपमात्रप्रकाश्यत्वस्य कुत्रापि स्वरूपविशेषेऽभावेन स्वप्रकाशत्वस्यैव लोपात् प्रकाशान्तरानङ्कीकाराच्च सर्वशून्यवादितया[१] निष्कञ्चुकत्वप्रसङ्गः।

किञ्च स्वरूपप्रकाशोऽस्ति न वा। द्वितीये कथं घटादेः स्फुरणम्। स्फुरत्स्वरूपाभेदाद्धि घटादेस्स्फुरणम्। आद्ये कथं जिज्ञासा। अथ न वयं प्रकाशाभावं जिज्ञासाकारणं ब्रूमः। किं तर्हि भावरूपाज्ञानमिति चेत्तत्किं प्रकाशविरोधि उत न। द्वितीयेन तदज्ञानं तत्कल्पने प्रयोजनाभावश्च। नाद्यः, असिद्धेः। शाब्दापरोक्षवृत्त्या तदवच्छिन्नचैतन्येन वा विरुध्यत इति चेत्तर्हि ज्ञाने विद्यमानेऽपि तदविरोधिनो यस्य कस्यचित् येन केनचिन्निवर्त्यस्य सत्वमात्रेण जिज्ञासायां मृष्टमेव[२] भुक्तस्य दहननिवर्त्यपरिधानीयस्य शुक्तिसाक्षात्कारनिवर्त्यरजताध्यासस्य वा पुनः पुनः बुभुक्षा प्रसङ्गात्। [३]अपरोक्षेऽर्थे मीमांसिते जिज्ञासाया अदर्शनाच्च। न भावरूपाज्ञानं[४] जिज्ञासाहेतुरज्ञाननिवृत्तिरेवेष्यत इति चेन्न। तर्हि सा जिज्ञासा किञ्चाज्ञान-निवृत्तेरिष्यमाणत्वमप्यसिद्धमेव। प्रकाशाविरोधिनस्तस्यानिष्टत्वाभावात्।

न हि योगिनः मूषकस्य वा प्रकाशविरोधितमोनिवृत्तीच्छा। शाब्दवृत्तिप्रकाशविरोध उक्त एवेति चेत्तथापीदानीं प्रकाशावैकल्यान्न तस्य द्विष्टता।

ननु कर्तृत्वाद्यध्यासमूलतया संसारार्थकन्दस्याज्ञानस्य शाब्दापरोक्ष्यनिवर्त्यतया तद्गोचरजिज्ञासा युज्यत एवेति चेत्तर्हि किं तदिति प्रश्नप्रयोजकजिज्ञासानुपपन्ना। केनचिदाकारेण ज्ञाते केनचिदाकारेणाज्ञाते हि वस्तुनि जिज्ञासा तादृशी स्यात् ब्रह्मजिज्ञासायाः तादृशप्रश्नप्रयोजकत्वं च। [५]‘**अधीहि भगवो ब्रह्मेति**’ ‘**यतो वा इमानि**

---

[१] क - वादिताया; घ - वादितया

[२] क - अमृष्टमेव; घ - मृष्टमेव

[३] क - परोक्षेऽर्थे; घ - अपरोक्षेऽर्थे

[४] क - नाभावरूपाज्ञान; घ - न भावरूपाज्ञानम्

[५] भगुर्वै वारुणिः। वरुणं पितरमुपससार। **अधीहि भगवो ब्रह्मेति**। तस्मा एतत् प्रोवाच। अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति। तँ होवाच। **यतो वा इमानि भूतानि जायन्ते**। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व **तद्ब्रह्मेति**। स तपोऽतप्यत। स तपस्तप्त्वा। (तै.उ.३.१-५)

**भूतानि जायन्ते**' [१]'**तद्ब्रह्मेति**' प्रश्नप्रतिवचनाभ्यामवगम्यते। [२]'**भूमानं भगवो विजिज्ञासे**' [३]'**तद्विज्ञासस्व**' [४]''**किं भगवन्तः परमं वदन्ति**' इत्यादि प्रश्नप्रतिवचनानि बहूनि द्रष्टव्यानि।

किञ्चाद्वैतज्ञानवत एव इयं जिज्ञासा। ततश्च ब्रह्मजिज्ञासासूत्रमनुपपन्नम्। अद्वैतनिर्धारणात् प्रागेव हि तत्र जिज्ञासोच्यते। ननु तत्राप्यनन्तरजिज्ञासैवोच्यते। अत एव साधनचतुष्टयपूर्ववृत्तित्वोपपत्तिश्च। तत्रैव श्रवणविधिश्चेति चेत्तर्हि सूत्रकारस्याद्वैत-न्यायग्रथनं व्यर्थमिति स्थितम्।

अत्रापि जिज्ञासोपपादने मिथो निघ्नन्ति। पूर्वमपि विद्यमानमपि शाब्दज्ञानमेक-कोटिकानवधारणात्मकमिति जिज्ञासोपपत्तिरिति केचित्। अन्ये तु - सविशेषभ्रमात् तत्सन्देहाद्वा जिज्ञासा जायते। सा च निर्विशेषोपदेशात् निवर्तत इति निर्विशेषगोचर-जिज्ञासेत्युच्यत इति। अपरे तु - अप्रतिबन्धापरोक्षज्ञानमविद्या- निवर्तकं तदेवेष्यते। इदानीं विद्यमानं स्वरूपापरोक्ष्यं वृत्तिज्ञानं वा प्रतिबन्धमेवेति। इतरे तु - सत्त्वविशिष्टज्ञानं पूर्वमखण्डगोचरज्ञानमिष्यत इति।

अत्र यत्प्रथमं मतं पूर्वमद्वैतज्ञानं विद्यमानमप्यवधारणात्मकत्वमतो निर्दिधारयिषा युज्यते न्यायग्रथनं चेति। तन्न, विचारात् प्रागुत्पन्नाया वृत्तेरनवधारणात्मकत्वेऽपि स्वप्रकाशस्यानवधारणात्मकत्वासिद्धेः। तस्य चानवधारणस्वभावत्वं सत्स्वरूपे प्रकाश-स्वरूपे वा सन्देहाभावात् दुस्साधञ्चावरणकल्पनञ्च। एवं सति व्यर्थमनवधारणत्वस्य कल्पितत्वे स्वरूपप्रयुक्तासंशयजिज्ञासाद्युपपत्तिर्दुर्वारा। अज्ञानसंशयादेर्जन्यावधारणमेव विरोधीत्युक्तावप्यावरणकल्पना व्यर्था। स्वरूपप्रकाशात्मकाधिष्ठानयाथार्थ्यावधारणस्या-ध्यासाविरोधित्वात् जन्यज्ञानस्याप्यज्ञानविरोधिताया आवरणप्रयुक्तत्वाभावेऽदृष्टद्वारैव निवर्तकत्वं स्यात्। अन्यत्वस्य प्रयोजकत्वं न कस्यापि बुद्धिमधिरोहति। संशयस्यापि

---

[१] तै.उ.३.१.; ३.१०.४

[२] यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य इति **भूमानं भगवो विजिज्ञास** इति। (तै.उ.७.२३.१)

[३] तै.उ.३.१.

[४] प्राजापत्यो हारुणिः सौपर्णेयः प्रजापतिं पितरमुपससार **किं भगवन्तः परमं वदन्तीति**। तस्मै प्रोवाच सत्येन वायुरावाति सत्येनादित्यो रोजते दिवि सत्यं वाचः प्रतिष्ठा सत्ये सर्वं प्रतिष्ठितं तस्मात् सत्यं परमं वदन्ति। (म.ना.उ.२२.१)

## ७. निर्विशेषस्य जिज्ञास्यत्वभङ्गः

निवर्तकत्वप्रसङ्गाच्च। जन्यावधारणत्वञ्च गौरवान्न प्रयोजकम्। अस्तु वा जन्यावधारणमेव विरोधि। तदपि वृत्तमेवाद्वैतवाक्यश्रवणसमनन्तरं वाक्यस्यासंशयकत्वात्।

अत्र यदाह नवीनः - यद्यपि प्रथमं निर्विशेषं[1] ब्रह्मसाक्षात्कारश्शब्दान्निष्पन्नस्तथापि सोऽनवधारण एवाग्रे संशयदर्शनात्। नन्वेककोटिकज्ञानमात्रं निश्चय एवेति न संशयः स्यादिति चेन्न, तावन्निश्चयत्वं जातिः चाक्षुषत्वादिना साङ्कर्यात्। त्वन्मते जातेरव्याप्यवृत्तित्वाभावेन धर्मिज्ञाने तदभावप्रसङ्गाच्च। धर्मिज्ञाने तदभावप्रसङ्गादेव न संशयान्यज्ञानत्वम्। अत एव न संशयाभाववत्वं धर्मिज्ञानस्य संशयाभिन्नत्वेन तदभावात्। नापि धर्म्यंशे तदभावज्ञाने अंशाभावात्।

न च धर्मिविषयत्वावच्छेदेन तदस्तिताज्ञानस्वरूपस्वरूपविषयत्वस्य ज्ञानमात्रतया विरुद्धधर्मद्वयासंभवात् ज्ञाने अंशसत्वे च संशयेऽप्येकैककोट्यंशे परस्परविरुद्धोभयप्रकारकत्वलक्षणसंशयत्वाभावेन निश्चयत्वापत्तेः।

न च स्वप्रकारीभवद्धर्मविरुद्धप्रकारकज्ञानाभिन्नत्वं संशयत्वं, तच्च तत्राप्यस्तीति वाच्यम्। संशयाभिन्नधर्म्यंशज्ञानेऽपि तत्सत्वात्।

न च तद्विरुद्धप्रकारकज्ञानत्वे सतीति विशेषणान्नातिप्रसङ्ग इति वाच्यम्। समूहालम्बनव्यावृत्यर्थमेकविशेष्यकत्वस्याप्यावश्यकत्वे एकविशेष्यकत्वे सति स्वप्रकारीभवद्धर्मविरुद्धप्रकारकज्ञानाभेदे सति तज्ज्ञानप्रकारविरुद्धप्रकारकत्वापेक्षया लाघवेन स्वविषये स्वाकारतद्विरुद्धद्वयवैशिष्ट्यावगाहिसंबन्धज्ञानाविरोधिज्ञानत्वस्यैव संशयशब्दार्थत्वात्।

तस्मात् यज्ज्ञानं यत्संशयनिवृत्त्यनुकूलस्वरूपविशेषवत् तत्तन्निश्चयः। इतरन्तु न तथेत्येककोटिकमपि किञ्चित्पुरुषदोषादनवधारणं किञ्चित्तर्कादिकारणमहिम्ना तदनतिरिक्तविषयमपि निश्चय इत्यनवद्यम्।

नन्वेवमपि ब्रह्मजिज्ञासा भवितुमर्हति संशयविरोधिज्ञानं हीष्यते। तच्च संशयसमानप्रकारकं निर्विकल्पकादिदमिति ज्ञानाच्च संशयानिवृत्तेः[2] निर्विशेषे ब्रह्मणि तदभावात्। न च कल्पितप्रकारोऽस्तीति वाच्यम्। तत्वावेदकश्रुतिजन्यज्ञानस्य तदविषयत्वादिति। मैवम्। ज्ञानं हि समानविषयतयावधारणात्मकं संशयं निवर्त्तयति।

[1] क - निर्विशेष; घ - निर्विशेषम्

[2] क - संशयनिवृत्तेः; घ - संशयानिवृत्तेः

तत्समानप्रकारकतयान्यविषया तद्दर्शनात् समानविषयत्वमप्यपेक्षणीयमिति चेत्संशयादपि प्रसङ्गः। निश्चयत्वमपि अपेक्षणीयमिति चेत्तर्हि समानविषयनिश्चयो निवर्तको लाघवान्निर्विकल्पकन्तु नास्त्येव। अनवधारणत्वादपि न तन्निवर्तकम्। इदमिति ज्ञानं तु घटत्वादिवैशिष्ट्याविषयत्वान्न तत्संशयं निवर्त्तयति। अन्यथा 'अयं घट' इति ज्ञानात्तद्गोचरे घटत्वे इदं घटत्वं नैवेति संशयो न निवर्तेत। तस्मिन् घटत्वव्यतिरिक्त-प्रकाराभावात्।

किञ्चैवं प्रमेयवानिति ज्ञानात् [१]त्वदभिमतनिश्चयात् घटत्वप्रकारात् संशयनिवृत्यापत्तिः। तत्र सामान्यधर्मप्रकारकत्वं प्रतिबन्धकं चेदिदमिति ज्ञानेऽपि तथा भविष्यतीति। अत्रापि विदिताविदिताकारभेदाभावात् प्रश्नप्रयोजकजिज्ञासानुपपत्तिस्स्पष्टा। न हि केनचिदाकारेण धर्मिनिश्चयाभावेऽविदिताकारज्ञानस्येष्यमाणत्वाभावे च इदं किमित्यादिप्रश्नहेतुजिज्ञासासंभवः। न च ब्रह्म केनचिदाकारेण निश्चितम्। न च धर्मस्वरुपमात्रं वा निश्चितं, येन तन्मात्रं कारणमिति शंक्येत। न च [२]धर्ममात्रं लाघवात् कारणम्, न तु तन्निश्चय इति वाच्यम्। स्थाणुपुरुषसन्देहानन्तरं 'अयं स्थाणुः खदिरः पलाशो वा' इति संशयादर्शनेन धर्मितावच्छेदकविशिष्टधर्मनिश्चयस्य हेतुत्वात्। एतेन स्वरूपात्मकधर्मज्ञानं[३] निरस्तम्। किञ्च नित्यानित्यवस्तुविवेकमुपपादयन् न्यायोपबृंहित-वाक्येनैव नित्यानन्दवस्त्ववधारणमवोचः '**आमनुष्यादाब्रह्मलोके कर्म कार्यम्**' इत्यादिना।

अथ नित्यानन्दांशावधारणाङ्गीकारेऽपि तेनाभेदाद्द्वैतांशानवधारणन्न विरुध्यत इति चेत् हन्त, किं ब्रह्मणोऽवयवित्वमवयवसंघातात्मकत्वं सधर्मकत्वं वाङ्गीकरोषि येनैवं ब्रवीषि। किञ्च नित्यानन्दात्मकत्वं किं जीवस्य उत ब्रह्मणः।

नाद्यः, तदभेदस्यासाध्यत्वादपुरुषार्थत्वात् तद्दर्शनेन इतरवैराग्यासिद्धिप्रसङ्गात्। [४]'**ब्रह्म वेद ब्रह्मैव भवति**' इति ब्रह्माभेदस्यैव पुरुषार्थत्वप्रतीतेश्च। द्वितीये जीवब्रह्मणोरभेदज्ञानेन भवितव्यमेव। तच्चाभेदज्ञानमज्ञत्वसर्वज्ञत्वादिभेदज्ञाने जाग्रति नोपपद्यत इति। तन्मिथ्यात्वज्ञानमपि इदानीं आवश्यकमेव। ननु विद्यत एवाभेदज्ञानं

---

[१] क - मदभिमत; घ - त्वदभिमत

[२] क - धर्मज्ञानमात्रम्; घ - धर्ममात्रम्

[३] क - धर्मिज्ञानम्; घ - धर्मज्ञानम्

[४] स यो ह वै तत् परमं **ब्रह्म वेद ब्रह्मैव भवति।**
तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति।। (मुण्डक.३.२.९)

मिथ्यात्वज्ञानञ्च तदनवधारणरूपमित्युक्तमिति चेन्न, ततो वैराग्यमुमुक्षानुपपत्तेः। अनवधारणादपि मुमुक्षा भवत्येवेति चेत्तर्हि नित्यत्वानित्यत्वज्ञानमप्यनवधारणमेवास्तु। तथैवेष्यत इति चेत्तर्हि नित्यानित्यवस्तुविवेकस्य न्यायसाचिव्योक्तिविरोधः।

न च न्यायसाध्यस्यापि ज्ञानस्य संशयनिवर्तकस्यानवधारणत्वं वक्तुं शक्यम्। किञ्चास्मिन् पक्षे मननानन्तरभाविज्ञानस्यैव संशयविरोधितयावधारणत्वात्। तत एवाविद्यानिवृत्तौ किं निदिध्यासनेन। अवधारणस्योत्पन्नत्वेन तत्प्रतिबन्धकक्कल्मष-निवर्तकत्वेन[१] उपयोगस्य वक्तुमशक्यत्वात् कल्मषनिवृत्तेः ज्ञानात् प्रागेव भावात्[२]। न चात्रापि पक्षे जातेऽप्यवधारणेऽविद्यानिवृत्तेरनुत्पत्तेः तत्प्रतिबन्धकभेदवासना-निरासकत्वेनोपयोगो वक्तुं शक्यः। तथात्वे प्राथमिकज्ञानस्यावधारणत्वेऽपि मननानन्तरमिव प्रतिबन्धादज्ञानानिवृत्त्युपपत्या तदनवधारणत्वकल्पनावैयर्थ्यात्। न चावधारण एव विपरीतवासनानिरासमुखेन निदिध्यासनस्योपयोग इति वाच्यम्। पूर्वमवधारणाभावे भूयसानयासेन[३] **वृङ्(४ब्रह्म)**शब्दजन्मसाध्ये निदिध्यासने प्रवृत्त्ययोगात् मरणानन्तरं[४] संशयादर्शनाच्च। अपरोक्षज्ञानं प्राक् शब्दान्नोत्पन्नं निदिध्यासनानन्तरमेव उत्पद्यत इति शङ्का त्वयैव निरस्ता। अपरोक्षे परोक्षज्ञानानुपपत्या त्वयैव प्राथमिकापातज्ञानस्यापरोक्षस्योपपादनात् प्राथमिकज्ञानस्यानवधारणत्वकल्पनावैयर्थ्याच्च।

न च प्राथमिकज्ञानावधारणत्वकल्पना[५] नाविद्यानिवृत्त्यभावाय। किन्त्वनभ्यास-दशायां जलादिज्ञानस्थल इवोत्तरकालसंशयोपपत्तये इति वाच्यम्। तत्र तथात्वेऽप्यत्राहित-सन्देहोपपत्तेः। अनवधारणत्वाकल्पनात्[६] वाक्यान्तरात् प्रमाणान्तराद्वा भेददर्शनस्य तदाधायकत्वाद्भेददर्शनाभावे संशयस्यैव सिद्धेः। जलादिज्ञानस्थलेऽप्याहितसन्देह इति वक्ष्यते। न चाहितसन्देहस्यैवापह्नवः शक्यः। अप्रयोजकत्वसन्धिग्धोपाध्यादीनां संशयाधायकत्वान्निश्चये सत्यपि तस्य दोषजन्यत्वादिशङ्कयार्थसंशयस्यानुभव-सिद्धत्वाच्च।

---

[१] क - निवर्तकत्वेनैव; घ - निवर्तकत्वेन
[२] क - भावात्; घ - अभावात्
[३] क - भूयसानयासेन; घ - भूयसाभ्यासेन
[४] क - मननानन्तरम्; घ - मरणानन्तरम्
[५] क - ज्ञानस्यानवधारणत्वकल्पना; घ - ज्ञानावधारणत्वकल्पना
[६] क - अनवधारणत्वकल्पनात्; घ - अनवधारणत्वाकल्पनात्

किञ्च विचारादिसहकार्यभावे ज्ञानमेवाद्वैतेन संभवति सर्वपदानां प्रवृत्तिनिमित्त-पुरस्कारेण वाक्यानां चार्थद्वयसंसर्गगोचरतया प्रवृत्तेः। तत्सत्वे निर्णयस्यैवाभावात् क्व निर्विशेषावधारणम्[१]। अत्र यदुक्तं सत्यादिवाक्यानां सामानाधिकरण्येनैकार्थतात्पर्यज्ञान-संभवात् तदनुरोधाल्लक्षणया निर्विशेषात्मापातधीरिति, तन्न। एकार्थतात्पर्यज्ञानस्य तदनुकूलव्यापारस्य वा श्रवणत्वेन त्वदभिमतस्यापातप्रतीतिदशायामेव वृत्तत्वेन श्रवणाकर्तव्यतापातात्। किञ्च गृहीतप्रमाणस्य वाक्यस्य तात्पर्यावधारणे तेनानवधारणसंभवः।

किञ्च प्रत्यक्षादिविरोधभानदशायाम् [२]असन्निकृष्टार्थत्वाभावात् नातात्पर्यग्रहः। विरोधसमाधानेन तात्पर्यग्रहे जिज्ञासानन्तरं [३]मननस्य अकर्तव्यतापत्तिः। अर्थानुपपत्ति-निरासकयुक्तिचिन्तनस्य मननत्वात्।

किञ्च एककोटिकज्ञानस्य निश्चयत्वात् नानवधारणत्वकल्पनं युज्यते। अत्र यज्जात्यादिदूषणं तन्निश्चयत्वस्य जातित्वे बाधकाभावात्।

ननु निश्चयत्वस्यैकत्वे संशयवृत्तित्वे च ज्ञानत्वेन तुल्यव्यक्तिकतया तद्वृत्तित्वाभावेन धर्म्यंशे निश्चयत्वन्न स्यात्। नानात्वे चाक्षुषत्वादिभिः साङ्कर्यात् चाक्षुषत्वाद्यपेक्षयापरत्वे च ईश्वरज्ञानस्यानिश्चयतापत्तिः। न च तन्मात्रेऽन्यनिश्चयत्वं वाक्यैक्यात्[४] इति चेदेकमेव निश्चयत्वम्। न च तुल्यव्यक्तिकता निर्विकल्पकस्या-निश्चयत्वात्। न च चाक्षुषत्वादिसांकर्यम्। गुणे तस्यादोषत्वात्। अन्यथा स्वरविशेषात् पुत्राद्यनुमानायोगात् क्रत्वादिना सांकर्यात्। तद्व्याप्यत्वेऽननुगमात्। तारत्ववदनुगमस्यापि जातौ [५]कल्पयितुमशक्यत्वात्। एकस्यैव कारणस्य एकेनोच्चारणे तत्र त्वव्याप्यजातेरसंभवात्। यच्च संशये धर्म्यंशे निश्चयत्वाभावप्रसङ्गः जातेरव्याप्य-वृत्तित्वाभावादिति तन्निश्चयत्वस्य तत्र सत्वेऽप्यव्याप्यवृत्तित्वप्रसङ्गाभावात्। न हि संशयत्वसामानाधिकरण्यमात्रादव्याप्यवृत्तित्वम्। किन्तु स्वात्यन्ताभावसामानाधिकरण्य-मात्रात् कोट्यंशे संशयत्वात्तदंशे निश्चयत्वाभावात् स्वात्यन्ताभावसामानाधिकरण्य-

---

[१] क - निर्विशेषानवधारणम्; घ - निर्विशेषावधारणम्

[२] क - सन्निकृष्टार्थत्वाभावात् न तात्पर्यग्रहः; घ - असन्निकृष्टार्थत्वाभावात् नातात्पर्यग्रहः

[३] क - मननस्य कर्तव्यतापत्तिः; घ - मननस्यापि अकर्तव्यतापत्तिः

[४] क - व्यक्त्यैक्यात्; घ - वाक्यैक्यात्

[५] क - कर्तुमशक्यत्वात् घ - कल्पयितुमशक्यत्वात्

मस्त्येवेति चेन्न, संशयत्वनिश्चयत्वयोः द्रव्यत्वघटत्वयोरिव वृत्तेरिष्टत्वात्। यद्येवं धर्म्यंशे निश्चय इति व्यवहारो न स्यात्।

किञ्च संशयानन्तरं संशयो न स्यात्। पूर्वसंशयस्यैव तन्निश्चयत्वादिति चेन्न। निश्चयत्वस्य धर्मितावच्छेदकविषयत्वाभिव्यङ्ग्यत्वेन तन्निश्चयत्वव्यवहारात् किञ्चित्प्रकारकत्वे सति तद्विरुद्धाप्रकारकत्त्वलक्षणमेककोटित्वं हि निश्चयत्वाभिव्यञ्जकम्। तच्च धर्मितावच्छेदकविषयकत्वविशेषात्मकतत्प्रकारकत्त्वघटितस्थाणुत्वविषयकत्त्वं तु न तथा तद्विरुद्धपुरुषत्वस्यापि प्रकारत्वात् संशयत्वञ्च स्वप्रकारविरुद्धप्रकारकत्वाभिव्यङ्ग्य-निश्चयत्वव्याप्यजातिविशेषः। स च यत्प्रकारकत्वा-भिव्यङ्ग्यस्तत्संशयः। अतो न धर्म्यंशे संशयः।

यद्वा इदं त्वस्थाणुत्वादिकमेव विषयतया संबन्धं निश्चयत्वसंशयत्वाभिव्यञ्जकम्। तत्र निश्चयत्वं येनाभिव्यज्यते तन्निश्चयत्वव्यवहारः। एवं संशयत्वव्यवहारोऽपि।

यद्वा यत्संबन्धितावच्छेदकं निश्चयत्वं ज्ञानस्य तन्निश्चयत्वव्यवहारः। यत्संबन्धितावच्छेदकं संशयत्वं तत्संशयत्वव्यवहारः निश्चयत्वेन किञ्चित् संबन्धित्वस्य संशयत्वेन किञ्चित् संबन्धित्वस्य च ज्ञाने स्वीकारात्। तथा च न संशयान्तरानुत्पत्तिप्रसङ्गोऽपि तन्निश्चयस्यैव तत्संशयनिवर्तकत्वात् संशयान्यत्वं निश्चयत्वमित्यत्रापि त्वद्रीत्या किञ्चिद्बाधकम्। न च धर्म्यंशे निश्चयत्वाभावप्रसङ्गः। त्वया वृक्षादावपि औपाधिकभेदेन संयोगतदभावप्रतीतेरित्यादिवदवच्छेदकभेदादवच्छिन्नभेदस्याङ्गीकारात्। तद्वदेव धर्मिविषयत्वावच्छेदेन संशयान्यत्वोपपत्तेः संशयत्वाभावो निश्चयत्वमित्यत्रापि न दोषः। न च धर्मिविषयकत्वादेर्ज्ञानमात्रत्वाद्विरुद्धावच्छेदकालाभः विषयस्यैवावच्छेदकत्वात् त्वयापि प्रत्यभिज्ञायां विषयभेदेन स्मृतित्वानुभवत्वयोरङ्गीकारात् रूपरसादीनां सत्ताभेदकत्वस्याङ्गीकाराच्च।

एवञ्च धर्म्यवच्छिन्ने संशयत्वात्यन्ताभावः स्थाणुत्वावच्छिन्ने संशयत्वम्। न चैवमेकैककोट्यंशेऽपि निश्चयत्वापत्तिः। उभयप्रकारकत्वगर्भसंशयत्वाभावादिति वाच्यम्। स्वप्रकारीभवद्धर्मविरुद्धप्रकारकज्ञानाभिन्नस्य संशयत्वात्। न च समूहालंबनेप्यतिव्याप्तिः। एकविशेष्यकत्वेन विशेषणात्। न च धर्म्यंशवारणाय [१]तद्भानप्रकारविरुद्धप्रकारकत्वमपि वाच्यम्। तथा चैकविशेष्यकत्वे सति स्वप्रकारीभवद्धर्मविरुद्धप्रकारकज्ञानभेदे सति

[१] क - तज्ज्ञान; घ - तद्भान

तद्विरुद्धप्रकारकत्वापेक्षया लाघवात् स्वविषये स्वाकारविरुद्धद्वयवैशिष्ट्यावगाहि समबलज्ञानाविरोधिज्ञानत्वं संशयत्वम्।

न च धर्म्यंशज्ञानातिव्याप्तिः ज्ञानाभेदेन स्थाणुत्वादेस्तदाकारत्वादिति वाच्यम्। तस्यान्तःकरणवृत्तिरूपतया विद्यावृत्तिरूपसंशयादन्यत्वादिति वाच्यम्। एतदपेक्षयैक-विशेष्यकत्वे सति [1]स्वप्रकारकज्ञानाभिन्नत्वस्य लघुत्वादुभयत्र ज्ञानपर्यन्तं तुल्यम्। अविरोधित्वस्याप्रतिबन्धकत्वात्मकत्वे [2]अनिवर्तकत्वात्मकत्वे च तदपेक्षया भेदाभावमात्रं लघु भवत्येव। स्वशब्दस्य चाभिन्नपरत्वान्न धर्म्यंशातिव्याप्तिः। अस्तु वा ज्ञानपरम्। न च धर्म्यंशेऽतिव्याप्तिवारणाय विशेषणस्य देयत्वात् गौरवम्। त्वयापि तदर्थं विशेषणस्य देयत्वात् धर्मिज्ञानस्य संशयभिन्नत्वेनातिव्याप्तिवारणं तु न लक्षणान्तरेऽपि [3]इदं वारितम्।

यद्वा स्वाभिन्नज्ञानप्रकारविरुद्धप्रकारकत्वं संशयत्वम्। अतो धर्म्यंशेऽतिव्याप्ति-शङ्कापि। वस्तुतस्तु एकविशिष्ये परस्परविरुद्धोभयप्रकारताकत्वं संशयत्वम्। न चैकैककोट्यंशेऽव्याप्तिः ज्ञानस्य निरंशत्वात्।

नन्वेवं धर्मिण्यपि संशयत्वप्रसङ्ग इति चेन्न। धर्मिस्वरूपे संशयत्वस्येष्टत्वाद्विहितं विमतमित्यादिना पक्षनिर्देशात्। न चैवं धर्मितावच्छेदकसंशयत्वमपि तस्य स्यादिति वाच्यम्। तद्गोचरत्वस्येष्टत्वात्। तन्निरूपितसंशयत्वं तु नेष्यते। संशयत्वमिति धर्मिविषयकत्वविरुद्धोभयप्रकारकत्वात्मकत्वं तच्च धर्मिविरोधतत्प्रतियोगिभिर्निरूप्यते।

न च धर्मितावच्छेदकं तन्निरूपकम्। न च धर्मितावच्छेदकतद्विरुद्धकोटिक-संशयानिवर्तकं स्यादिति विवक्षितमिति वाच्यम्। संशयत्वशरीराप्रविष्टप्रकारताकत्वं निश्चयत्वम्। संशयत्वशरीरप्रविष्टाप्रकारता स्थाणुनिष्ठप्रकारता पुरुषनिष्ठप्रकारता च परस्परविरुद्धप्रकारताकत्वस्य लक्षणशरीरप्रवेशात् ज्ञानस्य प्रकारतया संबन्धो निरूप्य-निरूपकभावः। संशयत्वशरीराप्रविष्टप्रकारता धर्मितावच्छेदकनिष्ठा तादृशनिश्चयश्च निश्चयत्वघटकप्रकारताश्रयस्य तत्प्रकारनिरूपितविशेष्यताश्रये संशयविरोधी। एवञ्च संशयत्वेऽपि धर्मितावच्छेदकनिश्चयत्वात् तत्कोटिकं संशयविरोधित्वमुपपद्यते। अत एव संशयत्वनिरूपको विषयस्थाणुत्वादिसन्दिग्ध इत्युच्यते। निश्चयत्वनिरूपकेदंत्वादिर्निश्चित

---

[1] क - इतः पूर्वं अधिकः पाठः - स्वप्रकाशीभवद्धर्मविरुद्ध

[2] क - अनिवर्तकत्वे; घ - अनिवर्तकत्वात्मकत्वे

[3] क - दण्डवारितम्; घ - इदं वारितम्

इत्युच्यते। धर्मीत्तूभयानुप्रवेशात् स्थाणुत्वादिना सन्दिग्धः इदंत्वादिना निश्चित इति सर्वमनवद्यम्।

किञ्च 'स्वविषये स्वाकार' इत्यत्र 'स्व'शब्दद्वयं ज्ञानपरं वा अविरोधिपरं वा। पूर्वस्वपदमप्यविरोधिपरं वा उत्तरस्वपदं ज्ञानपरमिति वा। नाद्यः, स्थाणुत्वादि संशयाविरोधिनि अयं घट इति ज्ञानेऽतिव्याप्तिः। न च तस्यापि तादृशघटत्वादि संशयविरोधित्वान्नातिव्याप्तिः। कञ्चिदपि संशयं प्रति विरोधित्वाभावस्य विवक्षितत्वादिति वाच्यम्। तथा सति श्वेतश्शंख इत्यनुमितौ पीतश्शङ्ख इति भ्रमाविरोधिन्यामतिव्याप्ति-वारणार्थं कृतस्य समबलविशेषणस्य वैयर्थ्यात्। तस्यापि शंखः श्वेतो वा न वेति संशयविरोधित्वात्। धर्मिज्ञानस्य संशयादन्यत्वेन परिहारश्च व्यर्थः। शङ्काया एवाभावात्। किञ्च संशयमात्रस्य कोटौ कोट्यन्तरसंशयविरोधित्वादसंभवः। न ह्ययं स्थाणुर्वा पुरुषो वेत्यादिसंशये सति स्थाणुः पुरुषो वा न वा, स्थाणुत्वं पुरुषत्वं न वेत्यादिसंशयाः संभवन्ति। न च स्थाणुत्वं पुरुषत्वविरोधि न वेति संशयो वास्ति।

किञ्च धर्मिज्ञानस्य कोटिज्ञानात् भेदे स्वविषये स्वाकारतद्विरुद्धद्वय-वैशिष्ट्यावगाहिज्ञानाप्रसिद्धेः। कोटिज्ञानस्य धर्मगोचरत्वेऽन्यथाख्यातिप्रसङ्गः। इदं दूषणं पक्षत्रयसाधारणम्।

किञ्च यत्प्रकारकसंशयः कदापि नास्ति तादृशोत्पन्नविनष्टव्यक्तिविशेषनिष्ठधर्म-विशेषप्रकारकनिश्चयेऽतिव्याप्तिः। अत एव न तृतीयः।

नापि द्वितीयः- व्यक्तिविशेषनिष्ठधर्मप्रकारकसंशयः कदापि नास्ति। तद्धर्मप्रकारकत्व-तदभिमतैककोटिकसंशयेऽव्याप्तेः। तस्यानवधारणत्वञ्च तदित्युत्तरकालं प्रामाण्यसंशयादवगम्यते।

ननु प्रामाण्यसंशयो यद्यप्रामाण्यकोटिकः तदा तमादायैव लक्षणसंभवः। यदि प्रामाण्याभावकोटिकः तदा निश्चितेऽप्यर्थे तदभावानवगाहिनोऽस्य प्रामाण्यसंशयस्य संभवादलक्ष्यत्वान्नाव्याप्तिरिति चेन्न। तथा सत्यस्मात् प्रामाण्यसंशयान्निश्चितेऽप्यर्थे संशयसंभवादग्रिमार्थसंशयानुरोधेन प्रामाण्यसंशयानुरोधाच्च प्राचीनज्ञानस्यानवधारणत्व-कल्पनानुपपत्तेः। अनुमितेश्च वह्नौ वह्नितदभावकोटिकसंशयाविरोधित्वादव्याप्तिः। न च पर्वते वह्निसंशयाविरोधित्वान्नैवमिति वाच्यम्। स्थाणुः पुरुषो न वेत्यादिसंशय-विरोधित्वेन संशयमात्रेऽसंभवात्।

न च यदंशेऽविरोधित्वं तदंशे संशयत्वं पुरोवर्तिनि चाविरोधित्वात् संशयत्वमिति वाच्यम्। अनुमितेरपि वह्न्यंशे संशयतापत्तेः। न चैतदिष्टं व्याप्यधीजन्यत्वात्। ननु यत्किञ्चित् स्वाकारतद्विरुद्धवैशिष्ट्यावगाहिज्ञानविरुद्धत्वं[१] न विवक्षितम्। किन्तु सामान्यतो वह्नौ च वह्नित्वसंशयविरोधित्वमस्ति। अंशविवक्षया न पूर्वोक्तासंभवः। न चोर्ध्वतादिसंशयविरोधित्वादसंभवः धर्मिज्ञानस्य संशयादन्यत्वात् निर्विशेषात्मज्ञाने त्वेतदस्तीति चेन्न, त्वदभिमतैककोटिकजलानवधारणे शौक्ल्यपुरोवर्तित्वाद्याकारे तदाकार-संशयविरोधिन्यव्याप्तेः। न हि तदप्यनवधारणजलत्वज्ञानात् भिन्नमन्तःकरणवृत्तित्वात् सामग्रीसमावेशेनैक्यसिद्धेः।

ननु यस्मिन् विषये यत्स्वाकारवैशिष्ट्यं विषयीक्रियते तत्र तद्विरुद्धवैशिष्ट्यानवगाहिज्ञानाविरुद्धत्वं तत्संशयत्वमतो नैते दोषा इति चेन्न, निर्विशेषज्ञानासंग्रहात्। तस्य निष्प्रकारकस्य वैशिष्ट्याविषयत्वात्। सप्रकारकत्वाभेद-वैशिष्ट्याविषयत्वाभ्युपगमपक्षेऽपि यत्र यद्वैशिष्ट्यं गृह्यते तत्र तद्विरुद्धवैशिष्ट्यावगाहि-ज्ञानाविरोधित्वं तत्र तत्संशयत्वमिति। एतदपेक्षया यत्र यस्य यद्विरूद्धस्य च वैशिष्ट्यं गृह्यते स तत्र तत्संशय इत्यस्य लघुत्वात्। न हीदानीं धर्म्यंशसंशयत्वादिशङ्का गुरुरप्याद्रीयेत।

किञ्च ब्रह्मणोऽब्रह्मणि प्रकारत्वे सद्वितीयाद्वितीयत्वयोर्ब्रह्मरूपप्रकाराविरोधाभावात् सद्वितीयत्वाद्वितीयत्वसंशयावलम्बनेनैककोटिकाद्वैतानवधारणोपपादनमनुपपन्नम्।

किञ्च ज्ञानाविरोधित्वमित्यत्र किं विरोधित्वं निवर्तकत्वं प्रतिबन्धकत्वं वा। नाद्यः, संशयमात्रस्य विरोधिगुणत्वेन निवर्तकत्वादसंभवात्। नान्त्यः, प्रतिबन्धकत्व-तदभावयोरवच्छेदकग्रहं विना दुर्ग्रहत्वात्। तत्सत्वे च तद्रहितत्वस्यैव संशयत्वात्मकत्वात्। अवच्छेदकञ्च न निश्चयत्वमन्योन्याश्रयात्। संशयनिवृत्यनुकूलस्वरूपविशेषवत्वं निश्चयत्वमिति निर्वर्णनात्[२]। भूयोवयवसन्निकर्षजन्यत्वविशेषदर्शनजन्यत्वादिकमननुगत-मवच्छेदकम्। तथापि प्रतिबध्यतावच्छेदकग्रहं विना प्रतिबन्धकत्वस्य दुर्ग्रहत्वात्। प्रतिबध्यतावच्छेदकञ्च नोक्तसंशयत्वम्। एककोटिकानवधारणस्य निर्णयानन्तरमपि प्रसङ्गात् न तस्य पृथगेव प्रतिबध्यता। एककोटिकानवधारणत्वस्यान्योऽन्याश्रयग्रहत्वात् रूपान्तरस्य चासाधरणस्य दुर्वचत्वात्।

---

[१] क - ज्ञानाविरुद्धत्वम्; घ - ज्ञानविरुद्धत्वम्

[२] क - निर्वचनात्; घ - निर्वर्णनात्

## ७. निर्विशेषस्य जिज्ञास्यत्वभङ्गः

न च विशेषदर्शनाद्यजन्यत्वेनानवधारणद्वयस्याप्येकरूपेण प्रतिबध्यता जन्यतावच्छेदकानिरूपणे तस्य दुर्ग्रहत्वात् विशेषदर्शनभूयोऽवयवसन्निकर्षजन्यतावच्छेदकञ्च। यदि निश्चयत्वाघटितं तदा संशयेऽपि जनकताप्रसङ्गः। यदि निश्चयत्वघटितं तदा तस्य त्वया निरुक्तस्यावच्छेदकत्वेऽन्योऽन्याश्रयादेककोटिकत्वमेव तद्वाच्यम्। तस्य चानवधारणत्वाभिमतैककोटिकज्ञानसाधारणत्वात् तस्यापि निश्चयत्वापत्तिः।

न चानभ्यासदशापन्नज्ञानान्यत्वेन जन्यतावच्छेदकं विशेष्यत इति वाच्यम्। तस्य संशयत्वे सिद्धे हि तद्व्यावर्तकविशेषणान्तर्भावः। अन्यथा गौरवप्रसङ्गात्। किञ्च लाघवादेककोटिकत्वं प्रतिबन्धकतावच्छेदकमेकत्र विरुद्धोभयकोटिकत्वं प्रतिबध्यतावच्छेदकमिति न पूर्वज्ञानस्य संशयत्वम्। विशेषदर्शनाद्यजन्यत्वस्य प्रतिबध्यतावच्छेदकत्वे विशेषदर्शनजन्यत्वादीनां [१]लघूनां प्रतिबन्धकतावच्छेदकत्वे च गौरवात्।

किञ्च त्वन्मते यदि ज्ञानेनांशभेदस्तदा स्वविषये स्वाकारतद्विरुद्धद्वयवैशिष्ट्यावगाहित्वमेव संशयलक्षणमस्तु। लघुत्वात्। एकैककोट्यंशेऽव्याप्तिशङ्काभावात्। यद्यंशभेदस्तदा लाघवादेव तादृशज्ञानाभिन्नत्वं संशयत्वमित्युभयथापि नैककोटिकमनवधारणम्। न च धर्म्यंशेऽतिव्याप्तिः। तादृशज्ञानाविरोधित्वमित्युक्तेपि तत्प्रसङ्गात्। संशयाद्भेदस्य च पक्षद्वयेऽपि वक्तुं शक्यत्वात्। किञ्च कस्मिंश्चिदर्थे संशये ज्ञाते कस्मिंश्च[२] स्वयमेव युक्त्या निश्चयान्निवृत्ते सति पुनस्तत्र द्वयोः परीक्षकयोर्विवादात् संशयो दृश्यते। तत्र स्वयं युक्त्यनुसन्धानजन्यं ज्ञानं संशयंश्चेत् पूर्वसंशयो निवर्तेत। तन्निश्चयश्चेदनन्तरं संशयो न स्यात्। तत्राहितसन्देहश्चेदेककोटिकज्ञानस्थले सर्वत्र तथैव युक्तम्।

किञ्चैककोटिकज्ञानानन्तरं द्विकोटिकज्ञानोत्पत्तेः प्रागयमथो निश्चित इति बुद्धिव्यवहारौ दृश्येते। ततो द्विकोटिकज्ञानानन्तरमेतावत्कालं निश्चयः स्थित इदानीं सन्देहो जायत इति बुद्धिव्यवहारौ दृश्येते। अतोऽनुभवानुरोधात् नैककोटिकं ज्ञानं संशयः।

किञ्चात्र द्विविधानवधारणानुगतं निश्चयव्यावृत्तं कारणञ्च दुर्घटम्। तथा द्विकोटिकसंशयनिश्चयव्यावृत्तमेककोटिकानवधारणानुगतमपि। नन्वस्तु कश्चित् दोषः सामान्यकारणमन्योऽन्यदोषो विशेषकारणम्। न चैककोटिकस्याप्रामाण्यप्रसङ्गः। अस्य

---

[१] क - बहूनाम्; घ - लघूनाम्

[२] क - तस्मिंश्च; घ - कस्मिंश्च

दोषस्यानवधारणप्रयोजकत्वेनाप्रामाण्यप्रयोजकदोषादन्यत्वादिति चेन्न। पूर्वोदाहृतसंशयद्वय-मध्यगतैककोटिकज्ञानस्य संशयनिवर्त्तकत्वसंशयसहत्वाभ्यां दोषजन्यत्वतदभावयोरापत्तेः। किञ्च न ह्यस्य दोषस्य कश्चिदस्ति मौहूर्तकः यन्मुखाद्भाविनीद्विकोटिकसंशयहेतुं विपरीततर्कप्रमाणप्रवृत्तिमुपनिशम्य प्रागेवोत्पद्यमानं ज्ञानमवधारणीकर्तुं तत्सामग्र्यामयमनु-प्रविशेत्।

वस्तुतस्तु भासमानविरोधवद्धर्मप्रकारकत्वं न संशयत्वम्। येन लाघवमन्विच्छसि। तावन्मात्रात् संशयत्वे परस्परविरुद्धस्थाणुत्वपुरुषत्ववानिति प्रतीत्याकारापत्तेः। अनुमित्युपनीतश्वैत्यगोचरशंखपीतप्रत्यक्षस्य श्वैत्यपीतत्वविरोधगोचरस्य निश्चयस्य परस्परविरुद्धाहार्यारोपस्य च संशयत्वापत्तेश्च।

किन्तु कश्चिद्वैलक्षण्यविशेषः - स च तद्विरूद्धवैशिष्ट्यावगाहने सत्यपि तदवगाहनाविरोधप्रयोजकस्थाणुर्वा पुरुषो वेति वा शाब्दगर्भव्यवहारनिमित्ततप्रयोजकः कोटिद्वयस्मरणसाधारणधर्मदर्शनादिजन्यो जन्यतावच्छेदको वा विरोधविषयत्वेऽपि निर्धारणात्मकपूर्वोदाहृतोपनीतश्वैत्यगोचरशंखपीतभ्रमव्यावृत्तः। इक्षुक्षीरादिमाधुर्यवत् सर्वानुभवसाक्षिकस्संशयमात्रानुगतो विषयीकरणविशेषः। तथैव निश्चयत्वमपीति सर्व-लोकसंप्रतिपन्नलक्ष्यानुसारादनुभवानुसाराच्च एवमेव वक्तुं युक्तम्। प्रपञ्चयिष्यते च विषयीकरणविशेषो **अद्वैतविद्याविजये** अनिर्वचनीयभङ्गः। यच्च '**यद्यत् संशय-निवृत्त्यनुकूलस्वरूपविशेषवत् तत्तन्निश्चय इति**' निश्चयलक्षणम्। तदपि न मुक्ति-कालीनस्वरूपानन्दावधारणात्मप्रकाशेऽव्याप्तेः। तस्य निवर्तकत्वे इदानीमपि संशयाभाव-प्रसङ्गात्। तदेव हि स्वरूपमिदानीमप्यनवधारणत्वमपि कल्पितमिति चेत्किं ततः वास्तवमवधारणं तिष्ठत्येव। चरमवृत्तेरवधारणस्वरूपत्वे तस्यैवाज्ञानविरोधिता स्यात्।

ननु ज्ञानस्यावरणकल्पनावैयर्थ्यञ्च। एतेन चरमवृत्त्यधीनं स्वरूपस्यावधारण-मित्यपि निरस्तम्। स्वरूपमवधारणमेव प्रतिबन्धादिदानीं संशयन्न निवर्तयतीत्युक्तौ प्राथमिकशाब्दज्ञानस्यानवधारणत्वाङ्गीकारविरोधः प्रतिबन्धादेवानिवृत्तेः।

किञ्च चरमसाक्षात्कारस्य मुक्तिकालीनस्वरूपानन्दप्रकाशस्य च तद्धर्मिकसंशय-विरोधित्वात्[१] तत्कोटिकसंशयविरोधित्वं वा नास्त्येव स्वरूपमात्रगोचरत्वात्। न हि घटमात्रगोचरज्ञानं तद्धर्मिकस्य वा तत्कोटिकस्य वा संशयस्य विरोधी भवति।

[१] क - विरोधित्वम्; घ - विरोधित्वात्

## ७. निर्विशेषस्य जिज्ञास्यत्वभङ्गः

ननु स्वरूपमात्रगोचरस्यापि चरमसाक्षात्कारस्यैककोटिकसंशयविरोधित्वमस्त्येवेति चेन्न। तस्य द्विकोटिकसंशयाविरोधितया प्राथमिकापातप्रतीतिवदेव विरुद्धप्रकारकज्ञानस्य विरोधितया संशयत्वेन तस्यापि संशयस्य तेनाविरोधात्।

किञ्चायं घट इत्यादिनिश्चये रक्तः कृष्णो वेत्यादिसंशयाविरोधादव्याप्तिः। यत्किञ्चित् संशयनिवर्तकत्वं तु स्थाणुपुरुषसंशयेऽपि तत्र विरोधभानेन स्थाणुत्वं पुरुषवृत्ति न वा पुरुषत्वसमानाधिकरणं न वा इत्यादि संशयनिवर्त्तकत्वाद्धर्मितावच्छेदक-संशयनिवर्त्तकत्वाच्च।

न चेदं त्वस्य धर्मितावच्छेदकत्वात्तस्य च केवलान्वयित्वात् तत्कोटिक-संशयाप्रसिद्धिः तत्तद्व्यक्त्यसाधारणधर्मविशिष्टस्वरूपस्यैव इदंशब्दार्थत्वात् केवलान्वयित्व-व्यवहारस्तु इदंशब्दप्रयोगविषयतागोचरः। यदि तद्धर्मिकसंशयविरोधित्वं तन्निश्चयत्वं तदा स्थाणुपुरुषसंशयः। स्थाणुत्वपुरुषत्वेदंधर्मिकसंशयविरोधित्वात् किञ्चित् संशयोऽपि न स्यात्। स्थाणुत्वं पुरुषवृत्ति न वेत्यादिसंशयविरोधित्वात्। चरमसाक्षात्कारस्य तद्धर्मिक-संशयाविरोधित्वं चोक्तमेव। तद्धर्मिकतत्कोटिकसंशयनिवृत्त्यनुकूलस्वरूपविशेषवत् ज्ञानं तद्धर्मिकतत्कोटिकनिश्चय इति विवक्षायां साधु समर्थितम्।

चरमसाक्षात्कारस्य निर्विशेषप्रकाशस्य[१] निश्चयत्वम्। न च ब्रह्मरूपसत्वासत्व-संशयनिवृत्त्यनुकूलस्वरूपविशेषवत्वात् तन्निश्चयत्वमिति वाच्यम्। प्राथमिकज्ञानस्यापि तद्विरोधित्वात् तद्धि निर्विशेषत्वसविशेषत्वसंशयं प्रत्येवाविरोधि। यच्चैककोटिक-ज्ञानस्यानवधारणत्वसमर्थनार्थमुक्तम्। अनभ्यासदशापन्नजलज्ञानानन्तरमिदं जलन्न वेति संशयदर्शनात् तत्संशयकोटिनिक्षिप्तमिति। तदपि ज्ञानप्रामाण्याप्रामाण्यसन्देहादर्थ-सन्देहोपपत्तेः। यदि तस्यार्थसन्देहपर्यवसानं ब्रूषे तर्हि दोषजन्यत्वतदभावसन्देहादर्थ-सन्देहोऽस्तु।

यद्वा प्रामाण्यतदभावकोटिकस्संशयोऽस्तु। तत्र जले जलत्वाभावावगाहनाभावेन विरोधाभावाद्विशेष्यवृत्त्यप्रकारकत्वतदभावसन्देहाद्वा संशयोऽस्तु विशेष्यावृत्तिप्रकारकत्वा-भावाभावत्वेन विशेष्यावृत्तिप्रकारकत्वस्योपस्थितावपि विशेष्यावृत्तिप्रकारकत्वरूपेणानुप-स्थितेः। जलत्ववति जलत्वप्रकारकं तदभाववति वेत्येव प्रामाण्याप्रामाण्यसंशयोऽस्तु। न च तद्वत्वस्य ग्रहात् तत्संशयासंभवः। इदं त्वावच्छेदेन तद्वत्वग्रहात्तदवच्छेदेन

---

[१] क - प्रकारस्य; घ - प्रकाशस्य

तदभावाग्रहाद्विरोधाभावादेकावच्छेदेन भावाभावयोर्ग्रह एव विरोधात्। अन्यथा शुक्ती रजतं न भवतीत्याकाररजतत्वाभावग्रहे रजतभ्रमाभावप्रसङ्गात्।

यद्वाप्रामाण्यज्ञानतत्सामग्र्यासहकृतनिश्चयस्संशयप्रतिबन्धकः। अन्यथा स्वयं युक्त्या निश्चितेऽर्थे बहुज्ञवादिद्वयविवाददर्शनादर्थे प्रामाण्ये च संशयानुपपत्तेः।

किञ्च प्राथमिकज्ञानस्य संशयानिवर्तकत्वादनवधारणत्वं वदता संशयनिवर्तकज्ञानस्यैवेष्यमाणतोक्ता। अद्वैतसाक्षात्कारश्च निष्प्रकारकत्वान्न संशयनिवर्तकः। समानप्रकारकनिश्चयत्वेनैव संशयनिवर्तकत्वात्।

ननु ज्ञानं समानविषयकतया संशयनिवर्तकम्। न तु समानप्रकारकतया अन्यविषयात्तद्दर्शनात् समानविषयत्वमप्यपेक्षणीयमिति चेत् संशयादपि प्रसङ्गः। निश्चयत्वमप्यपेक्षणीयमिति चेत्तर्हि समानविषयनिश्चयस्संशयनिवर्तको लाघवादिति। मैवम्। आत्माश्रयप्रसङ्गात् संशयनिवृत्त्यनुकूलस्वरूपविशेषवत्वं निश्चयत्वमित्युक्तम्। न च विशेषदर्शनप्रभवसमानविषयकज्ञानत्वं संशयनिवर्तकतावच्छेदकमिति वाच्यम्। मीलितनेत्रस्य त्वचा गृह्यमाणे घटे किमयं लोहितो नीलो वेति संशयस्य चक्षुरुन्मीलनानन्तरं जातेन लोहितनिश्चयेनानिवृत्तिप्रसङ्गात्। न हि तल्लोहितज्ञानं विशेषदर्शनजन्यम्।

ननु विशेषदर्शनप्रभवत्वभूयोऽवयवसन्निकर्षजन्यत्वनिकटस्थार्थजन्यत्वादिकमवच्छेदकमिति चेन्न। तेषामन्यतमत्वरूपेणानुगतीभूयावच्छेदकत्वे प्रत्येकं भिन्नभिन्नकार्यतावच्छेदकावच्छिन्नसंशयनिवृत्तिजनकतावच्छेदकत्वे च गौरवाल्लाघवेन समानविषयसमानप्रकारकैककोटिकज्ञानत्वेनैव निवर्त्तकत्वादिदमिति ज्ञानानन्तरं घटो न वेति संशयाभावापत्तेश्च।

ननु घटत्वादिवैशिष्ट्यविषयत्वाभावेन समानविषयत्वं नेति चेत्तत्किं यावत् संशयविषयविषयकत्वेन निवर्तकत्वं तर्ह्यसंभव एव स्थाणुत्वादिनिश्चयस्य पुरुषविषयत्वाभावात्।

नन्वन्यतरकोट्यंशान्यूनविषयत्वं समानविषयत्वं स्थाणुरेवेति निश्चयस्तादृश एव इदमिति धर्मिज्ञानं धर्म्यन्तरे पुरुष इति ज्ञानञ्च न तथा प्रकारवैशिष्ट्यधर्मिणां कोट्यंशविषयत्वादिति चेन्न। निर्विशेषानवधारणजलानवधारणनिवर्तकत्वानुपपत्तेः। तत्र

कोटिशब्दार्थप्रकारस्यान्यतरार्थस्य चाभावात्। किञ्चायं घट इति निश्चयादिदं घटत्वं न वेति संशयनिवृत्तिर्न स्यात्। घटत्वत्ववैशिष्ट्याविषयत्वेनान्यूनविषयत्वाभावात्।

न च विषय एव कोट्यर्थः। इदमिति ज्ञानादपि निवृत्तिप्रसङ्गात्। एवं जीवो ब्रह्म न वेति संशयानिवर्त्तकतापत्तिश्च ब्रह्मकोट्यंशविषयकोटितद्वैशिष्ट्यधर्मिणां चरमाखण्ड-साक्षात्काराविषयत्वान्न चैकब्रह्मस्वरूपस्यैव तत्त्रितयात्मकत्वादन्यूनविषयतेति वाच्या। तथा सत्यभावोऽभावभिन्नो न वेति संशयस्यायं भाव इति ज्ञानान्निवृत्तिप्रसङ्गात्। कोटिविशेषणस्य सर्वज्ञत्वजगत्कारणत्वब्रह्मत्वादेस्तत्राप्रकाशाच्च। तथापि निवर्तकत्वेऽयं ब्राह्मण इति ज्ञानादयं विद्वद्ब्राह्मणो न वेति संशयनिवृत्त्यापत्तेः। किञ्च कुड्यत्वनिश्चयस्य स्थाणुत्वपुरुषत्वकोटिकसंशयनिवर्तकत्वाभावापत्तिः।

ननु समानविषयनिश्चय एव संशयनिवर्तकः। न चेदमिति ज्ञानान्निवृत्तिप्रसङ्गः। कोटिविरुद्धसामानाधिकरण्येनानिश्चीयमानधर्माप्रकारकसमानविषयावधारणत्वस्य विवक्षि-तत्वात् स्थाणुपुरुषसंशयस्य वल्मीकनिश्चयेनापि निवृत्तिदर्शनाद्विरुद्धपदं संशयदशायां कोटिविरुद्धसामानाधिकरण्येन इदं त्वधर्मो न निश्चीयते। स एव स्थाणुरेवायमिति निश्चयदशायां पुरुषकोटिविरुद्धस्थाणुत्वसामानाधिकरण्येन निश्चीयते।

एवञ्च स्थाणुत्वनिश्चये कोटिविरुद्धसामानाधिकरण्येन निश्चीयमानधर्मप्रकार-कत्वात् कोटिविरुद्धसामानाधिकरण्येनानिश्चीयमानधर्माप्रकारकत्वलाभः। अखण्डज्ञाने च निष्प्रकारकत्वादिति चेन्न। कोटिशब्दार्थाभावेन निर्विशेषानवधारणस्य तदवधारणस्य तदवधारणनिवर्त्यत्वानुपपत्तेः। स्थाणुः पुरुषो वेति संशयस्य देवदत्तः पुरुष इति निश्चयान्निवृत्तिप्रसङ्गश्च।

ननु संशयहेत्वज्ञाननिवर्त्तकज्ञानत्वेन संशयनिवर्तकत्वमस्तु। न च [१]ज्ञानसमान-विषयत्वेनाज्ञाननिवर्त्तकत्वात् तादृशाज्ञानसमानविषयकत्वेनैव संशयनिवर्तकता स्यादिति वाच्यम्। तथापि निर्विशेषसाक्षात्कारादेर्निवर्तकत्वसंभवेन प्रकृते क्षत्यभावात्। वस्तुतस्तु समानविषयकत्वस्य संशयेऽपि [२]सत्वात् निश्चयत्वस्यापि प्रवेश्यत्वे गौरवं निश्चयत्वं संशयनिवर्तकत्वमित्यात्माश्रयश्च। निश्चयपदेन विशेषदर्शनजन्यत्वादेः विवक्षितत्वे संशयनिवर्तकाननुगमः। किञ्च चन्द्रत्वाविशेषितचन्द्रे [३]स्वरूपप्रकृष्टप्रकाशादि वाक्यार्थ

[१] क - अज्ञान; घ - ज्ञान

[२] क - संशयात्; घ - सत्वात्

[३] क - स्वरूपमेव; घ - स्वरूप

इति पक्षे चन्द्रत्वविशिष्टविषयाज्ञानं यदि संशयहेतुस्तदा तदज्ञानन्यूनविषयत्वाद्वाक्य-जन्यावधारणात् संशयो न निवर्तेत। यदि तत्स्वरूपमात्रविषयं हेतुः तदा स्थाण्वादावपि तथात्वादिदमिति ज्ञानस्याप्यन्यूनविषयत्वादतिप्रसङ्गस्तदवस्थः।

किञ्च जडस्याज्ञानाविषयत्वात्तदवच्छिन्नचैतन्यस्येदमिति ज्ञानेऽपि विषयत्वादति-प्रसङ्गः। न चाज्ञानावच्छेदकविषयकत्वमेव विवक्षितमिति वाच्यम्। निर्विशेषब्रह्मणो ज्ञानविषयत्वेन तत्साक्षात्कारे तदभावात्। तस्मात् संशयहेत्वज्ञाननिवर्त्तकज्ञानत्वेन संशयनिवर्त्तकत्वमिति चेन्न। स्थाणौ संशयस्य परोक्षनिश्चयादपि निवृत्तेः। तत्राविद्यमानपुरुषत्वनिश्चयादपि निवृत्तेरनुभवसिद्धत्वाच्च। संशयहेत्वज्ञानसमान-विषयत्वमप्यत एव नावच्छेदकम्। अन्यथा स्थाणुसंशयस्य पुरुषत्वनिश्चयादनिवृत्तौ निवृत्तिशब्दविवक्षितस्य संशयानुत्पादस्याज्ञाननिवृत्तौ सत्यां कारणाभावादेव सिद्धेः। निश्चयस्य संशयप्रतिबन्धकतावच्छेदकविचारस्यैवानवकाशात्। तस्मात् संशयहेत्वज्ञानेन समानविषयत्वं वा तन्निवर्तकत्वं वा न संशयनिवर्तकतावच्छेदकम्। तस्मात् संशयधर्मितावच्छेदकावच्छिन्नधर्मिणः संशयकोटिविरुद्धस्य च संसर्गनिश्चयस्संशय-निवर्त्तकः। तेनायं घटो न वेति संशयेऽयं घटः, अत्र घटत्वमिति द्वयोरपि ज्ञानयोरयं पट इति संशयाविषयपटत्वनिश्चयस्य च निवर्त्तकत्वसिद्धिः।

ननु मास्तु तर्हि निर्विशेषनिश्चयस्य संशयनिवर्तकता[१]। अज्ञाननिवर्त्तकत्वादिष्य-माणतास्तु। [२]अज्ञानन्यूनविषयस्य तन्निवर्तकत्वाद्ब्रह्माज्ञानस्य केवलचिद्विषयत्वादिति चेन्न। संशयानिवर्तकत्वे त्वदुक्तलक्षणाक्रान्तस्य संशयत्वेनाज्ञाननिवर्तकत्वस्याप्यनुपपत्तेः।

किञ्च कोट्यभावभानाद्वा तद्विरोधिभानाद्वा निश्चयस्सर्वत्र संशयनिवर्तकः। अखण्डज्ञाने तदुभयभानाभावात् कथं निवृत्तिः। स्वरूपस्यैव भेदकोट्यभावरूपत्वात् कथं भानाभाव इति चेत् किं तत्राभावः प्रतियोगिनिरूपितरुपेण भासते उत स्वरुपेण। नाद्यः, स्वरूपमात्रप्रकाशे प्रतियोगिनो भावेन तन्निरूपितरूपेण भानासिद्धेः।

न द्वितीयः। तथा सति निवर्त्तकत्वासंभवात्। अन्यथा स्वप्रकाशस्वरूपनिर्धारण-मात्रादुक्तसंशयनिवृत्त्यापत्तेः। न च कारणविशेषप्रभवसमानविषयनिर्धारणं निवर्त्तकम्।

---

[१] क - संशयप्रवर्तकता; घ - संशयनिवर्तकता

[२] क - अज्ञानान्यून; घ - अज्ञानन्यून

## ७. निर्विशेषस्य जिज्ञास्यत्वभङ्गः

प्रकृते च कारणविशेषो मननादिरिति वाच्यम्। प्राथमिकज्ञानस्यानवधारणत्वकल्पना वैयर्थ्यात् कारणविशेषस्याननुगमाच्च ।

यच्च द्वितीयं मतं सविशेषत्वभ्रमात् तत्सन्देहाद्वा जिज्ञासा जायते। सा च निर्विशेषोपदेशान्निवर्त्यत इति निर्विशेषगोचरा जिज्ञासेत्युच्यत इति। तत्र किमुपदेशेन स्वरूपमेव बोध्यते किं वातिरिक्तमपि। आद्ये जिज्ञासाया अनिवृत्तिप्रसङ्गः। द्वितीये सविशेषत्वं द्वितीयाभावो बोध्यत इति चेन्न। ब्रह्मणो जिज्ञासानुपपादनात्। द्वितीयाभावविशिष्टरूपेण ब्रह्म प्रतिपाद्यत इति चेन्न, वैशिष्ट्यासिद्धेः। साधनचतुष्टय-पूर्ववृत्तत्वाभावप्रसङ्गाच्च। अपि च सविशेषत्वभ्रमः किमहंकारस्योतात्मनः अथवा विशिष्टस्य। नाद्यः, तस्यैव जिज्ञासाज्ञानमोक्षाणां प्रसङ्गात्। न द्वितीयः, स्वतस्सिद्धाद्वैतापरोक्षनिश्चयस्यात्मनस्तद्भ्रमायोगात्।

न तृतीयः, विशिष्टपदेन विशेषणविशेष्यविवक्षायामुक्तदोषानतिवृत्तेः। अवच्छिन्न-प्रतिबिम्बविवक्षायामपि [१]अवच्छेदप्रतिबिम्बाभावाभ्यामद्वितीयापरोक्षस्वरूपावधारणे कलयापि वैकल्याकरणात् भ्रमासंभव एव। ताभ्यां भेद एव हि संपाद्यते, न तु प्रकाशवैकल्यम्। अथ भेदे सत्यविद्योपाधिमाहात्म्यात् अद्वैतापरोक्ष्ये विद्यमान एव जीवस्य भ्रम उपपद्यते। दृश्यते हि चन्द्रैकत्वे भासमान एव दोषमाहात्म्यात् द्वित्वभ्रमः। दृश्यते च [२]तीरस्थवृक्ष और्ध्वाग्रत्वे भासमान एव जलोपाधिमाहात्म्यादधोऽग्रत्वभ्रम इति चेत् तद्वदेव भ्रमस्य ज्ञाननिवर्त्यत्वप्रसङ्गात्। उपाधिनिवृत्त्यैव हि तत्र भ्रमनिवृत्तिः।

ननु तत्रैकत्वोर्ध्वाग्रत्वयोरुपाध्यविरोधित्वात् तत्साक्षात्कारेण नोपाधिनिवृत्तिः। इह त्वविद्योपाधेरप्यद्वैतविरोधित्वात् भवत्येव विरोधिसाक्षात्कारान्निवृत्तिरिति चेन्न। तथा सति स्वरूपापरोक्ष्ये जाग्रत्यविद्याध्यासस्यैवासंभवात्। आवरणोपाधिना तदुपपत्तावन्योऽन्या-श्रयादविद्याधीनमावरणमावरणाधीनाविद्येति। किञ्चाविद्यावदावरणस्याप्यद्वैतविरोधित्वेन तस्यैवासंभवात् कथं तस्याविद्योपपादकत्वम्।

ननु निवर्त्तकसन्निधाने निवर्त्यस्थित्यनुपपत्या अद्वैतसाक्षात्कारे विद्यमाने आवरणाध्यासासंभवो वाच्यः। निवर्तकञ्चाप्रतिबन्धकज्ञानमेव। इह चाविद्यावरणयोः परस्परमध्यासोपाधितया परस्परनिवृत्तिप्रतिबन्धकतयाप्रतिबन्धज्ञानासिद्धेरविद्याया

---

[१] क - अनवच्छेद; घ - अवच्छेद

[२] क - तटस्थ; घ - तीरस्थ

आवरणस्य वा नानुपपत्तिरिति चेन्न। तथा सति अविद्यातत्संबन्धयोरेव परस्परोपाधित्व-संभवेनावरणत्वकल्पनानुपपत्तेः। अविद्यातत्संबन्धावरणाध्यासानामनादितया औपाधिकाध्यासत्वासिद्धेश्च। उपाधिरूपदोषविशेषजन्यत्वेऽविद्योपाधिकत्वम्।

किञ्च निवर्तकत्वमुपजीव्य नेह विरोधं ब्रूमः। किन्तु ज्ञानाज्ञानयोः ज्ञानतदभावयोरिव विरोधादेव। अन्यथा अहमज्ञ इति प्रतीतेः कथं तत्र प्रामाण्यम्। किञ्च ज्ञाने सत्यज्ञाननिवृत्तौ ज्ञानाभाव इव न प्रतिबन्धस्संभवः क्वाप्यदर्शनात् सोपाधिकभ्रमस्थले दृष्टमिति चेन्न, और्ध्वाग्रत्वज्ञानेन तदज्ञानस्य निवृत्तेरानुभाविकत्वात्। तथापि तदनङ्गीकारे ज्ञानस्याज्ञाननिवर्तकत्वस्यैवोत्सादात् कथं तर्ह्यधोऽग्रत्वाध्यासः। ब्रह्माज्ञानादेवेति ब्रूहि क्षणमात्रमनन्तरञ्च निपुणं निरूप्य जलोपाधिवशादेवेति।

यच्च तृतीयं मतम् - अप्रतिबद्धापरोक्षज्ञानमविद्यानिवर्त्तकं तदेवेष्यते। इदानीं विद्यमानं स्वरूपापरोक्ष्यं वृत्तिज्ञानं वाप्रतिबद्धमेवेति न तदविद्यानिवर्तकं प्रतिबन्धकभेद-वासनेति। तदप्यविद्याभ्रमसंभवोपपादनादेव निरस्तम्।

किञ्च भेदवासनायाः प्रतिबन्धकत्वं चासिद्धम्। बहुकालं रजतभ्रमवासनायां विद्यमानायामेव शुक्तिज्ञानेनाविद्यानिवृत्तिदर्शनात्।

किञ्च तस्याः प्रतिबन्धकत्वे तस्या अविद्यानिवृत्तेः प्राक् केनाप्यनिवृत्या तन्निवृत्तिसापेक्षाविद्यानिवृत्तिः कदापि न स्यात्। निदिध्यासनेन भेदवासनायां निवृत्तायामनन्तरोत्पन्नं ज्ञानमविद्यां निवर्त्तयतीति चेन्न। निदिध्यासनस्यादृष्टमुखतो निवर्तकत्वे तदन्तर्गतत्रिचतुरव्यक्तिमात्रेण भेदवासना निवर्तेत। दृष्टमुखत्वेऽनादिसिद्धाया भेदवासनाया अनन्ताभेदवासनयैव निवृत्तिप्रसङ्गः।

किञ्चाभेदवासनाया भेदवासनाविरोधित्वं तद्वासनायास्तद्विपरीतवासनाविरोधित्वं वा क्वाप्यदृष्टचरं प्रत्युत तेजस्तिमिरवासनयोरविरोधित्वमेव हि दृश्यते। त्वयाथ घटाद्यर्थानामपि संस्कारस्य स्वीकारात् चन्द्रैकत्ववासनायां विद्यमानायामेवाङ्गुल्यवष्टंभेन भेदवासना दृश्यते। सा च वासना बहुकालमनुवृत्तापि चन्द्रैकत्ववासनां न निवर्तयति। अपि च भेदवासनायां निवृत्तायां चरमसाक्षात्काररूपवृत्युत्पत्तिश्चानुपपन्ना। तद्भ्रमस्या-भेदवासनासाध्यत्वात्।

किञ्च निदिध्यासनस्य चेतोवृत्तिरूपभेदस्य ध्यानदशायां ज्ञायमानतया निदिध्यासनेन भेदवासना वज्रकीलिता स्यात्। किञ्चाभेदवासनया भेदवासनानिवृत्तौ

निदिध्यासनस्यैवेष्यमाणता स्यात्, न तु तज्जन्यज्ञानस्येति। न जिज्ञासाभेदवासनानिवृत्तावुत्तरकालं भेदाध्याससंभवेन बन्धस्यैवासिद्धेः। भेदवासनाया भेदभ्रमहेतुत्वाभ्युपगमादविद्या न निवृत्तेति चेत् किं ततः विद्यमानाया अपि तस्यास्संसारहेतुत्वात्। अत एव ह्यात्मनस्सहकारिवशात् संसरणहेतुत्वेऽपि सहकारिभूताविद्यानिवृत्तौ संसरणनिवृत्तये तन्निवृत्त्यनपेक्षा।

किञ्च ज्ञानस्याज्ञाननिवर्तकत्वेन प्रतिबन्धसंभव इति प्रागेवोक्तम्। यच्च तत्वज्ञानस्य प्रतिबन्धादज्ञानानिवर्तकत्वे निदर्शनं विशेषदर्शनम्। यथा प्रतिबन्धान्न प्रतिबिम्बभ्रमं निवर्तयति तथा प्रतिबन्धादज्ञानं निवर्तयतीति तन्न। तत्र विशेषदर्शनस्य तन्निवर्तनायोग्यत्वात् प्रतिबन्धकानपेक्षणाद्विशेषदर्शनजन्यभ्रमस्यैव विशेषदर्शननिवर्त्यत्वात्।

ननु विशेषदर्शनविषयविरुद्धविषयभ्रमत्वमेव निवर्त्यतावच्छेदकं विशेषादर्शनजन्यभ्रमत्वापेक्षया लघुत्वात् विरोधस्य नियमघटितत्वेऽपि जन्यत्वस्यानन्यथासिद्ध्यादि घटितत्वेन ततोऽपि गुरुत्वादिति चेन्न। विशेषदर्शनमन्तरेणोपाधिनिवृत्त्या निवृत्तिस्थले व्यभिचारेण तस्य तदवच्छेदेन निवर्तकत्वाभावात्।

न चोपाधिनिवृत्त्याद्यनिवर्त्यत्वेन विशेषणान्न व्यभिचार इति वाच्यम्। उपाधिनिवृत्याद्यनिवर्त्यसोपाधिकभ्रमस्यासत्वेन तदर्थं प्रतिबन्धकल्पनावैयर्थ्यात्।

किञ्चोपाधिनिवृत्तीत्यादिनोपाधिनिवृत्यनिवर्त्यत्वव्यासङ्गानिवर्त्यत्वादिकं हि विवक्षितम्। तत्र चोपाधिनिवृत्यजन्यत्वस्थाने विशेषादर्शनजन्यत्वमेव निवेश्यतां लाघवात्। उपाधिनिवृत्यनिवर्त्यत्वस्योपाधिनिवृत्तिजन्यनिवृत्तिप्रतियोगित्वाभावप्रवेशेन गौरवात्। किञ्चैवं विशेषदर्शनविषयविरुद्धविषयभ्रमत्वमिति विशेष्यभावोऽपि न वक्तव्य इति लाघवम्।

ननु पक्षद्वयेऽपि व्यासङ्गादितत्तदनेकानिवर्त्यत्वविशेषणे गौरवात् विशेषदर्शनासमवहितसामग्र्यनिवर्त्यत्वमेव विशेषणम्। ततश्च पूर्वोक्तलाघवं स्थितमेव। न चैवमपि प्रतिबन्धककल्पनावैयर्थ्यम्। सोपाधिकभ्रमस्योपाधिनिवृत्तिनिवर्त्यत्वादिति वाच्यम्। यत्र विशेषदर्शनसमकालोत्पत्तिकोपाधिनिवृत्त्या भ्रमनिवृत्तिः। तत्र विशेषदर्शनासमवहितसामग्र्यनिवर्त्य भ्रमत्वस्य सत्वेनोपाधिकालीनविशेषदर्शनादनिवृत्यर्थं प्रतिबन्धककल्पनात्।

न च विशेषदर्शनस्य विद्यमानस्यापि भ्रमनिवर्तकविप्रतिपत्तेः। तदसमवहितसामग्र्यजन्यत्वानिश्चयान्न प्रतिबन्धककल्पनेति वाच्यम्। विशेषदर्शनासमवहितपदेन

विशेषदर्शनासमानकालीनत्वस्य विवक्षितत्वादिति चेन्न। विशेषदर्शनकालीनविशेषादर्शन-जन्यभ्रमत्वस्यैव विशेषदर्शनासमवहितसामग्र्यनिवर्त्यविशेषदर्शनविषयविरुद्धविषयभ्रमत्वा-पेक्षया लघुत्वेनावच्छेदकत्वात्।

ननु तर्हि विशेषदर्शनकालीनविशेषदर्शनविषयविरुद्धविषयभ्रमत्वमेवावच्छेदक-मस्तु लाघवादिति चेन्न। विशेषदर्शनोत्तरकालोत्पन्नस्योपाधिकभ्रमस्य विशेषदर्शनं विनाप्युपाधिनिवृत्त्यैव निवृत्तिदर्शनेन व्यभिचारेण तस्यानवच्छेदकत्वात्तदर्थमुपाधि-निवृत्त्यनिवर्त्यत्वेन वा विशेषदर्शनासमानकालीनसामग्र्यनिवर्त्यत्वेन वा विशेषणे गौरवात्।

किञ्च विशेषदर्शनविषयविरुद्धविषयभ्रमत्वस्यावच्छेदकत्वे संयोगाद्यवच्छेदक-मूलाद्यवच्छेदेन संयोगाभावभ्रमस्य तदवच्छेदेन संयोगवत्वस्याप्यदर्शनानिवर्त्यत्वापत्तिः। विशेषदर्शनविषयमूलादिगतधर्मविरोधित्वाभावात् [1]भ्रमविषयसंयोगाभावस्य [2]आमघटे रक्तत्वभ्रमस्य च रक्तत्वाभावनिरूपितकालिकव्याप्तिमादाय यदामत्वादिविशेषदर्शनं तेनानिवर्त्यत्वापत्तिः। विशेषदर्शनविषयामत्वादिविरोधित्वाभावात् भ्रमविषयरक्तत्वस्य पाकानन्तरं तत्रैव रक्तत्वोत्पत्तेः। विशेषादर्शनजन्यत्वं तु तत्राप्यस्तीति नास्मन्मते दोषः।

न च विशेषदर्शनविषयेण सहैकस्मिन् काले एकावच्छेदेन सहानवस्थायिविषयक-भ्रमत्वमेवावच्छेदकमिति दोषद्वयनिस्तारः। एतद्वृक्षत्वादेर्मूलावच्छेदेन संयोगव्याप्यत्वग्रहे तद्दर्शनस्य मूलावच्छेदेन संयोगाभावभ्रमविरोधित्वात्। तत्र चैकावच्छेदेन सहानवस्थायित्वस्याप्यभावात् घटत्वस्य च दशाविशेषे रक्तत्वाभावव्याप्यत्वग्रहे तद्दर्शनस्य तद्दशायां रक्तत्वभ्रमविरोधित्वात्, तत्र च एककाले सहानवस्थायित्वस्याप्यभावात्।

किञ्च त्वन्मते स्फटिकत्वादिविशेषदर्शनेन लौहित्यभ्रमस्य प्रतिबिम्बस्थल इव निवर्त्यत्वं वाच्यम्। तत्र च परंपरासंबन्धेन लौहित्यस्य स्फटिके सत्वात् विरोधाभावान्न निवर्तकता स्यात्।

ननूपाधिनिवृत्त्याद्यनिवर्त्यत्वादिना न विशेष्यते। किन्तु विशेषदर्शनाव्यवहित-पूर्वक्षणवर्तित्वेनातो न गौरवम्।

---

[1] क - भ्रमविशेष; घ - भ्रमविषय

[2] क - श्यामघटे; घ - आमघटे

## ७. निर्विशेषस्य जिज्ञास्यत्वभङ्गः

यदप्युक्तम् - विशेषदर्शनविषयविरुद्धविषयभ्रमत्वस्यावच्छेदकत्व इत्यादि। तदपि न। विशेषदर्शनविषयपदेन [१]व्याप्यत्वेन गृह्यमाणव्यापकस्य विवक्षिततत्वात्। एतद्वृक्षत्वस्य संयोगविशेषो व्यापकः।

यदपि किञ्च त्वन्मत इत्यादि तदपि न भ्रमविषयसंबन्धेन विरोधित्वस्य विवक्षिततत्वात् भ्रमविषयसाक्षात् संबन्धेन लौहित्यस्यापि स्फटिकत्वादिविरुद्धत्वादिति चेत् उच्यते - यत्र सोपाधिकभ्रमः द्वितीयक्षणोत्पन्नोपाधिनिवृत्तिमात्रेण तृतीयक्षणे भ्रमनिवृत्तिः तत्क्षण एव च विशेषदर्शनं चोत्पद्यते। तद्भ्रमे उक्तनिवर्त्यतावच्छेदकस्य सत्वेन व्यभिचारात्तदर्थं विशेषदर्शनाव्यवहितपूर्वक्षणोत्पत्तिकत्वं वक्तव्यम्। उत्पत्तिश्च स्वसमानकालीनपदार्थप्रतियोगिकध्वंसानाधारसमयसंबन्धः। अव्यवहितत्वञ्च विशेष-दर्शनानधिकरणक्षणानन्तरितत्वं पूर्वक्षणश्च प्रागभावावच्छिन्नक्षणः व्यापकत्वञ्च प्रतियोगिवैयधिकरण्यावच्छेदकावच्छिन्नस्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वम्। तथा च विशेषदर्शनक्षणाव्यवहितपूर्वक्षणोत्पत्तिकत्वे सति विशेषव्यापकेन सहैकस्मिन् काले एकावच्छेदेन भ्रमविषयसंबन्धेन सहानवस्थायिविषयकभ्रमत्वापेक्षया विशेषादर्शनकालीन-विशेषादर्शनजन्यभ्रमत्वस्यैव लघुत्वेनावच्छेदकत्वात्।

ननु विशेषदर्शनाधिकरणक्षणाव्यवहितपूर्वविशेषदर्शनाधिकरणक्षणवर्तिभ्रमत्वरूपं विशेषदर्शनप्रथमक्षणवर्तिभ्रमत्वं मम कार्यतावच्छेदकम्। तव तु विशेषदर्शनसमकाल-विशेषादर्शनजन्यभ्रमत्वमिति जन्यत्वप्रवेशाद्गौरवमिति चेत्, ऐश्वरीयाहार्याप्रामाण्यसंशया-क्रान्तपरोक्षसंशयरूपविशेषदर्शनैः समकालेषु भ्रमेषु यथोक्तकार्यतावच्छेदकस्याति-प्रसङ्गात्। तद्वारणार्थं समानाधिकरणानाहार्याप्रामाण्यज्ञानशून्यप्रत्यक्षनिश्चयसमकालीन-त्वमवच्छेदकं वाच्यम्। तत्राप्यप्रामाण्यज्ञाने सामानाधिकरण्यमनाहार्यत्वञ्च विशेषणं वाच्यमित्यतिगौरवम्। अस्मन्मते तु नैवमिति प्रसङ्गः, तद्विशेषदर्शनसमकालतदभावजन्य भ्रमत्वस्य तन्निवर्त्यतावच्छेदकत्वादाहार्यत्वञ्चेच्छाजन्यत्वादिकमिति जन्यत्वप्रवेश उभयोस्तुल्यः।

किञ्च विशेषदर्शने सत्यपि सोपाधिकभ्रमस्थले भ्रमनिवृत्त्यदर्शनेन तदुपपादनाय तद्विलक्षणस्य भ्रमविशेषस्य वा निवर्त्यत्वं कल्पनीयम्। सामान्यतो वा निवर्तकत्वं परिकल्प्य प्रतिबन्धो वा कल्पनीयः। तत्रातिप्रसङ्गपरिहाराय निवर्त्यतावच्छेदके किञ्चित्

---

[१] क - व्यापकत्त्वेन; घ - व्याप्यत्वेन

[1]विशेषणाप्रक्षेप उचितो लाघवात्, न तु स्वातन्त्र्येण, प्रतिबन्धकतावच्छेदककल्पना-गौरवात्। अन्यथा श्वैत्यानुमितेरपि शंखपीतत्वभ्रमनिवर्तकत्वापत्तिविशेषणसाक्षात्कारत्वा-पेक्षया लाघवाद्विशेषणज्ञानत्वेनैव निवर्तकत्वकल्पने तदनुसारेण प्रतिबन्धकत्व-कल्पनोपपत्तेः।

न चेष्टापत्तिः - शाब्दापरोक्षसाधनविरोधात्। किञ्च विशेषदर्शनं विनाप्युपाधि-निवृत्या निवृत्तिदर्शनेन सोपाधिभ्रमत्वावच्छेदेन निवर्तकत्वकल्पनात्तदभावादेव भ्रमानिवृत्त्युपपत्तौ न तत्र प्रतिबन्धक्कल्पना। न च व्यासङ्गादिनापि [2]तन्निवृत्तेः व्यभिचारः व्यासङ्गाद्यजन्यत्वेन विशेषणात्।

वस्तुतस्तु पूर्वभ्रमो विशेषदर्शनेन विरोधिगुणतया निवृत्त इति न तत्र प्रतिबन्धः। अतो विशेषदर्शनस्य प्रतिबन्धकत्वमुपाधेश्चोत्तेजकत्वमिति पर्यवसितम्। तथा च नेदं प्रकृतार्थनिदर्शनम्। निदिध्यासनस्य प्रतिबन्धनिरासार्थतायां च न मानम्। न चाप्रतिबन्ध-ज्ञानोद्देशेन विधानं मानं द्रष्टव्य इति दर्शनस्यैव प्रतीतेः।

यच्च चतुर्थं मतमापातप्रतीतिरेव धर्मज्ञानम्। सा च विचारात् प्रागेव साङ्गा-ध्ययनेन विदितपदपदार्थसङ्गतिकाद्वाक्यादेवोत्पद्यते। सा च ब्रह्मणि सत्त्वप्रकारिका। सत्त्वप्रकारकत्वादेवाखंडविषयाज्ञानं न निवर्तयति। तन्निवर्तकं चाखण्डमेव निष्प्रकारकं ज्ञानम्। तस्य चानुत्पत्तेस्तज्ज्ञानेच्छा संभवति। सैव जिज्ञासेति।

तदनुपपन्नम्, सत्त्वप्रकारकज्ञानस्यापातत्वं ह्यविद्यानिवृत्त्यनर्हत्वम्, तच्च भिन्नविषयत्वात् भ्रमत्वाच्चेत्यभिमतम्। तच्च नोपपद्यते। विशिष्टविषयस्याप्यज्ञानसमान-विषयत्वात् भ्रान्तित्वेऽपि शुक्तिरजतज्ञानस्य शुक्तिगतद्रव्यत्वविषयस्य द्रव्यत्वाज्ञान-निवर्तकत्वात्। न चाधिकविषयत्वादनिवर्तकता शुक्तिज्ञानस्य शुक्तिगतरूपादिविषयत्वेऽपि शुक्त्यज्ञाननिवर्तकत्वात्।

न च विशिष्टविषयत्वादखण्डाज्ञानसमानविषयत्वाभावः जिज्ञासाया अपि समान-विषयधर्मज्ञानसाध्यत्वेन सत्त्वविशिष्टज्ञानस्याखण्डजिज्ञासाजनकत्वोपवर्णनविरोधात्। न चाज्ञानमखण्डत्वविषयं सत्त्वविशिष्टज्ञानं तु न तथेति वाच्यम्। अखण्डत्वस्य स्वरूपातिरेके जडत्वेनाज्ञानाविषयत्वात् स्वरूपत्वे सत्त्वविशिष्टज्ञानविषयत्वावश्यंभावात्।

---

[1] क - विशेषणप्रक्षेप; घ - विशेषणाप्रक्षेप

[2] क - तदुत्पत्तेः; घ - तन्निवृत्तेः

## ७. निर्विशेषस्य जिज्ञास्यत्वभङ्गः

न चाखण्डत्वप्रकारकज्ञानमेव तत्प्रकारकाज्ञाननिवर्तकं निष्प्रकारकज्ञानस्यैव निवर्तकत्वमिति सिद्धान्तभङ्गात्तदभ्युपगमे चावरणकल्पनावैयर्थ्यात् निवर्तकीभूततादृश-ज्ञानाभावादध्यासाद्यनुपपत्तेः। अखण्डत्वादि प्रकारकज्ञानस्यापि सत्त्वविशिष्टज्ञानवद्विदित-पदार्थसङ्गतिकस्य विचारात् प्रागेवोत्पत्तेश्च।

न च वाक्यद्वयाद्विरुद्धानेककोट्युपस्थितौ मानससंशयाज्जिज्ञासोपपत्तिरिति वाच्यम्। अद्वैतवाक्यजन्यप्राथमिकाखण्डत्वप्रकारकज्ञानादेवाज्ञाननिवृत्तौ कुतस्संशयः कुतस्तरां जिज्ञासेति ।

## इति निर्विशेषस्य जिज्ञास्यत्वभङ्गः ।।

## ८. देवतान्तरोपास्यत्वभङ्गः

[१]'**येनाक्षारं पुरुषं वेद**' इति वेद्यदेवतां निर्धारयाञ्चकार। देवताविशेष-निर्धारणार्थत्वे हि 'येन पुरुषं वेद तां ब्रह्मविद्यां प्रोवाच' इति सन्दर्भविशेषोऽयं समञ्जसो भवति। अन्यथा पूर्वखण्डानाञ्जस्यात्। पुरुषशब्दस्य श्रुतिस्मृतिप्रयोगानुशासनैः भगवदभिधानत्वाच्छ्रुतिस्तावत् कूर्मरूपिणं भगवन्तं प्रस्तुत्य [२]'**पूर्वमेवाहमिहासमिति। तत्पुरुषस्य पुरुषत्वम्**' इति। अत्र च [३]'**तस्य भावस्त्वतलौ**' इति सूत्रे '**सर्वे भावास्स्वेन भावेन भवन्ति**' इति वार्तिकेन शब्दाभिधायिभ्यो गवादिशब्देभ्यो जातिगुणादिषु प्रवृत्तिनिमित्तेषु प्रत्यय इति यः पक्ष उपन्यस्तः यश्च यस्य गुणस्य भावा द्रव्ये शब्दनिवेशस्तदभिधाने '**त्वतलौ**' इति वार्तिकोपन्यस्तोऽर्थवाचिभ्यो गवादिशब्देभ्यो जात्यादिषु प्रवृत्तिनिमित्तेषु प्रत्यय इति पक्षः। तत्राद्यपक्षे तस्य गवादिशब्दस्य भावः प्रवृत्तिनिमित्तमिति लाभादिह पुरुषत्वमित्यस्य पुरुषशब्दस्य प्रवृत्तिनिमित्तमित्यर्थः। अत्र वाच्यत्वं शब्दस्यैवार्थः।

द्वितीयपक्षे तु पुरुषत्वमित्यत्र प्रकृतेरर्थपरत्वेन पुरुषस्येत्यत्र पौनरुक्त्या-दनन्वयाच्छब्दपरत्वं लक्षणयापि स्वीकर्तव्यमित्यनया श्रुत्या वाच्यत्वसिद्धिः। निर्वचनानां च वाच्यतातात्पर्यकत्वेन विवादः। अत्र [४]'**अन्तरतः कूर्मं भूतं सर्पन्तम्**' इति कूर्माकृतियोगेन नारायणत्वप्रतीतिः। यद्यपि '**ते पश्यन् पुरोडाशं कूर्मं भूतं सर्पन्तम्**' इत्यादिष्वन्यत्रापि कूर्माकृतियोगः प्रतीयते। तथापि -

---

[१] तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय।
**येनाक्षरं पुरुषं वेद** सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्।। (मुण्डक.१.२.१३)

[२] नेत्यब्रवीत्। **पूर्वमेवाहमिहासमिति**। **तत्पुरुषस्य पुरुषत्वम्**। स सहस्रशीर्षा पुरुषः। सहस्राक्षः सहस्रपात्। भूत्वोदतिष्ठत्। तमब्रवीत्। त्वव्वै पूर्वं समभूः। त्वमिदं पूर्वः कुरुष्वेति। स इत आदायापः। (तै.आ.१.२३.४)

[३] पाणिनि.सू.५.१.११९.

[४] ये नखाः। ते वैखानसाः। ये वालाः। ते वालखिल्याः। यो रसः। सोऽपाम्। **अन्तरतः कूर्मं भूतं सर्पन्तम्**। तमब्रवीत्। मम वै त्वङ्मांसा। समभूत्। (तै.आ.१.२३.३)

## ८. देवतान्तरोपास्यत्वभङ्गः

[१]'**यदि वा पूर्वमेवाहमिहेति पुरुषं विदुः।**
**यदि वा बहुदानाद्वै विष्णुः पुरुष उच्यत**'

इति पाद्मोपबृंहणात् '**पूर्वमेवाहमिहासम्**' इत्यादौ प्रतिपन्नानादित्वस्रष्टृत्वादिसहचरितं कूर्माकृतिमत्वं भगवतोऽसाधारणमन्यत्र तत्प्रसिद्ध्यभावात्। अत एव '**तद्वा इदमग्रे सलिलमासीत् स प्रजापतिः प्रजाः स्रष्टुं लोकानवपश्यमानो बभ्राम। सोऽन्तः सलिले विचरन्तं कूर्ममपश्यत्। तमपृच्छत् कस्त्वमिति। सोऽब्रवीत् पुरुषोऽहमिति। तं प्रजापतिरब्रवीत् कः पुरुष इति। सोऽब्रवीत् येनेदं सत्येन ज्योतिषा काष्ठमिवाग्निना पूर्णं स वै पुरुष इति। तं प्रजापतिः प्रणिपत्याब्रवीत्। भगवन् येन तेन रूपेण जगदिदं पूर्णं तन्मे दर्शय प्रसीदेति तस्मै प्रदर्शयन्नारसिंहमनाद्यन्तं ज्योतिर्मयम्**' इति श्रूयते।

तापनीये पञ्चमखण्डे [२]'**तथा परात्परं पुरिशयं पुरुषमीक्षत**' इति च श्रूयते। तत्र हि '**पूस्संज्ञे वै शरीरेऽस्मिञ्छयनात् पुरुषो हरिः**' इति स्मृत्यनुसारात् पुरिशयत्वनिमित्तकं पुरुषशब्दवाच्यत्वपुरुषमित्यनेन विवक्षितम्। तत्र [३]'**यत्तत्कवयो वेदयन्त**' इति वाक्येन [४]'**तद्विष्णोः परमं पदं सदा पश्यन्ति सूरय**' इति श्रुतसूरिदृश्यपदप्रत्यभिज्ञानात् 'ईक्षति' कर्मणो विष्णुत्वावगतिः। [५]'**परात्परं यन्महतो महान्तम्**' [६]'**परात्परं पुरुषमुपैति दिव्यम्**' [७]'**परात्परं पुरिशयं पुरुषमीक्षत**' इत्यादिषु परात्परशब्दार्थविवरणे प्रवृत्तेन [८]'**परादपि**

---

[१] वाच.५, पृ.४३७७.(पाद्मोत्तरे)

[२] यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत, स तेजसि सूर्ये सम्पन्नः यथा पादोदरस्त्वचा विनिर्मुच्यत एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात् **परात्परं पुरिशयं पुरुषमीक्षते**। (प्र.उ.५.५)

[३] ऋग्भिरेतं यजुर्भिरन्तरिक्षं सामभिः **यत्तत्कवयो वेदयन्ते**।
तमोंकारेणैवायतनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परञ्चेति।। (प्र.उ.५.७)

[४] नृ.पू.ता.उ.८.३.

[५] अतः परं नान्यदणीयसं हि **परात्परं यन्महतो महान्तम्**।
यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात्।। (म.ना.उ.१.५)

[६] यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय।
तथा विद्वान् नामरूपाद्विमुक्तः **परात्परं पुरुषमुपैति दिव्यम्**।। (मुण्डक.३.२.८)

[७] प्र.उ.५.५.

[८] नारायणः परं ब्रह्म तत्वं नारायणः परः।
**परादपि परश्चासौ नास्ति तस्मात्परात्परः**।। (महा.आनु.५१४)

**परश्चासौ नास्ति तस्मात्परात्परः**' [१]'**संज्ञाभेदैः स एवैकः सर्वशास्त्राभिसंस्तुत**' इति पुण्डरीकनारदसंवादनिबन्धेनानुशासनिकोपबृह्मणेन तथैव स्पष्टत्वाच्च। तथा स्मृतिरपि। वाधूलसूत्रे तावत् [२]'**यत्र यत्र कर्मभ्रंशो यज्ञभ्रंशो वा तत्र पुरुषं चिन्तयन् पुरुषसूक्तं जपेत्। पूर्णत्वात् पुरुष इति विज्ञायते**' इति। योगयाज्ञवल्क्ये '**ईश्वरं पुरुषाख्यं तु सत्यधर्माणमच्युतम्**' इति। यमस्मृतौ-

[३]'**रविमध्ये स्थितस्सोमस्सोममध्ये हुताशनः।**
**तेजो मध्ये स्थितं सत्वं सत्वमध्ये स्थितोऽच्युतः।।**'
'**एष देवस्तु मर्त्यानां एतैरेव विधीयते**।'
[४]'**एष वै पुरुषो विष्णुः व्यक्ताव्यक्तस्सनातन**'

इत्यादिना प्रकृतमच्युतम् '**एष वै विष्णुः**' इत्यनूद्य पुरुषशब्दवाच्यत्वादिकं विधीयते। सहस्रनामसु [५]'**अव्ययः पुरुषः साक्षी**' इति। प्रकृते उद्योगपर्वणि नामनिर्वचनाध्याये [६]'**पूराणात् सदनाच्चापि ततोऽपि पुरुषस्स्मृतः**' इति। भीष्मपर्वणि-

'**एतत् पुरुषसंज्ञं वै पुराणं रूपमुत्तमम्**।
[७]'**एतत्पुरुषसंज्ञं वै जायते हीयते न च**' इति।

मोक्षधर्मे- [८]'**तस्यैकस्य महत्वं हि स चैकः पुरुषस्स्मृत**' इति।

---

[१] वासुदेवं तथा विष्णुमात्मानं च तथा विभुः।
**संज्ञाभेदैः स एवैकः सर्वशास्त्राभिसंस्तुतः**।। (महा.आनु.५१४)

[२] वाधूलसूत्रम्

[३] ह्यद्यर्कश्चन्द्रमाः सूर्यः सोमो मध्ये हुताशनः।
तेजो मध्ये स्थितं तत्वं तत्वमध्ये स्थितोऽच्युतः।। (शंख.स्मृ.७.१८)

[४] **एष वै पुरुषो विष्णुः व्यक्ताव्यक्तस्सनातनः**।
एष धाता विधाता च पुराणोनिष्कलः शिवः।। (शंख.स्मृ.७.२१)

[५] पूतात्मा परमात्मा च मुक्तानां परमा गतिः।
**अव्ययः पुरुषः साक्षी** क्षेत्रज्ञोऽक्षर एव च।। (महा.आनु.१४९.१५)

[६] **पूराणात् सदनाच्चापि ततोऽसौ पुरुषोत्तमः**।
असतश्च सतश्चैव सर्वस्य प्रभवाप्ययात्।। (महा.उद्योग.७०.११)

[७] एतदक्षरमव्यक्तमेतद्वै शाश्वतं महत्।
**यत्तत्पुरुषसंज्ञं वै जायते हीयते न च**। (महा.शान्ति.६६.१६)।

[८] **तस्यैकस्य महत्वं हि स चैकः पुरुषस्स्मृतः**।
महापुरुषशब्दं स बिभर्त्येकः सनातनः।। (महा.शान्ति.३५१.९)

## ८. देवतान्तरोपास्यत्वभङ्गः

तथा - [1]'**स ह्यन्तरात्मा भूतानां क्षेत्रज्ञश्चेति कल्प्यते।**

**त्रिगुणव्यतिरिक्तोऽसौ पुरुषश्चेति कल्प्यत**' इति।

राजधर्मे युधिष्ठिरः - [2]'**त्वामेकमाहुः पुरुषं त्वामाहुस्सर्वतो गतिम्**' इत्यत्र '**त्वामेकम्**' इत्यन्वयात् त्वामेवेत्यर्थः। [3]'**मामेकं शरणम्**' इतिवदेकं पुरुषमित्यन्वयस्तु व्यवधानान्न युक्तः। तेन पुरुषशब्दस्य भगवदसाधारण्यसिद्धिः। तथा श्रीमति वैष्णवे पुराणे -

[4]'**भगवानिति शब्दोऽयं तथा पुरुष इत्यपि।**

**निरुपाधी च वर्तेते वासुदेवे सनातन**'

इत्यत्र '**निरुपाधी**' इत्यनेन मुख्यार्थसंबन्ध[5]तत्सामनिमित्तकोपचारव्यवच्छेदः। अत्र निरुपाधिकत्वकीर्तनमन्यत्र सोपाधिकत्वाभिप्रायम्। अत एव पाद्मे -

'**ब्रह्माद्याः सकला देवा यक्षतुंबुरुनारदाः।**

**ते सर्वे पुरुषांशत्वादुच्यन्ते पुरुषा इति**' इति

भगवतोऽन्यत्र सोपाधिकत्वं तस्योक्तम्।

[6]'**तस्य पूज्यपदार्थोक्तिपरिभाषासमन्वितः।**

**शब्दोऽयं नोपचारेण ह्यन्यत्र ह्युपचारत**'

इत्यन्यत्रौपचारिकत्वेन निर्णीतभगवच्छब्दसमभिव्याहारोऽप्येवं सत्यवकल्पते दृष्टान्ताभिप्रायत्वात्। अन्यथा भगवद्वाचकत्वस्यान्यत्रौपचारिकत्वस्य च तत्र '**पूज्य**' इति श्लोकादेव सिद्धत्वेन पुनरत्र भगवच्छब्दोपादानवैकल्यात्। तच्च '**तथा पुरुष इत्यपि**' इति। तथा शब्देन भगवच्छब्दधर्मातिदेशेन स्पष्टीकृतम्। तथा भागवते -[7]'**भूतैर्महद्भिर्य इमाः पुरो**

---

[1] महा.शान्ति.३३४.३०.

[2] **त्वामेकमाहुः पुरुषं त्वामाहुस्सात्वतां पतिम्।**
नामभिस्त्वां बहुविधैः स्तुवन्ति प्रयता द्विजाः।। (महा.शान्ति.४३.४)

[3] सर्वधर्मान् परित्यज्य **मामेकं शरणं** व्रज।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः।। (महा.भीष्म.४२.६६)(भ.गी.१८.६६)

[4] भगवानिति शब्दोऽयं तथा पुरुष इत्यपि।
वर्तते निरुपाधिश्च वासुदेवोऽखिलात्मनि।। (पाद्म.पु.६.२२६.६८)

[5] क - तत्साध्य; घ - तत्साम

[6] विष्णु.पु.६.५.७७.

[7] **भूतैर्महद्भिर्य इमाः पुरो विभुर्निर्माय शेते यदमूषु पूरुषः।**
भुङ्क्ते गुणान् षोडशात्मकः सोऽलं कृषीष्ट भगवान् वचांसि मे।। (भा.पु.२.४.२३)

**विभुर्निर्माय शेते यदमूषु पूरुष**' इति। [१]'**पुरिशयं पुरुषम्**' इति श्रुत्यनुसारेण 'पुरि शेते' इति पुरुष इति निर्वचनपूर्वकं पुरुषशब्दवाच्यत्वमुक्तम्। तत्रैव - [२]'**सृष्टं स्वशक्त्येदमनुप्रविष्टं चतुर्विधं पुरमात्मांशकेन। अतो विदुस्त्वां पुरुष**' इति। नारसिंहपुराणे -

'**य एव वासुदेवोऽयं पुरुषः प्रोच्यते बुधैः।**
**प्रकृतिस्पर्शराहित्यात् स्वातन्त्र्याद्वै भवादपि।।**'
'**स एव वासुदेवोऽयं साक्षात् पुरुष उच्यते।**
**स्त्रीप्रायमितरत्सर्वं जगद्ब्रह्मपुरस्सरम्**'

इति सनिमित्तकं वासुदेवस्य वाचकतया पुरुषशब्दमाद्यपद्येनानूद्य स एव साक्षात्पुरुष उच्यत इति तस्यान्यत्रामुखत्वमुच्यते। साक्षादिति मुख्यत्वस्याभिधानाद्यत्साक्षादपरोक्षात् ब्रह्मेतिवत्। तत्र हि प्रत्यगात्मन्युपचरितप्रयोगदर्शनात् तद्व्यावृत्त्यर्थं साक्षादिति विशेषणं मुख्यार्थसंबन्धव्यवधानं निराकुर्वद्ब्रह्मशब्दस्य मुख्यताभिप्रायमुक्तम्। अन्येषामवाच्यत्वविधेश्चार्थवादः स्त्रीप्रायमित्यादि। एतेन [३]'**अपशवो वा अन्ये गो अश्वेभ्यः पशवो गो अश्वानेवास्मै समीचो दधाति**' इत्यसाधारण्येन गवाश्वानां पशुत्वोक्तिवदेतानि वचनानि पुरुषधर्मपौष्कल्येन वासुदेवप्रशंसापराणीति परास्तम्। '**य एव वासुदेवोऽयम्**' इत्यादेरुक्तवासुदेवादन्येषां पुरुषशब्दावाच्यत्वविधेरेव स्वरसतः प्रतीतेः। तस्य च '**निरुपाधी च वर्तेत**' इति स्मृत्यन्तरानुग्रहाद्वेदोपबृंहणार्थपुराणापेक्षितवेदान्तार्थनिर्णयोपाधिकत्वेन सप्रयोजनत्वात्[४] मानान्तराविरोधाच्च उक्तार्थ उपपन्नः। अपशव इत्यादिवाक्यं तु '**सप्त ग्राम्याः पशव**' इत्यादिश्रुत्यन्तरविरोधात् प्रत्यक्षविरोधात्। '**अपशवोऽन्ये पशव**' इति स्ववचनविरोधादपशुत्वविधिप्रयोजनाभावाद्वै शब्दोपबन्धात् 'समीच' इत्यभिधानात् विध्यन्तरशेषत्वाच्च 'अपशव' इत्यत्र पशुशब्दस्य प्रशस्तपशुत्वनिमित्तकोपचारत्वमभ्युप-

[१] यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत, स तेजसि सूर्ये सम्पन्नः यथा पादोदरस्त्वचा विनिर्मुच्यते एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकम्। स एतस्माज्जीवघनात् परात्परं **पुरिशयं पुरुष**मीक्षते। तदेतौ श्लोकौ भवतः। (प्र.उ.५.५)

[२] **सृष्टं स्वशक्त्येदमनुप्रविष्टश्चतुर्विधं पुरमात्मांशकेन।**
**अथो विदुस्त्वां पुरुषं** सन्तमन्तर्भुङ्क्ते हृषीकैर्मधु सारवम्।। (भा.पु.४.२४.६५)

[३] पश्चात् प्राचीनमृषभस्य **अपशवो वा अन्ये गो अश्वेभ्यः पशवो गो अश्वानेवास्मै समीचो दधाति** एतावन्तो वै पशवः।(तै.सं.५.२.९.४)

[४] क - प्रबलत्वात्; घ - सप्रयोजनत्वात्

## ८. देवतान्तरोपास्यत्वभङ्गः

गम्य गवाश्वान्यवाद इत्युक्तम् [१]'**तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिङ्गसमवायात्**' इत्यत्र। एवं स्कान्दे -

'**यथा भास्करशब्दोऽयमादित्ये प्रतितिष्ठति।**
**यथा चाग्नौ बृहद्भानुर्यथा वायौ सदागतिः।।**
**यथा पुरुषशब्दोऽयं वासुदेवेऽवतिष्ठते।**
**तथा शङ्करशब्दोऽयं [२]उमादेवे व्यवस्थित**'

इत्यत्र '**व्यवस्थित**' इत्यसाधारण्यमुच्यते। तत्र दृष्टान्तः 'पुरुषशब्द' इति। तस्याप्यसाधारण्यं सिद्धम्। यत्तु स्कान्द एव -

'**पुरुषो नाम संपूर्णः शिवस्सत्यादिलक्षणः।**
**साम्बमूर्तिधरो नान्यो रुद्रो विष्णुरजोऽपि च**'

इति वचनं तदुदाहृतश्रुतिस्मृतिविरोधात्। न पुरुषशब्दस्य रुद्रासाधारण्यपरं तद्यथोक्तं स्कान्दे। वचनेनापि विरोधेन स्वव्याघातस्यापि प्रसङ्गात्। तस्मादेवं व्याख्येयम्। रुद्रगायत्र्यादिषु पुरुषशब्देन रुद्रो विष्णुरजोऽपि न प्रतिपाद्यते, किन्तु साम्बमूर्तिधरश्शिव एव। अतः सोऽन्येभ्यः प्रशस्ततर इति तस्य च प्रशंसामात्रपरत्वम्। पुरुषशब्दो भगवदसाधारणः। रुद्रासाधारण्यस्यापि प्रसङ्गादिति वदता परेणाप्यभ्युपगतमेव[३]।

इयांस्तु विशेषः- द्वयोरपि वचनयोः प्रशंसापरत्वं परैरुच्यते तत्वदर्शिभिस्तूक्तरीत्या रुद्रासाधारण्यवचनस्य प्रशंसामात्रपरत्वं रुद्रोत्कर्षप्रतिपादनपरप्रकरणस्थस्य शङ्कर-शब्दासाधारण्यप्रतिपादनपरस्य दृष्टान्ततया पुरुषशब्दस्य भगवदसाधारण्यं प्रतिपादयतो भगवत उत्कर्षे तात्पर्याभावात् भास्करादितत्तद्देवतासाधारणशब्ददृष्टान्तान्तरप्रायपाठाच्च तत्वपरत्वमेवेति।

अपि च [४]'**भगवानिति शब्दोऽयम्**' इत्यादिवचनेषु पुरुषशब्दस्यासाधारण्यं '**निरुपाधी च वर्तेते**' इत्यादिना कण्ठत एवोच्यते। '**यथा पुरुषशब्दोऽयं वासुदेवेऽवतिष्ठत**' इति च '**पुरुषो नाम**' इति वचने तु न तथा पुरुषो नामेति तु मुख्य-

---

[१] 'तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिङ्गसमवाया इति गुणाश्रयाः' इति समग्रसूत्रम्। अत्र विद्यमानानि सूत्राणि - 'तत्सिद्धिः' (मी.सू.१.४.२३) 'जातिः' (मी.सू.१.४.२४) 'सारूप्यात्' (मी.सू.१.४.२५) 'प्रशंसा' (मी.सू.१.४.२६) 'भूमा' (मी.सू.१.४.२७) 'लिङ्गसमवायात्'(मी.सू.१.४.२८) इति।

[२] क - महादेवे; घ - उमादेवे

[३] रुद्रगायत्र्यां हि तत्पुरुष इति रुद्रः कथ्यते, न तु पुरुष इति।

[४] पाद्म.पु.६.२२६.६८.

लक्षणावृत्तिसाधारण्येन पुरुषशब्दविवक्षितत्वमात्रपरत्वेनाप्युपपन्नत्वान्न वाच्यतासाधकम्। वैष्णवे धर्मशास्त्रे -

[1]"**पुरमाक्रम्य सकलं शेते यस्मान्महाप्रभुः।**
**तस्मात् पुरुष इत्येवं प्रोच्यते तत्वचिन्तकैः**' इति।

मोक्षधर्मे - [2]"**वैकुण्ठः पुरुषो विष्णुः शुक्लोऽनन्तस्सनातनः।**
**मुञ्जकेशो हरिश्मश्रुः सर्वभूतपितामह**' इति।

अत्रापौनरुक्त्याय वाच्यत्वे तात्पर्यं ग्राह्यम्। मात्स्ये पौष्करप्रादुर्भावे -[3]"**स कर्ता कारको बुद्धिर्मनः क्षेत्रज्ञ एव च**' [4]"**प्रणवः पुरुषस्साक्षादेकं ज्योतिर्विभाव्यते**' '**साक्षात्**' इति मुख्यतयाभिप्रायम्। तत्रैवाष्टचत्वारिंशच्छततमेऽध्याये-

[5]"**रहस्यारण्यकोद्दिष्टं यच्चौपनिषदं स्मृतम्**'
[6]"**पुरुषो यज्ञ इत्येतद्यत्परं** [7]**परिकीर्त्यते।**
**यच्चान्यत् पुरुषाख्यः स्यात् स एष पुरुषोत्तम**'

इति गदरहस्यारण्यकैः प्रतिपाद्यं, यच्च [8]"**तं त्वौपनिषदं पुरुषम्**' इत्यादौ '**औपनिषदम्**' इत्युक्तं, यच्चात्रैव [9]"**सहस्रशीर्षा पुरुष**' इत्यादौ च 'पुरुष' इत्युक्तं, यच्च तत्रैव पुरुषसूक्ते [10]"**यज्ञेन यज्ञमयजन्त**' इत्यादिषु 'यज्ञ' इत्युक्तं वस्तु स पुरुषोत्तम एव। यत्तु [1]"**ततोऽन्यत्**

---

[1] विष्णु.स्मृ.९७.१५.

[2] वैकुण्ठः पुरुषोऽनन्तः **शुक्लो** विष्णुस्सनातनः।
मुञ्जकेशो हरिश्मश्रुः सर्वभूतपितामहः।। (महा.शान्ति.२७९.२९)

[3] स यज्ञो वेदनिर्दिष्टस्तत्तपः कवयो विदुः।
**य कर्ता कारको बुद्धिर्मनः क्षेत्रज्ञ एव च**।। (मत्स्य.पु.१६३.२२)

[4] **प्रणवः पुरुषः शास्ता एकश्चेति विभाव्यते**।
प्राणः पञ्चविधश्चैव ध्रुव अक्षर एव च।। (मत्स्य.पु.१६३.२३)

[5] याथातथ्यं परं ज्ञानं भूतं तद् ब्रह्मणा पुरा।
**रहस्यारण्यकोद्दिष्टं यच्चौपनिषदं स्मृतम्**।।(मत्स्य.पु.१६६.४)

[6] मत्स्य.पु.१६६.५.

[7] क - परिकीर्तितम्; घ - परिकीर्त्यते

[8] एतान्यष्टावायतनान्यष्टौ लोका अष्टौ देवा अष्टौ पुरुषाः स यस्तान्पुरुषान्निरुह्य प्रत्युह्यात्यक्रामत् **तं त्वौपनिषदं पुरुषं** पृच्छामि तं चेन्मे न विवक्ष्यसि मूर्धा ते विपतिष्यतीति। (बृ.उ.५.९.२६)

[9] **सहस्रशीर्षा पुरुषः** सहस्राक्षस्सहस्रपात्। स भूमिं विश्वतो वृत्वा अत्यतिष्ठद्दशाङ्गुलम्। (पु.सू.१)

[10] **यज्ञेन यज्ञमयजन्त** देवास्तानि धर्माणि प्रथमान्यासन्।

## ८. देवतान्तरोपास्यत्वभङ्गः

[१]“**ततोऽन्यत् पुरुषाख्यम्**’ जीवरूपं वस्तु तदपि पुरुषोत्तम एव। तदंश एवातः पुरुषशब्देनोच्यत इत्यभिप्रायः।

यद्वा यच्चान्यत् पुरुषाख्यं भिन्नोपनिषत्प्रतिपाद्यत्वोपाधिनान्यदिति भेदनिर्देशः। यच्चोपनिषदन्तरे पुरुषशब्दाभिधेयं तत्सर्वं स एव पुरुषोत्तम इत्यर्थः। भागवते एकादशस्कन्धे -

[२]“**भूतैर्यदा पञ्चभिरात्मसृष्टैः पुरा विराजं विरचय्य तस्मिन्।**
**स्वांशेन विष्टः पुरुषाभिधानमवाप नारायण आदिदेव**’

इति प्रयोगश्च। आरुणकेतुके तत्पुरुषस्य पुरुषत्वमिति पुरुषस्येति कूर्माकृति-लिङ्गावगमितनारायणाख्यधर्मिविशेषनिर्देशात् तदिन्द्रस्येन्द्रत्वमितिवत्। कठवल्ल्यां [३]“**अव्यक्तात्पुरुषः परः। पुरुषान्न परं किञ्चित्**’ इति। अत्र [४]“**सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्**’ इति प्राप्यस्याभिधानात् पुरुषशब्दो विष्णुविषयः।

नन्वत्र कठवल्ल्यां [५]“**तत्ते पदं सङ्ग्रहेण ब्रवीम्योम्**’ इति पदस्य वक्तव्यत्वेनोपक्रमात् ‘**सोऽध्वनः पारम्**’ इति गन्तव्यदेशपर्यवसानत्वेन प्राप्यत्वेन चाभिधानाच्च पदमेवात्र प्रतिपाद्यम्। तच्च पद्यत इति व्युत्पत्त्या प्राप्यपरम्। ‘विष्णोः’ इति च कर्तरि षष्ठी। इदञ्च [६]“**रुद्र यत्ते जनिम**’ इति मन्त्रेण पराशरपुराणकाशीखण्डस्थ वचोपबृंहितेन[७] शिवप्रसादाद्विष्णोः परमपदलाभवर्णनाद्युक्तं परमशब्दयोगनिमित्ता पञ्चमी

---

ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः।।(पु.सू.१८)

[१] मत्स्य.पु.१६६.५.

[२] भा.पु.११.४.३.

[३] महतः **परमव्यक्तमव्यक्तात्पुरुषः परः**।
पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः।। (कठ.उ.१.३.११)

[४] विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः।
**सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्**।।(कठ.उ.१.३.९)

[५] सर्वे वेदा यत्पदमामनन्ति तपाँसि सर्वाणि च यद्वदन्ति।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति **तत्ते पदँ संग्रहेण ब्रवीम्योमित्येतत्**।। (कठ.उ.२.१५)

[६] तव श्रिये मरुतो मर्जयन्त **रुद्र यत्ते जनिम** चारु चित्रम्।
पदं यद्विष्णोरूपमं निधायि पासि गुह्यं नाम पासि गोनाम्।। (ऋग्वेद.५.३.३)

[७] ब्रह्मविष्ण्वादिदेवानां सृष्टिस्थित्यन्तकर्तृता।
भोगमोक्षप्रदत्वं च शिवस्यास्य प्रसादतः।। (पराशर.पु.५.६)

वा। उभयथापि विष्णोरन्यत् पदम्। एवञ्च पुरुषशब्दस्तत्परः, न विष्णुपरः। [१]'**पुरुषान्न परम्**' इति परनिषेधात् विष्णोः परस्यात्रैव श्रवणात् पदस्य प्रधानत्वाच्चेति चेन्न। पूर्वखण्डे

[२]'**कामस्याप्तिं जगतः प्रतिष्ठां क्रतोरनन्तमभयस्य पारम्।**
**स्तोमं महदुरुगायं प्रतिष्ठां दृष्ट्वा धृत्या धीरो नचिकेतोऽत्यस्राक्षीः।**
**तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्।**
**अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति**'

इत्युरुगायस्य ज्ञेयत्वेन प्रतिष्ठात्वेन चाभिधानेन तस्यैव प्राप्यत्वात् उरुगायशब्दश्च भगवति सुप्रसिद्धः। किञ्च वैष्णवे पुराणे [३]'**यत्तदव्यग्रमजरम्**' इत्यादिना भगवत्स्वरूपं [४]'**यत्तदद्रेश्यम्**' इति श्रुत्यनुसारेणानुक्रम्य,

[५]'**व्याप्यं व्याप्तं यतः सर्वं तद्वै पश्यन्ति सूरयः**'
[६]'**तद्ब्रह्म परमं धाम तद्ध्येयं मोक्षकाङ्क्षिणाम्।**
**श्रुतिवाक्योदितं सूक्ष्मं तद्विष्णोः परमं पदम्।।**'
[७]'**तदेव भगवद्वाच्यं स्वरूपं परमात्मन**'

---

शिवशङ्करुद्रेशब्रह्मेशानादिनामभिः।
श्रुतिस्मृतिपुराणाद्यैरुच्यते परमं पदम्।। (पराशर.पु.२.३९)
विष्णुनारायणाद्यैस्तु नामभिः सकलैरपि।
श्रुतिस्मृतिपुराणाद्यैर्नोच्यते परमं पदम्।। (पराशर.पु.२.४०)

[१] कठ.उ.१.३.११.

[२] कामस्याप्तिं जगतः प्रतिष्ठां क्रतोरानन्त्यमभयस्य पारम्।
स्तोमं महदुरुगायं प्रतिष्ठां दृष्ट्वा धृत्या धीरो नचिकेतोऽत्यस्राक्षीः।। (कठ.उ.२.११-१२)

[३] **यत्तदव्यग्रमजर**मचिन्त्यमजमव्ययम्।
अनिर्देश्यमरूपं च पाणिपादाद्यसंयुतम्।। (विष्णु.पु.६.५.६६)

[४] **यत्तदद्रेश्य**मग्राह्यमगोत्रमवर्णमचक्षुः श्रोत्रं तदपाणिपादम्।
नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः।। (मुण्डक.१.१.६)

[५] विभुं सर्वगतं नित्यं भूतयोनिरकारणम्।
**व्याप्यं व्याप्तं यतः सर्वं यद्वै पश्यन्ति सूरयः**।। (विष्णु.पु.६.५.६७)

[६] तद्ब्रह्म परमं धाम तद्ध्येयं **मोक्षकाङ्क्षिभिः।**
श्रुतिवाक्योदितं सूक्ष्मं तद्विष्णोः परमं पदम्।। (विष्णु.पु.६.५.६८)

[७] **तदेव भगवद्वाच्यं स्वरूपं परमात्मनः।**
वाचको भगवच्छब्दस्तस्याद्यस्याक्षयात्मनः।। (विष्णु.पु.६.५.६९)

## ८. देवतान्तरोपास्यत्वभङ्गः

इत्युक्त्या भगवच्छब्दं निरुच्य

[1]'**एवमेष महाशब्दो मैत्रेय भगवानिति।**
**परमब्रह्मभूतस्य वासुदेवस्य नान्यग**'

इत्यन्तेनात्रत्यपदशब्दस्य भगवत् स्वरूपपरतया व्याख्यानात्। अत्र [2]'**सोऽध्वनः पारम्**' इति '**तद्विष्णोः**' इति हि च श्रुतिमभिप्रेत्य श्रुतिवाक्योदितमित्युक्तम्। अर्थतश्शब्दतश्च तत्प्रत्यभिज्ञापनात्। नारायणोपनिषदि -

[3]'**रुद्रं तु सारथिं कृत्वा मनः प्रग्रहवान् पुमान्।**
**स याति परमं पारं विष्णवाख्यं परमं पदम्**'

इत्यध्वनः पारत्वेन परमपदत्वेन विष्णोरेवाभिधानाच्च। [4]'**समस्तहेयरहितं विष्णवाख्यं परमं पदम्**' [5]'**एतद्ब्रह्म परं योगी यतो नावर्तते पुन**' इति च। [6]'**तुष्टाव वाग्भिरिष्टाभिः परावरपतिं हरिम्**' इत्यारभ्य[7] '**तत्पदं परमं विष्णोः प्रणमामि सदामलम्।**'

---

[1] विष्णु.पु.६.५.७६.

[2] विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः।
**सोऽध्वनः पारमाप्नोति तद्विष्णोः** परमं पदम्।। (कठ.उ.१.३.९)

[3] ना.उ.३.

[4] एवं प्रकारममलं नित्यं व्यापकमक्षयम्।
**समस्तहेयरहितं विष्णवाख्यं परमं पदम्**।। (विष्णु.पु.१.२२.५३)।

[5] **तद्ब्रह्मपरमं योगी यतो नावर्तते पुनः।**
श्रयत्यपुण्योपरमे क्षीणक्लेशोऽतिनिर्मलः।। (विष्णु.पु.१.२२.५४)

[6] स गत्वा त्रिदशैः सर्वैः समवेतः पितामहः।
**तुष्टाव वाग्भिरिष्टाभिः परावरपतिं हरिम्**।। (विष्णु.पु.१.९.३९)

[7] नमामि सर्वं सर्वेशमन्तमजमव्ययम्। लोकधाम धराधारमप्रकाशमभेदिनम्।।
नारायणमणीयांसमशेषाणामणीयसाम्। समस्तानां गरिष्ठं च भूरादीनां गरीयसाम्।।
यत्र सर्वं यतः सर्वमुत्पन्नं मत्पुरःसरम्। सर्वभूतश्च यो देवः पराणामपि यः परः।।
परः परस्मात्पुरुषात्परमात्मस्वरूपधृक्। योगिभिः चिन्त्यते योऽसौ मुक्तिहेतोर्मुमुक्षुभिः।।
सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः। स शुद्धः सर्वशुद्धेभ्यः पुमानाद्यः प्रसीदतु।।
कलाकाष्ठामुहूर्त्तादिकालसूत्रस्य गोचरे। यस्य शक्तिर्न शुद्धस्य स नो विष्णुः प्रसीदतु।।
प्रोच्यते परमेशो हि यः शुद्धोप्युपचारतः। प्रसीदतु स नो विष्णुरात्मा यः सर्वदेहिनाम्।।
यः कारणं च कार्यं च कारणस्यापि कारणम्। कार्यस्यापि च यः कार्यं प्रसीदतु स नो हरिः।।
कार्यकालस्य यत्कार्यं तत्कार्यस्यापि यः स्वयम्। तत्कार्यकार्यभूतो यस्ततश्च प्रणताः स्म तम्।।

[1]'**शक्तयो यस्य देवस्य ब्रह्मविष्णुशिवात्मिकाः।**
**भवन्त्यभूतपूर्वस्य तद्विष्णोः परमं पदम्।।**'
[2]'**यन्मयं भगवन् ब्रह्मा जानाति परमं पदम्।**
**तन्नताः स्मः जगद्धातस्तव सर्वगताच्युत।।**'
[3]'**अव्यक्तमविकारं यत्तद्विष्णोः परमं पदम्।**'
[4]'**यन्न देवा न मुनयो न चाहं न च शङ्करः।**
**जानन्ति परमेशस्य तद्विष्णोः परमं पदम्।।**'
[5]'**यद्योगिनः सदोद्युक्ताः पुण्यपापक्षयेऽव्ययम्।**
**पश्यन्ति प्रणवेऽचिन्त्यं तद्विष्णोः परमं पदम्।।**'
[6]'**शुद्धज्ञानं प्रपश्यन्ति विष्ण्वाख्यं परमं पदम्**'

इत्येतैः वैष्णवपुराणवचनैश्च विष्णुस्वरूपस्यैव परमपदत्वेनोक्तेश्च।

[7]'**अविकारमजं शुद्धं निर्गुणं यन्निरञ्जनम्।**
**नताः स्म तत्परं ब्रह्म विष्णोर्यत्परमं पदम्**'

इत्यत्र च हरिस्तोत्रप्रक्रमात् स्वरूपपरत्वम्।

[1]'**एवं प्रकारममलं नित्यं व्यापकमक्षयम्।**

---

कारणं कारणस्यापि तस्य कारणकारणम्। तत्कारणानां हेतुं तं प्रणताः स्म परेश्वरम्।।
भोक्तारं भोग्यभूतं च स्रष्टारं सृज्यमेव च । कार्यकर्तृस्वरूपं तं प्रणाताः स्म परं पदम्।।
विशुद्धबोधवन्नित्यमजमक्षयमव्ययम्। अव्यक्तमविकारं यत्तद्विष्णोः परमं पदम्।।
न स्थूलं न च सूक्ष्मं यन्न विशेषणगोचरम्।
**तत्पदं परमं विष्णोः प्रणमामः सदामलम्**।। (विष्णु.पु.१.९.३९-५२)

[1] विष्णु.पु.१.९.५६.

[2] विष्णु.पु.१.९.५९.

[3] विशुद्धबोधवन्नित्यमजमक्षयमव्ययम्।
**अव्यक्तमविकारं यत्तद्विष्णोः परमं परम्**।। (विष्णु.पु.१.९.५१)

[4] विष्णु.पु.१.९.५५.

[5] यद्योगिनः सदोद्युक्ताः **पुण्यपापक्षयेऽक्षयम्**।
पश्यन्ति प्रणवेऽचिन्त्यं तद्विष्णोः परमं पदम्।। (विष्णु.पु.१.९.५४)

[6] शुद्धे च तासां मनसि शुद्धेऽन्तः संस्थिते हरौ।
**शुद्धज्ञानं प्रपश्यन्ति विष्ण्वाख्यं परमं पदम्** ।। (विष्णु.पु.१.६.१३)

[7] विष्णु.पु.१.१४.३८.

## ८. देवतान्तरोपास्यत्वभङ्गः

**समस्तहेयरहितं विष्णवाख्यं परमं पदम्**' इति।

तथा- [२]'**त्वमव्यक्तमनिर्देश्यमचिन्त्यानामवर्णवत्।**
**अपादपाणिरूपञ्च शुद्धं नित्यं परं पदम्**' इति।

[३]'**एकस्त्वमग्र्यं परमं पदं यत् पश्यन्ति त्वां सूरयो ज्ञानदृश्यम्**' इति च स्वरूपं पदमित्युक्तम्। वाराहे आरुणिस्सत्यतपसं प्रत्युवाच -

[४]'**पुत्र सिद्धोऽसि तपसा ब्रह्मभूतोऽसि सुव्रत।**
**इदानीमात्मना सार्धं मुक्तिकालमवैमि ते।।**
**उत्तिष्ठ गम्यतां पुत्र मया सार्धं परं पदम्।**
**यद्गत्वा न पुनर्जन्म भवतीति न संशयः।।**
**एवमुक्त्वा तु तौ सिद्धौ उभौ सत्यतपारुणी।**
**ध्यात्वा नारायणं देवं सह तेन लयं गतौ**'

इति वचनात्। तत्रैव- [५]'**यत्सत्वं स हरिर्देवो यो हरिस्तत्परं पदम्**' इत्यपि वचनाच्च। हरिवंशे गोमन्तयाने जामदग्न्यवाक्ये -

[६]'**तत्र ते कृष्णसंग्रामे सुव्यक्तं वैष्णवं पदम्।**
**ईक्ष्यन्ति रिपवस्सर्वे सुराश्च सुरभावन।।**'
[७]'**भजस्व स्वां गदां कृष्ण चक्रं च चिरविस्मृतम्**'

इति दर्शनात् पदशब्दः स्वरूपपरः। कौर्मे इन्द्रद्युम्नस्तोत्रे [८]'**यज्ञेशाच्युत गोविन्द**' इत्यारभ्य [१]'**प्रपद्ये भवतो रूपं तद्विष्णोः परमं पदम्**' इतीयं श्रुतिर्विवृता। मात्स्ये [२]'**अहं**

---

[१] विष्णु.पु.१.२२.५३.

[२] त्वमव्यक्तमनिर्देश्य**मचिन्त्यानामवर्णवत्।**
अपाणिपादरूपं च शुद्धं **नित्यं परात्परम्।।** (विष्णु.पु.५.१.४०)

[३] **एकस्त्वमग्र्यं परमं पदं यत् पश्यन्ति त्वां सूरयो ज्ञानदृश्यम्।**
त्वत्तो नान्यत्किञ्चिदस्ति स्वरूपं यद्वा भूतं यच्च भव्यं परात्मन्।। (विष्णु.पु.५.१.४६)

[४] वराह.पु.९८.३२-३४.

[५] **यत्सत्वं स हरिर्देवो यो हरिस्तत्परं पदम्।**
ये सत्त्वरजसो सोऽपि ब्रह्मा कमलसंभवः।। (वराह.पु.७०.१७)

[६] ह.वं.२.३९.७६.

[७] **तां भजस्व गदां कृष्ण चक्रं च चिरविस्मृतम्।**
भजस्व स्वेन रूपेण सुराणां विजयाय च।। (ह.वं.२.३९.७७)

[८] **यज्ञेशाच्युत गोविन्द** माधवानन्त केशव। कृष्ण विष्णो हृषीकेश तुभ्यं विश्वात्मने नमः।

**सांख्यमहं योगमहं तत्परमं पदम्**' इत्यादि बहुद्रष्टव्यम्। इयञ्च कठवल्लीशंखादिभिर्नारायण-परत्वेनोपबृंहिता।

'**पञ्चविंशकमव्यक्तं षड्विंशः पुरुषोत्तमः।**
**एतज्ज्ञात्वा तु मुच्यन्ते यतयश्शान्तबुद्धयः।**
[३]'**अशब्दमस्पर्शमरसमरूपागन्धमव्ययम्।**'
[४]'**अनादिनिधनं यच्च तद्विष्णोः परमं पदम्।**'
[५]"**विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः।**
**सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्**' इति।

शङ्खलिखितस्मृतौ-

[६]"**अशब्दमस्पर्शमरसमरूपं गन्धवर्जितम्।**

---

नमोऽस्तु ते पुराणाय हरये विश्वमूर्तये। सर्गस्थितिविनाशानां हेतवेऽनन्तशक्तये।
निर्गुणाय नमस्तुभ्यं निष्कलायामलात्मने। पुरुषाय नमस्तुभ्यं विश्वरूपाय ते नमः।
नमस्ते वासुदेवाय विष्णवे विश्वयोनये। आदिमध्यान्तहीनाय ज्ञानगम्याय ते नमः।
नमस्ते निर्विकाराय निष्प्रपञ्चाय ते नमः। भेदाभेदविहीनाय नमोऽस्त्वानन्दरूपिणे।
नमस्ताराय शान्ताय नमोऽप्रतिहतात्मने। अनन्तमूर्तये तुभ्यममूर्ताय नमो नमः।
नमस्ते परमार्थाय मायातीताय ते नमः। नमस्ते परमेशाय ब्रह्मणे परमात्मने।
नमोस्तु ते सुसूक्ष्माय महादेवाय ते नमः। नमः शिवाय शुद्धाय नमस्ते परमेष्ठिने।
त्वयैव सृष्टमखिलं त्वमेव परमा गतिः। त्वं पिता सर्वभूतानां त्वं माता पुरुषोत्तम।
त्वमक्षरं परं धाम चिन्मात्रं व्योमनिष्कलम्। सर्वस्याधारमव्यक्तमनन्तं तमसः परम्।
प्रपश्यन्ति परात्मानं ज्ञानदीपेन केवलम्।
**प्रपद्ये भवतो रूपं तद्विष्णोः परमं पदम्**।। (कूर्म.पु.१.१.६८-७८)

[१] कूर्म.पु.१.१.७८.

[२] **अहं सांख्यमहं योगोऽप्यहं तत्परमं पदम्।**
अहमिज्या क्रिया चाहमहं विद्याधिपः स्मृतः।। (मत्स्य.पु.१६६.५६)

[३] इदन्तु परमं शुद्धमेतदक्षरमुत्तमम्।
**अशब्दरसस्पर्शममरूपं गन्धवर्जितम्**।। (शंख.स्मृ.७.२९)
**अशब्दमस्पर्शममरूपमव्ययं** तथारसं नित्यमगन्धवच्च यत्।
अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते।। (कठ.उ.१.३.१५)

[४] अजं निरञ्जनं शान्तमव्यक्तं ध्रुवमक्षरम्।
**अनादिनिधनं यच्च तद्विष्णोः परमं पदम्**।। (शंख.स्मृ.७.३०)

[५] कठ.उ.१.३.९.

## ८. देवतान्तरोपास्यत्वभङ्गः

**निर्दुःखमसुखं शुद्धं तद्विष्णोः परमं पदम्।।'**
[२]'**विज्ञानसारथिर्यस्तु मनः प्रग्रहवान् नरः।**
**सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्**'

इत्यनन्तरम् [३]'**इन्द्रियेभ्यः परा ह्यर्था**' इत्यादिकठवल्लीवाक्यमेव [४]'**सा काष्ठा सा परा गतिः**' इत्यन्तं पठित्वोक्तम्।

[५]'**स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम्।**
**ध्याननिर्मथनाभ्यासाद्विष्णुं पश्येद्धृदि स्थितम्**'

इत्युक्त्वा [६]'**अणोरणीयान् महतो महीयान्**' इति मन्त्रं पठित्वा '**एष देवस्तु मर्त्यानां पटैरिव विधीयते**' [७]'**एष वै पुरुषो विष्णुर्व्यक्ताव्यक्तः सनातन**' इति। ब्राह्मपुराणे च '**भगवन् शङ्करादिभ्यो वासुदेवाच्च कोऽधिक**' इति प्रश्नोत्तरत्वेन वासुदेवाधिक्य-प्रदर्शनायोपन्यस्ताः।

'**तथा च भगवन्मृत्युर्नाचिकेतं समागतम्।**
**पृच्छतं प्राह विप्रं तं यमो धीरतरोऽपि सन्।**
[८]'**यस्य ब्रह्म च क्षत्रञ्च उभे भवत ओदनः।**
**मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः।।**'
'**ग्रसेत् संहारसमये जगच्च बदराण्डवत्।**
**लीलया यस्तु भगवांस्तं गच्छ शरणं हरिम्।।**'

---

[१] शंख.स्मृ.७.२९.
[२] शंख.स्मृ.७.३१.
[३] **इन्द्रियेभ्यः परा ह्यर्था** अर्थेभ्यश्च परं मनः।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महात्मनः।। (कठ.उ.१.३.१०) (शंख.स्मृ.७.३३)
[४] महतः परमव्यक्तमव्यक्तात्पुरुषः परः।
पुरुषान्न परं किञ्चित् **सा काष्ठा सा परा गतिः**।। (शंख.स्मृ.७.३४)
[५] **स्वं देहमरणिं कृत्वा प्रणवं चोत्तरारणिम्।**
**ध्याननिर्मथनाभ्यासाद्विष्णुं पश्येद्धृदि स्थितम्**।। (शंख.स्मृ.७.१७)
[६] **अणोरणीयान् महतो महीया**नात्मास्य जन्तोर्निहितो गुहायाम्।
तेजोमयं पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः।। (शंख.स्मृ.७.१९)
[७] **एष वै पुरुषो विष्णुर्व्यक्ताव्यक्तः सनातनः।**
एष धाता विधाता च पुराणो निष्कलः शिवः।। (शंख.स्मृ.७.२१)
[८] कठ.उ.१.२.२५.

**'सर्वभूतात्मभूतस्य विष्णोः को वेदितुं गुणान्।**
**शक्तो महेश्वरादन्यः पार्वत्याश्चाथवा भवेत्**'

इत्यत्र '**ग्रसेत्**' इत्यादिश्लोकेनोदाहृतश्रुतेः पूर्वांशो विवृतः। '**सर्वभूत**' इत्यारभ्य '**क इत्था**' इत्यादिरिति द्रष्टव्यम्। [१]'**तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्**' [२]'**तत्ते पदं संग्रहेण प्रवक्ष्ये**' इत्यारभ्य [३]'**ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्**' इत्यन्तेन स्वरूपपरतया भगवतैव गीतम्। अत्र प्रणवप्रतिपाद्यतया श्रुतं पदं स्वयमेवेति भगवदाशयः स्पष्टः। ब्रह्मसिद्धान्ते च [४]'**भयादस्याग्निस्तपति**' इति कठवल्लीमन्त्रो नारायणपरतयार्थतः स्पष्टीकृतः।

[५]'**अस्मान्नारयणाद्भीषा वातः पवत एव हि।**
**उदेति सूर्यो मृत्युश्च यावतीन्द्रोऽपि वर्षति**'

इत्येवं श्रुत्युपब्रह्मणानुसारात् पदशब्दस्स्वरूपपरः। षष्ठीस्वारस्याद्व्यतिरेकाङ्गीकारे तु पदशब्दो रूढिबलीयस्त्वादाश्वमेधिकोपबृंहणाच्च चरणपरस्स्थानपरो वा।

[६]'**बहुवर्षसहस्राणि तपस्तप्यति यो नरः।**
**नासौ पदमवाप्नोति मद्भक्तैर्यदवाप्यते।**'
[७]'**मामेव तस्माद्राजेन्द्र ध्याहि नित्यमतन्द्रितः।**
**अवाप्स्यसि ततः सिद्धिं द्रक्ष्यसे च परं पदम्**' इति पूर्वमुक्त्वा

---

[१] कठ.उ.१.२.१५.

[२] यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति **तत्ते पदं संग्रहेण प्रवक्ष्ये**।।
सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च।
मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम्।। (महा.भीष्म.३२.११-१२, भ.गी.८.११-१२)

[३] **औमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्**।
यः प्रयाति त्यजन्देहं स याति परमां गतिम्।। (महा.भीष्म.३२.१३, भ.गी.८.१३)

[४] **भयादग्निस्तपति** भयात्तपति सूर्यः। भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः।। (कठ.उ.२.३.३)

[५] भीषास्माद्वातः पवते। भीषोदति सूर्यः।
भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः।।(तै.उ.२.८.१) (नृ.पू.ता.उ.२.४)

[६] अश्वमेधसहस्राणां यः सहस्रं समाचरेत्।
नासौ तत्पदमाप्नोति मद्भक्तैर्यदवाप्यते।। (विष्णु.ध.पु.६८.५३)

[७] तस्मान्मामेव देवर्षे ध्यायस्वातन्द्रितः सदा।
अवाप्स्यसि ततः सिद्धिं पदं द्रक्ष्यसि च ध्रुवम्।। (विष्णु.ध.पु.६८.६०)

## ८. देवतान्तरोपास्यत्वभङ्गः

'**चिन्तयस्व सदा विष्णुं ध्यायन् कुरु कुलोद्वह।**
**तेन गच्छति नान्येन तद्विष्णोः परमं पदम्**'

इत्युपसंहारगतेन वैष्णवधर्मवचनेन एतच्छ्रुत्युपब्रह्मणात्। [१]"**अनन्यदेवता भक्ता**' इति तत्र भक्तलक्षणाभिधानात् '**मामेव**' इत्यवधारणात् '**नान्येन**' इति निषेधाच्च नान्यस्य प्राप्यत्वं शङ्कितुमप्यर्हम्। यत्तु -

[२]"**तव श्रिये मरुतो मर्जयन्त रुद्र यत्ते जनिम चारु चित्रम्।**
**पदं यद्विष्णोरुपमं निधायि तेन पासि गुह्यं नाम गोनाम्**'

इति मन्त्रानुसाराद्विष्णोः प्राप्यमित्यर्थ इति, तन्न। अस्या ऋचः वैद्युताग्निपरत्वेन ऋग्वेदभाष्ये व्याख्यातत्वात्। तथा च भाष्यम् - अनयाग्नेर्माध्यमिकी आन्तरिक्षी मूर्तिरुच्यते। 'हे अग्ने तव **श्रिये** - शोभायै, **मरुतः** - आन्तरिक्ष्यः मर्जयन्ति। हे रुद्र वृष्ट्या रुद्रावधितः अग्ने **ते** - तव, **जनिम** - जन्म, वैद्युतलक्षणं **चारु** - चारणीयं, **चित्रं** - चायनीयं च। तत्कथमिति चेदुच्यते - **विष्णोः -** व्यापनशीलस्य देवस्य **उपमं** - तुल्यमचक्षुर्गम्यं पदं निधायि। अनेनान्तरिक्षमुक्तम्। तस्मान्नान्तरिक्षं पश्यन्तीति [३]ब्रह्मणं तेन **गोनां** - उदकानां, **गुह्यं नाम पासि** - रक्षसीति। इत्थं पूर्वव्याख्यामनादृत्याक्षर-.पर्यालोचनेनार्थस्वीकारे तु रुद्रस्य भगवदायत्तश्रीकत्वमेवैतत् मन्त्रार्थतया स्वीकारार्हम्। 'रुद्र यस्मात्ते जन्म चारु चित्रं तस्मात्तव श्रिये मरुतो देवा ब्रह्माद्याः मार्जयन्ति क्षालितवन्तः। किं मार्जयन्त इत्यपेक्षायामाह 'पदं यत्' इति उपमं मेय तुल्यमानम्। यद्वा माशब्दो भूमिपरः वैजयन्त्यां '**मा विश्वा पृथिवी**' इत्यभिधानात्। उपममित्यव्ययीभावः। भूम्यास्समीपे दिवि क्रमसौकर्यप्रतिपादनायोपममित्युक्तम्। तेन द्वितीयः क्रमो लभ्यते। '**यद्विष्णोः पदं निधायि**' [४]"**त्रेधा निदधे पदम्**' इति श्रुत्यन्तरम्।

किञ्च 'तेन पुण्येन जन्मना गोनां गिरां प्रकृतस्य विष्णोर्नाम्नां मध्ये गुह्यं नाम तारकाख्यं पासि सर्वदा गोपायसि' इति विष्णोरिति पञ्चमीति कल्पनं तु शेषषष्ठ्यपेक्षया उपपदविभक्तेर्जघन्यत्वान्निरस्तम्। न चात्रोपपदविभक्तिरपि संभवति। न हि परमशब्दः

---

[१] येऽप्यन्यदेवता भक्ता यजन्ते श्रद्धयान्विताः।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम्।।(महा.भीष्म.३३.२३)(भ.गी.९.२३)

[२] ऋग्वेद.५.३.३.

[३] क - ब्राह्मणम्

[४] विष्णुसूक्तम्

परशब्दवद्दिक्शब्दः। यतस्तद्योगे पञ्चमी स्यात्। [१]‘**उरुगायस्य विष्णोः परमं पदम्**’ ‘**उरुगायस्य वृष्णः परमं पदम्**’ इति श्रुत्यन्तरसमानार्थत्वस्य न्याय्यत्वाच्च षष्ठ्येवेयम्। एतेन [२]‘**पञ्चमी विभक्त**’ इति पञ्चमीत्यपि निरस्तम्।

यस्तु [३]‘**गावो यत्र भूरिशृङ्गा**’ इति पूर्वत्र श्रवणात् गोलोकान्तर्गतविष्णुलोकपरेयं श्रुतिरिति व्याख्यानम्। तद्यास्कवचनविरोधादपास्तम्। सर्वेऽपि ‘**रश्मयो गाव उच्यन्त**’ इत्युक्त्वा ‘**गावो यत्र भूरिशृङ्गा**’ इत्युदाहृत्य ‘गावो रश्मय’ इति निरुक्ते तेन व्याख्यानात् ‘**भूरिशृङ्गा**’ इति च बहुदीप्तिमत्वमित्याभाष्यत। अतो विष्णोः कठवल्लीवेद्यत्वात् पुरुषशब्दस्य तत्परत्वम्।

पूर्वतापनीये च ‘**न शक्नोमि जगत्स्रष्टुमुपायं मे कथय**’ इति। तमुवाच ‘**पुरुषः प्रजापते शृणु सृष्टेरुपायम्**’ इति नृसिंहे पुरुषशब्दः प्रयुक्तः। योगविधौ [४]‘**भगवन्तं वासुदेवं किरीटिनं कुण्डलिनं वनमालाविभूषितोरस्कं सुरूपं सौम्यरूपं चतुर्भुजं शंखचक्रगदापद्मधरं ध्यायेत्**’ [५]‘**यद्यद्ध्यायति तत्तदवाप्नोतीति ध्यानं गुह्यम्**’ [६]‘**सर्वमेव क्षरन्त्याष्टाक्षरमेव ध्यायेत्**’ [७]‘**न च पुरुषं विना किञ्चिदप्यक्षरमस्ति**’ [८]‘**तं प्राप्य मुक्तो भवति**’ इति। पुनस्तत्रैव [९]‘**महावराहाच्युतानन्तपुरुषमहापुरुषकपिल-**

---

[१] पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वा शुन्धतां लोकः पितृषदनो यवोऽसि यवयास्मद् द्वेषो यवयारातीः पितृणां सदनमसि स्वावेशोऽस्यग्रेगा नेतृणां वनस्पतिरधि त्वा स्थास्यति तस्य वित्ताद्देवस्त्वा सविता मध्वाऽनक्तु सुपिप्पलाभ्यस्त्वौषधीभ्य उद्दिवं स्तभानान्तरिक्षं पृण पृथिवीमुपरेण दृंहते ते धामान्युश्मसीगमध्ये **गावो यत्र भूरिशृङ्गा** अयासः। अत्राह **तदुरुगायस्य विष्णोः परमं पद**मवभाति भूरेः। विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे। इन्द्रस्य युज्यः सखा।(ऋग्वेद.१.३.६)

[२] पाणिनि.सू.२.३.४१

[३] ऋग्वेद.१.३.६.

[४] विष्णु.स्मृ.९७.१०.

[५] विष्णु.स्मृ.९७.११.

[६] **तस्मात् सर्वमेव क्षरं त्यक्त्वा अक्षरमेव ध्यायेत्**। (विष्णु.स्मृ.९७.१२)

[७] विष्णु.स्मृ.९७.१३.

[८] विष्णु.स्मृ.९७.१४.

[९] महावराह(७९) द्रुहिण(८०) अच्युत(८१) अनन्त(८२) पुरुष(८३) महापुरुष(८४) कपिल(८५) सांख्याचार्य(८६) विष्वक्सेन(८७) धर्म(८८) धर्मद(८९) धर्माङ्ग(९०) धर्मवसुप्रद (९१) वरप्रद(९२) विष्णो(९३) जिष्णो(९४) सहिष्णो(९५) कृष्ण(९६) पुण्डरीकाक्ष(९७) नारायण(९८)

**पिङ्गल**' इत्यादि। नारायणीये - [१]"**सात्विकः पुरुषव्याघ्रः भवेन्मोक्षार्थचिन्तकः**' [२]"**अत्रापि स विजानाति पुरुषं ब्रह्मवित्तम**' इति। वैष्णवपुराणे -

[३]"**न केवलं रवेः शक्तिः वैष्णवी सा त्रयीमयी।**
**ब्रह्माथ पुरुषो रुद्रस्त्रयमेतत् त्रयीमयम्**' इति।

तथा - [४]"**यस्य प्रसादादहमच्युतस्य भूतः प्रजासर्गकरोऽन्तकारी।**
**क्रोधाच्च रुद्रः स्थितिहेतुभूतो यस्माच्च मध्ये पुरुषः परस्मात्।**'
[५]"**मद्रूपमास्थाय सृजत्यजो यः स्थितौ च योऽसौ पुरुषस्वरूपी।**
**रुद्रस्वरूपेण च योऽत्ति विश्वं धत्ते तथानन्तवपुस्समस्तम्**'

इति। आदिपर्वणि - [६]"**पुरुषस्स विभुः कर्ता सर्वलोकपितामहः**' [७]"**धर्मसंवर्धनार्थाय प्रजज्ञेऽन्धकवृष्णिषु**' इति। सभापर्वणि - [८]"**नारायणस्तु पुरुषो विश्वरूपो महाद्युतिः**' इति। श्रीमदुत्तररामायणे -

'**असौ रामो महाबाहुरतिमानुषचेष्टया।**
**तेजोमहत्तया चापि संस्मारयति पूरुषम्**' इति।

अयोध्याकाण्डे चतुर्थे सर्गे

[१]"**श्रुत्वा पुष्ये च पुत्रस्य यौवराज्याभिषेचनम्।**

---

परायण(९९) जगत्परायण(१००) नमो नम इति(१०१)। स्तुत्वा त्वेवं प्रसन्नेन मनसा पृथिवी तदा। उवाच संमुखं देवीं लब्धकामा वसुन्धरा।। (विष्णु.स्मृ.९७.७९-१०२)

[१] देहबन्धेषु पुरुषः श्रेष्ठः कुरुकुलोद्वह।
**सात्विकः पुरुषव्याघ्रः भवेन्मोक्षार्थचिन्तकः**।। (महा.शान्ति.३४८.६९)

[२] **अत्रापि स विजानाति पुरुषं ब्रह्मवित्तमम्।**
नारायणपरो मोक्षस्ततो वै सात्विकः स्मृतः।। (महा.शान्ति.३४८.७०)

[३] विष्णु.पु.२.११.१२.

[४] विष्णु.पु.४.१.८५.

[५] विष्णु.पु.४.१.८६.

[६] कैवल्यं निर्गुणं विश्वमनादिमजमव्ययम्।
**पुरुषस्स विभुः कर्ता सर्वलोकपितामहः**।। (महा.आदि.६३.१०३)

[७] **धर्मसंवर्धनार्थाय प्रजज्ञेऽन्धकवृष्णिषु**।
अस्त्रज्ञौ तु महावीर्यौ सर्वशास्त्रविशारदौ।। (महा.आदि.६३.१०४)

[८] **नारायणस्तु पुरुषो विश्वरूपो महाद्युतिः**।
अव्यक्तः सर्वभूतानामचिन्त्यो विभुरव्ययः।। (महा.सभा.पृ.सं.९००)

**प्राणायामेन पुरुषं ध्यायमाना जनार्दनम्**' इति।

हरिवंशे गोवर्धनोद्धारणानन्तरे

'**पुरुषस्यांशभूतं तु त्वां वयं निरणैष्महि**' इति।

[२]'**इत्येतान् पुरुषस्सर्वान् सृजन् लोकान् सनातनान्।**
**नैधनेऽस्मिन् कथं लोके नरत्वं विष्णुनागत**' इत्यादि।

दशमस्कन्धे प्रथमाध्याये -

[३]'**तत्र गत्वा जगन्नाथं वासुदेवं वृषाकपिम्।**
**पुरुषं पुरुषसूक्तेन उपतस्थे समाहित**' इति।

लैङ्गे - [४]'**ब्रह्मा कमलगर्भाभो रुद्रः कालाग्निसन्निभः।**
**पुरुषः पुण्डरीकाभो रूपं तत्परमात्मन**' इति।

वायुसंहितायाम् -

[५]'**ब्रह्मत्वे सृजते लोकान् कालत्वे संक्षिपत्यपि।**
**पुरुषत्वेऽप्युदासीनस्तिस्रोऽवस्थाः प्रजापतेः**' इति।

अत्र परिशेषात् पुरुषशब्दो विष्णुविषयः। आग्नेये-

'**अथवा पुरुषसूक्तेन पुरुषं नित्यमर्चयेत्।**
**अर्चनं संप्रवक्ष्यामि विष्णोरमिततेजस**' इति।

अत्र व्यतिकरेण प्रयोगादैकार्थ्यम्। ऋग्विधाने '**पुरुषस्य हरेस्सूक्तं स्वर्ग्यं धन्यं यशस्करम्**' इति।

ननु पुरुषशब्दस्य '**पुरुषावात्ममानवौ**' इत्यभिधानकोशस्मृतेः लौकिकवैदिक-प्रयोगप्राचुर्यात् चात्मसामान्ये शक्तेरावश्यकतया न विशिष्यापि नारायणे शक्तिः कल्प्या, [६]बर्हिराज्याधिकरणविरोधात्। तत्र हि म्लेच्छैस्तृणघृतादिजातिमात्रे आर्यैः संस्कृततृणादावेव

---

[१] रामायणे.२.४.३३.

[२] इत्येवं पुरुषस्सर्वान् सृजन् लोकान् सनातनान्।
**कथं लोके नैधनेऽस्मिन् नरत्वं विष्णुनागतः**।। (ह.वं.१.४०.६२)

[३] भा.पु.१०.१.२०.

[४] लिङ्ग.पु.१.७०.९२.

[५] लिङ्ग.पु.१.७०.९१.

[६] **बर्हिराज्याधिकरणन्यायः**- (शास्त्रीयन्यायविशेषः) 'स मृत्युपाशात् पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके' इत्यत्र स्वर्गशब्दस्य मोक्षपरत्वं अनेन न्यायेन स्थापितम्'- तद्यथा।

# ८. देवतान्तरोपास्यत्वभङ्गः

प्रयुज्यमानानां बर्हिराज्यादिशब्दानां यववराहाधिकरणन्यायेन शास्त्रार्थप्रसिद्धिबलीयस्त्वात् संस्कारनिमित्ततामाशंक्य शास्त्रस्थप्रयोगस्य जात्यव्यभिचाराज्जातिशक्तिमादायोपपादन-संभवेन विरोधाभावाज्जातिवाच्यतैवेति सिद्धान्तितम्।

यद्येवं सत्यपि प्रयोगनिर्वचनाभ्यां नारायणे शक्तिः तदा [१]'**पुरुषं कृष्णपिङ्गलम्**' [२]'**पुरुषस्य विद्म सहस्त्राक्षस्य महादेवस्य धीमहि**' [३]'**तमीशानं पुरुषम्**' इति श्रुतौ [४]'**शूद्राः पादात्पिनाकिन**' इति प्रस्तुत्य[५] [६]'**पुंसां तु पुरुषश्श्रीमान् ज्ञानगम्यो न चान्यथा**' इति लैङ्गे परमशिवे, 'ललाटाक्षः शूलपाणिः पुरुष' इति संहाररुद्रे,

---

न च प्रीतिमात्रवचनस्यैव स्वर्गशब्दस्य वेदे निरतिशयप्रीतिवाचित्वमस्त्विति वाच्यम्। निरतिशयत्वांशस्य अन्यतोऽनवगतत्वेन तत्रापि शक्त्यवश्यम्भावेन स्वर्गशब्दस्य लोकवेदयोरनेकार्थया हि स्यात्। यदा तु वैदिकप्रयोगावगतनिरतिशयप्रीतिवाचिता, तदा सातिशये लौकिके प्रीतित्वसामान्ययोगाद्गौणी वृत्तिः' इति मीमांसकैः निरतिशयसुखवाचित्वस्यैव समर्थिततया मोक्षस्य स्वर्गशब्दवाच्यत्वे विवादायोगात्, पार्थशब्दस्य अर्जुन इव तदितरपृथापुत्रेषु प्रचुरप्रयोगाभावेऽपि पार्थशब्दमुख्यार्थत्वानपायवत् स्वर्गशब्दस्य सूर्यध्रुवान्तर्वर्तिलोकगतसुखविशेष इव अन्यत्र प्रचुरप्रयोगाभावेऽपि वाच्यत्वानपायात्। बर्हिराज्यादिशब्दानामसंस्कृततृणघृतादिष्वार्यैरप्रयुज्यमानानामपि अस्त्येव तद्वाचित्वात्। केषांचित् अप्रयोगमात्रस्य शक्त्यभावासाधकत्वात्। अतस्तृणत्वादिजातिवचना एव बर्हिरादिशब्दाः इति बर्हिराज्याधिकरणे स्थिततत्वात्। तदुक्तं वार्तिके एकदेशेऽपि यो दृष्टः शब्दो जातिनिबन्धनः। तदत्यागान्न तस्यास्ति निमित्तान्तरगामिता' इति। ततश्च स्वर्गशब्दो मोक्षसाधारण एव। (मी.कोश.७.)

[१] ऋतं सत्यं परं ब्रह्म **पुरुषं कृष्णपिङ्गलम्**।
ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमः।। (म.ना.उ.१२.१)

[२] **तत्पुरुषस्य विद्महे सहस्त्राक्षस्य महादेवस्य धीमहि**।
तन्नो रुद्रः प्रचोदयात्। (म.ना.उ.३.१)

[३] यो योनिं योनिमधितिष्ठत्येको यस्मिन्निदं स च वि चैति सर्वम्।
**तमीशानं** वरदं देवमीड्यं निचाय्येमां शान्तिमत्यन्तमेति।। (श्वे.उ.४.११)

[४] इन्द्रोपेन्द्रौ भुजाभ्यां तु क्षत्रियाश्च महात्मनः।
वैश्याश्चोरुप्रदेशात्तु **शूद्राः पादात्पिनाकिनः**।। (लिङ्ग.पु.१.७५.१०)

[५] पुष्करावर्तकाद्यास्तु केशास्तस्य प्रकीर्तिताः।
वायवो घ्राणजास्तस्य गतिः श्रौतं स्मृतिस्तथा।।
अथानेनैव कर्मात्मा प्रकृतेस्तु प्रवर्तकः।
**पुंसां तु पुरुषश्श्रीमान् ज्ञानगम्यो न चान्यथा**।। (लिङ्ग.पु.१.७५.११-१२)

[६] लिङ्ग.पु.१.७५.१२.

[1]‘**अङ्गुष्टमात्रः पुरुषोऽङ्गुष्ठञ्च**’ इति पिण्डाण्डमूलाङ्गुष्ठसमाश्रयणलिङ्गोपस्थापिते ब्रह्माण्डमूलभूताधारलोकवासिनि कालाग्निरुद्रे च प्रयोगात्। [2]‘**यस्मात् पर्यनुशेते च तस्मात् पुरुष उच्यत**’ इति लैङ्गे शिवनामसु निर्वचनाच्च शिवेऽपि शक्त्यन्तरं स्यादिति चेत्तथा सति तथैव शिवशब्दस्यापि विशिष्य शक्त्यभावप्रसङ्गात्।

न च ‘**शिवश्शूली महेश्वर**’ इति नामानुशासनाद्विशिष्यशक्तिरिति वाच्यम्, न्याय-विरोधानुशासनस्याकिञ्चित्करत्वात्। अन्यथा [3]‘**पीलुः काण्डे द्रुमे गजे। चरुस्थाल्यां हविष्यपि**’ इत्यनुशासनेन पीलुचरुशब्दयोः गजस्थालीवचनत्वप्रसङ्गात्। न हि तदिष्टं [4]‘**तेष्वदर्शनात् विरोधस्य समा विप्रतिपत्तिः स्यात्**’ इत्याद्याधिकरणेषु निषिद्धत्वात्। तस्मात् श्रुतिस्मृतिप्रयोगैरभिधाग्राह्याभिधानकोशस्यापि तन्मूलत्वात्। बर्हिराज्यनयस्तु केवलप्रयोगात् शक्तिकल्पनं वारयति। न तु श्रुतिस्मृत्यादिसद्भावेऽपि तस्मात् पुरुषशब्दस्य श्रुतिस्मृतिप्रयोगसिद्धा भगवति शक्तिर्नापह्नोतुं शक्या।

यच्चोक्तं [5]<u>प्रयोगनिर्वरणाभ्यां</u> रुद्रेऽपि तस्य शक्तिप्रसङ्ग इति, तन्न। न हि ‘कृष्णपिङ्गलं पुरुषम्’ ‘त्र्यक्षश्शूलपाणिः पुरुषः’ ‘श्रीमान् पुरुषः’ ‘नीलो घटः’ ‘दण्डिनं पुरुषमानय’ इत्यादिप्रयोगः विशेषयोगिनि विशेष्यपदस्य विशिष्यशक्तिं कल्पयितुमीष्टे। [6]‘**पुरुषस्य विद्म**’ इति श्रुतेस्तु यजुर्भाष्यं दर्शयिष्यते। [7]‘**तमीशानम्**’ पुरुषमिति श्वेताश्वतरवाक्यं तु विष्णुपरमिति स्थापयिष्यते। पुरीशयत्वनिमित्तकोदाहृततामसपुराण-विशेषस्थनिर्वचनं तु पुरीशयत्वस्य भगवत्येव बहुप्रमाणसिद्धत्वात् प्रबलतम-विष्ण्वसाधारण्यवचनविरोधाच्च प्रशंसापरम्। वस्तुतस्तु नात्र बर्हिराज्यनयावतारः। ‘**ते सर्वे पुरुषांशत्वादुच्यन्ते पुरुषा इति**’ इत्याद्युदाहृतवचनैः विष्ण्वसाधारण्यात्

---

[1] **अङ्गुष्टमात्रः पुरुषोऽङ्गुष्ठञ्च** समाश्रितः।
ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक्।। (म.ना.उ.१६.३)

[2] क्षेत्रज्ञः क्षेत्रविज्ञानादेकत्वात् केवलः स्मृतः।
**यस्मात् पुर्यां स शेते च तस्मात् पुरुष उच्यते**।। (लिङ्ग.पु.१.७०.१०३)

[3] वैजयन्तीकोश.६.१.३२,पृ.१६१.

[4] मी.सू.१.३.८.

[5] क - प्रयोगनिर्वचनाभ्याम्; घ - निर्वरणाभ्याम्

[6] म.ना.उ.३.१.

[7] यो योनिं योनिमधितिष्ठत्येको यस्मिन्निदं स च वि चैति सर्वम्।
**तमीशानं** वरदं देवमीड्यं निचाय्येमां शान्तिमत्यन्तमेति। (श्वे.उ.४.११)

सामान्यशक्तेरसिद्धेः। '**पुरुषा वात्ममानवौ**' इत्याद्यभिधानकोशस्तु स्मृत्यनुरोधात् प्रचुरप्रयोगविषयमात्रसंग्राहकः। दृष्टं चैतत् पील्वादिनामानुशासने '**महर्षयस्तु शब्दैकगम्यपरतत्वस्वरूपादिनिर्णयार्थप्रवृत्ताः** [१]**तदनुपयोग्य औपनिषदशब्दार्थसंबन्ध-परिपालने यतन्त**' इति तदीयानि वचांसि [२]आविष्कृतशब्दार्थसंबन्धाध्यवसाये प्रयोगादिप्रयोजनेभ्योऽभिधानकोशेभ्यो बलीयांसि धर्मनिर्णयतत्परार्थव्यवहार इव म्लेच्छ-व्यवहारात्। तदुक्तम् - [३]'**तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिस्स्यात्**' इत्यत्र तान्त्रिकैः

'**प्रतिपादकतामात्रं म्लेच्छेष्वध्यवसीयते।**
[४]**आविष्कृतस्तु शब्दार्थः शिष्टेष्वेवावधार्यत**'

इत्येवं पुरुषशब्दस्य भगवति श्रुतित्वेऽपि [५]'**शब्दादेव प्रमित**' इत्यत्र भगवता यदनुगृहीतं '**ईशानश्रुतेः**' इति। तदात्ममात्रेऽपि श्रुतितया जीवपूर्वपक्षनिरासासामर्थ्यादसाधारण्यपक्षे सामान्ये प्रसिद्धिप्राचुर्यात् साधारण्यनिरासायान्न गौरवात् प्रौढ्या तदभ्युपगमेन वेश्वरत्वेऽपीशानशब्दश्रुतित्वाद्वेति द्रष्टव्यम्।

अत एव [६]'**य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यत**' इत्यादि श्रुतिसत्वेऽपि अन्तरादित्याधिकरणाद्यारम्भः। यद्यमरकोशे तदनुपलंभमात्रात् कश्चित् कूपमण्डूको ब्रूयात्। न पुरुषशब्दस्य भगवति रूढिरनुशासनाभावादिति। तदा '**पुराणः पुरुषो यज्ञपुरुष**' इत्यमरशेषेण स प्रबोध्यः। नानार्थरत्नमालायां '**पुरुषो धातृपुन्नागनर-पुङ्परमात्मसु**' इत्युक्तम्। परमात्मा च नारायण एव।

'**परमात्मा च सर्वेषामाधारः परमेश्वरः।**
**विष्णुनामा स वेदेषु वेदान्तेषु च गीयत**'

---

[१] क - तदुपयोग्य

[२] क - अविप्लुत; घ - आविष्कृत

[३] मी.सू.१.३.८.

[४] क - अविप्लुतस्तु

[५] मी.सू.१.३.८

[६] **य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते**, हिरण्यश्मश्रुः हिरण्यकेशः आप्रणखात् सर्व एव सुवर्णः। तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एषः सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद। (छा.उ.१.६.६)

इत्यादिभिः तथावगमात्। [1]‘**पूतात्मा परमात्मा च**’ इति सहस्रनामसु पाठाच्च। एवं श्रुतिस्मृतिप्रयोगानामानुशासनैः पुरुषशब्दस्य भगवदभिधानत्वात् तेन वेद्यदेवतानिर्धारणं युज्यत एव। अत एवाग्रिमखण्डे -

[2]‘**धनुर्गृहीत्वोपनिषदं महात्मा शरं ह्युपासानिशितं सन्दधीत।**
**आयम्य तद्भागवतेन चेतसा लक्ष्यं तदेवाक्षरं सोम्य विद्धि**’

इति भागवतत्वं भगवद्भक्तिमत्वं चेतसो विशेषणं [3]ज्ञातम् उपास्यपरदेवताभक्तेः विद्यानिष्पत्तिहेतुत्वात्। श्रीमद्रामायणे भगवत्परतयैव इयं श्रुतिरुपबृंहिता। रावणवधानन्तरं [4]‘**ब्रह्मा ब्रह्मविदां वर**’ इत्युक्त्वा तद्विदितः। ब्रह्मस्वरूपम् [5]‘**अक्षरं ब्रह्म सत्यत्वम्**’ इत्यादि [6]‘**पुरुषः पुरुषोत्तम**’ इत्यन्तवचनमुखेन दर्शयता वचनजातेन शब्दतोऽर्थतश्चैतत् वाक्यप्रत्यभिज्ञानात्। वैष्णवे पुराणेऽप्युपबृंहिता। तत्र हि [7]‘**भेषजं भगवत्प्राप्तिः**’ इति संसारभेषजतया भगवत्प्राप्तिं प्रक्रम्य ‘**कोऽसौ भगवान् केन च तत्प्राप्तिः**’ इत्यपेक्षिते तत्प्राप्तिहेतुः [8]मुण्डकश्रुत्यनुसारेणानुक्रान्तः। तत्र हि-

[9]‘**द्वे वै विद्ये वेदितव्य इति चाथर्वणीश्रुतिः।**
**परया त्वक्षरप्राप्तिः ऋग्वेदादिमयापरा।।**’
[10]‘**यत्तदव्यक्तमजरमचिन्त्यमजमव्ययम्।**

---

[1] **पूतात्मा परमात्मा च** मुक्तानां परमा गतिः।
अव्ययः पुरुषः साक्षी क्षेत्रज्ञोऽक्षर एव च।। (महा.आनु.१४९.१५)

[2] मुण्डक.२.२.३.

[3] क - कृतम्; घ - ज्ञातम्

[4] षडर्धनयनः श्रीमान् महादेवो वृषध्वजः।
कर्ता सर्वस्य लोकस्य **ब्रह्मा ब्रह्मविदां वरः**।।(रामायण.६.११७.३)

[5] **अक्षरं ब्रह्म सत्यं च** मध्ये चान्ते च राघव।
लोकानां त्वं परो धर्मो विष्वक्सेनश्चतुर्भुजः।। (रामायण.६.११७.१४)

[6] शार्ङ्गधन्वा हृषीकेशः **पुरुषः पुरुषोत्तमः**।
अजितः खड्गधृग् विष्णुः कृष्णश्चैव बृहद्बलः।। (रामायण.६.११७.१५)

[7] निरस्तातिशयाह्लादसुखभावैकलक्षणा।
**भेषजं भगवत्प्राप्तिरे**कान्तात्यन्तिकी मता।। (विष्णु.पु.६.५.५९)

[8] मुण्डक.१.१.३-६.

[9] विष्णु.पु.६.५.६५.

[10] विष्णु.पु.६.५.६६.

## ८. देवतान्तरोपास्यत्वभङ्गः

**अनिर्देश्यमरूपञ्च पाणिपादाद्यसंयुतम्।।**'
[१]'**विभुं सर्वगतं नित्यं भूतयोनिमकारणम्**'

इत्यादिना। एवं [२]'**यत्तदद्रेश्यमग्राह्यम्**' इत्यादि श्रुत्यर्थम् [३]अनुसृत्य [४]'**श्रुतिवाक्योदितं सूक्ष्मं तद्विष्णोः परमं पदम्**' इति विष्णुस्वरूपपरत्वमस्याः श्रुतेरुक्तम्। तदुपपादनाय चाग्रिमखण्डम्। [५]'**आयम्य तद्भागवतेन चेतसा**' इत्युपास्यस्वरूपाभिधायिभगवच्छब्दं मनसि निधाय तद्वाच्यमपि विष्णुस्वरूपमित्युक्तं [६]'**तदेव भगवद्वाच्यं स्वरूपं परमात्मन**' इत्यादिना। तत्रैव प्रचेतस्स्तोत्रे [७]'**अचक्षुश्रोत्रममलमवाक्पाणिमनामयम्**' [८]'**अनामगोत्रमसुखमतेजस्कमहेतुकम्**' इति। अत्र [९]'**नताः स्म पुरुषोत्तमम्**' इति पूर्वेण संबन्धः।

तथा पञ्चमे अंशे ब्रह्मस्तोत्रे [१०]'**द्वे विद्ये त्वमिहाम्नाते परा चैवापरा तथा**' इत्यारभ्य [११]'**त्वमव्यक्तमनिर्देश्यमचिन्त्यानामवर्णवत्। अपाणिपादरूपं च**' इत्यनेन

---

[१] **विभुं सर्वगतं नित्यं भूतयोनिमकारणम्**।
व्याप्यव्यप्तं यतः सर्वं यद्वै पश्यन्ति सूरयः।। (विष्णु.पु.६.५.६७)

[२] **यत्तदद्रेश्य**मग्राह्यमगोत्रमवर्णमचक्षुः श्रोत्रं तदपाणिपादम्।
नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः।। (मुण्डक.१.१.६)

[३] क - अनुक्रम्य; घ - अनुसृत्य

[४] तद्ब्रह्म तत्परं धाम तद्ध्येयं मोक्षकाङ्क्षिभिः।
**श्रुतिवाक्योदितं सूक्ष्मं तद्विष्णोः परमं पदम्**।। (विष्णु.पु.६.५.६८)

[५] मुण्डक.२.२.३.

[६] **तदेव भगवद्वाच्यं स्वरूपं परमात्मनः**।
वाचको भगवच्छब्दस्तस्याद्यस्याक्षयात्मनः।। (विष्णु.पु.६.५.६९)

[७] अनाकाशमसंस्पर्शमगन्धमरसं च यत्।
**अचक्षुश्रोत्रममलमवाक्पाणिमनामयम्**।। (विष्णु.पु.१.१४.४०)

[८] **अनामगोत्रमसुखमतेजस्कमहेतुकम्**।
अभयं भ्रान्तिरहितमनिद्रमजरामरम्।। (विष्णु.पु.१.१४.४१)

[९] शुद्धस्संलक्ष्यते भ्रान्त्या गुणवानिव योऽगुणः।
तमात्मरूपिणं देवं **नताः स्म पुरुषोत्तमम्**।।(विष्णु.पु.१.१४.३७)

[१०] **द्वे विद्ये त्वमिहाम्नाते परा चैवापरा तथा**। त एव भवतो रूपे मूर्तामूर्तात्मिके प्रभो।।
द्वे ब्रह्मणी त्वणीयोतिस्थूलात्मन् सर्व सर्ववित्। शब्दब्रह्म परं चैव ब्रह्म ब्रह्ममयस्य यत्।।
ऋग्वेदस्त्वं यजुर्वेदस्सामवेदस्त्वथर्वणः। शिक्षा कल्पो निरुक्तञ्च छन्दो ज्यौतिषमेव च।।
इतिहासपुराणे च तथा व्याकरणं प्रभो। मीमांसा न्यायशास्त्रं च धर्मशास्त्राण्यधोक्षज।।

ग्रन्थेनोपबृंहितेयं श्रुतिः। एवञ्च सामान्यशक्तस्य तद्विशेषपर्यवसानाद्वा सामान्यशक्तौ सत्यामसत्यामपि भगवन्मात्रगोचरशक्तेर्वा पुरुषशब्दस्य भगवत्परता। अत एव हि श्रीवाराहे एकत्रिंशाध्याये -

[२]'**हन्ति पाति शरीराणि सृजत्यन्यानि चात्मनः।**
**युगे युगे सर्वगोऽयं वेदान्तपुरुषो ह्यसौ**'

इति नारायणः कारणमिति कथमभिधीयते। पुरुषस्यैव तदुक्तेरित्यत्राह वेदान्तेति। तत्र प्रतिपाद्यमानः पुरुषोऽयमेवेत्यर्थः।

किञ्चात्र मोक्षसाधनज्ञानविषये हि पुरुषशब्दः प्रयुज्यते। पुरुषसूक्ते च [३]'**तमेवं विद्वानमृत इह भवति**' इति पुरुष एव तादृशज्ञानविषयः प्रतिपादितः। अतः पुरुषसूक्त-प्रतिपाद्यस्यैव पुरुषस्येह प्रत्यभिज्ञायमानत्वात् पुरुषसूक्तस्य च भगवत्परत्वात् तत्समानार्थके अत्र पुरुषपदस्य भगवत्परत्वं युक्तम्। कथं पुरुषसूक्तस्य नारायणपरत्वमिति चेत् - '**श्रुतिस्मृतिसमाख्यानविनियोगोपबृंहणैः।**
**सूक्तस्य पौरुषस्यास्य भगवत्परतां विदुः।।**'

सामविधिब्राह्मणे '**इदं विष्णुः** [४]**प्रक्षस्य प्रविष्णुः।** [५]'**प्र काव्यमुशनेव ब्रुवाण**' इति वाराहवत्यं पुरुषव्रते चैष वैष्णवी नाम संहिता। एतां प्रयुञ्जन् विष्णुं प्रीणाति इति विष्णुर्देवतास्येति विग्रहे [६]'**सास्य देवता**' इति विहितप्राग्दीव्यतयाणन्तेन वैष्णवीशब्देन तद्धितश्रुत्या विष्णुदैवत्यत्वसिद्धेः। अत्र च विष्णुप्रीतिहेतुत्वावगमात् स्तवप्रियत्वेन

---

आत्मात्मदेहगुणवद्विचाराचारि यद्वचः।
तदप्याद्यपते नान्यदध्यात्मात्मस्वरूपवत्।।(विष्णु.पु.५.१.३५-३९)

[१] **त्वमव्यक्तमनिर्देश्यमचिन्त्यानामवर्णवत्।**
**अपाणिपादरूपं च** शुद्धं नित्यं परात्परम्।।(विष्णु.पु.५.१.४०)

[२] वराह.पु.३१.२०.

[३] धाता पुरस्ताद्यमुदाजहार। शक्रः प्रविद्वान् प्रदिशश्चतस्रः।
**तमेवं विद्वानमृत इह भवति**। नान्यः पन्था अयनाय विद्यते। (पु.सू.१७)

[४] क - पक्षस्य विष्णुः

[५] **प्र काव्यमुशनेव ब्रुवाणो** देवो देवानां जनिमा विवक्ति।
महिव्रतः शुचिबन्धुः पावकः पदा वराहोऽभ्येति रेभन्।। (सामवेद.सं.५.६.२)

[६] पाणिनि.सू.४.२.२४.

## ८. देवतान्तरोपास्यत्वभङ्गः

सहस्रनामादिषु सिद्धस्य तस्य [१]श्रुतिकरणत्वस्य सूक्तेस्संभवात् विष्णुप्रीतिहेतुत्वलिङ्गादपि विष्णुपरत्वं लभ्यते।

तथारुणकेतुकाख्ये प्रपाठके [२]'**आपो वा इदमासन् सलिलमेव**' इति प्रलयावस्थामुपक्रम्य '**स प्रजापतिरेकः पुष्करपर्णे समभवत्**' इति ब्रह्मण उत्पत्तिं, तस्मादनेकेषां भूतानामुत्पत्तिमुक्त्वा प्रजापतिरित्यनुवृत्तौ [३]'**अन्तरतः कूर्मं भूतं सर्पन्तं तमब्रवीत्। मम वै त्वङ्मांसा समभूत्। नेत्यब्रवीत्। पूर्वमेवाहमिहासमिति। तत्पुरुषस्य पुरुषत्वम्**' इति पुरुषशब्दनिर्वचनेन सृष्टजगद्धारणार्थं कूर्मरूपधरस्य नाभिपुष्करे प्रजापतिस्रष्टुरादिकर्तुरेवानन्यसाधारणं नामाभिधाय पुरुषसूक्तेनाप्ययमेव पुरुषो जगत्स्रष्टृतयानुगम्यत इति ज्ञापयन्नाह - [४]'**सहस्रशीर्षा पुरुषः सहस्राक्षस्सहस्रपात्। भूत्वोदतिष्ठत्**' इत्यादिना। एवञ्च नात्र तत्तत्कालीनसहस्रशीर्षत्वादियुक्तपुरुषभाव-विशिष्टोत्थानमुच्यते। तथा सति [५]'**पूर्वमेवाहमिहासम्**' इत्यनन्तरवाक्ये भूप्रवृत्तिनिमित्त-विरोधापत्तेः। न हि तेन रूपेण पूर्वसत्वमस्ति। अग्रिमपुरुषशब्दनिर्वचनत्वञ्च [६]स्वरसत्वम् अनपेक्षितं च। परपक्षे निर्वचनं सहस्रशीर्षत्वादिविशिष्टपुरुषो भूत्वोदतिष्ठदिति खल्वर्थः परेणोच्यते। तत्र पुरुषशब्दो लोकप्रसिद्धार्थ एवेति का निर्वचनापेक्षा। किञ्च तत्पक्षे [७]'**त्वं वै पूर्वं समभूः**' इति विरुद्धतादृशपुरुषस्यैव संबोद्धव्यत्वात् तस्य च पूर्वत्वाभावात्। तस्मात् पुरुषशब्दवाच्यत्वमुक्त्वा तदुपपादकतया पूर्वं सत्वेन निश्चितः। संभवत्पुरुषशब्दनिर्वचनोऽयमेव पुरुषः। पुरुषशब्दवति पुरुषसूक्तेऽप्युच्यत इत्यभिप्रायेण पुरुषसूक्तार्थं प्रत्यभिज्ञापयति '**उदतिष्ठत्**' इति। '**अत्यतिष्ठद्दशाङ्गुलम्**' इत्युक्तार्थः प्रत्यभिज्ञाप्यते। [८]कूर्मभूतमित्यपेक्षा तत्पुरुषस्य पुरुषत्वमित्यग्रे निर्देश्यमाणः पुरुष एव

---

[१] क - स्तुति; घ - श्रुति

[२] **आपो वा इदमासन् सलिलमेव। स प्रजापतिरेकः पुष्करपर्णे समभवत्**। तस्यान्तर्मनसि कामः समवर्तत। इदं सृजेयमिति। तस्माद्यत्पुरुषो ममसाऽभिगच्छति। तद्वाचा वदति। तत्कर्मणा करोति। तदेषाभ्युक्ता। कामस्तदग्रे समवर्तताधि। मनसो रेतः प्रथमं यदासीत्।। (तै.आ.१.८९)

[3] तै.आ.१.९१-९२.

[4] तै.आ.१.९२

[5] तै.आ.१.२३.४.

[६] क - स्वरससिद्धम्

[7] तै.आ.१.९२

[८] क - कूर्मभूतमित्यत्र च कूर्मभूतमित्यपेक्षायाम्

पुष्करोत्पत्तिस्थानं विशेष्यत्वेन लभ्यते। 'सहस्रशीर्षा' इत्यत्र च विशेष्यभूतस्स परामृश्यते न कूर्मः। इदञ्च पुरुषसूक्तं वक्ष्यमाणब्रह्मादिजगत्सृष्टत्वस्याप्युपलक्षणम्। तेन निर्वचननिमित्तस्य सर्वेभ्यः पूर्वसिद्धत्वस्योपपादनं कृतं भवति।

आथर्वणे गोपथाख्ये ब्राह्मणेऽष्टादशमहाशान्तिप्रकरणे '**रौद्रा रौद्रगणान् हुत्वा रौद्रपञ्चापत्यं जपेत् यो जात इत्यैन्द्र्या**' इत्येव तत्तद्दैवत्येषु कर्मसु तत्ततल्लिङ्गेषु मन्त्रेषु विनियुज्यमानेषु वैष्णव्या पुरुषसूक्तमित्युक्तम्। अत्र वैष्णव्यां विनियोगबलात् तत्तद्दैवत्यमन्त्रसाहचर्याच्च पुरुषसूक्तस्य भगवत्परत्वं लभ्यते। तत्र '**रौद्रगणं हुत्वा रौद्रपञ्चापत्यम्**' इति विनियोज्य मन्त्राणां तत्तत्कर्मोचितदेवत्यत्वेन कीर्त्यमानत्वादिहापि विष्णुदेवत्यत्वेन कीर्त्तनमुचितम्।

अतः पुरुषसूक्तमित्यत्र पुरुषशब्देन विष्णुमभिधाय तत्प्रतिपादकत्वेन सूक्तस्य कीर्त्यमानत्वाच्छ्रुत्यापि तत्परत्वसिद्धिः। शतपथेऽपि [१]"**पुरुषो ह वै नारायणोऽकामयत। अतितिष्ठेत् सर्वाणि भूतान्यहमेवेदं सर्वं स्यामिति स एतं पुरुषमेधं पञ्चरात्रं यज्ञक्रतुमपश्यत् तमाहरत् तेनायजत तेनेष्ट्वात्यतिष्ठत् सर्वाणि भूतानि**' इति पुरुषमेधार्थवादः। [२]"**पुरुष एवेदं सर्वम्**' [३]"**अत्यतिष्ठद्दशाङ्गुलम्**' इत्यादिभिः पुरुषसूक्त-प्रतिपन्नसर्वात्मकत्वसर्वातिशायित्वलक्षणसर्वानिष्टानादिकं नारायणगतत्वेन प्रतिपाद्य तत्प्रापकतया पुरुषमेव स्तूयते। ततश्च तत्प्रत्यभिज्ञानात्पुरुषसूक्तस्य नारायणपरत्वं सिद्धम्। [४]"**यद्भूतं यच्च भव्यम्**' इत्युक्तं समस्तं भूतभविष्यद्वस्तुजातात्मत्वञ्च न कर्मसाध्यं संभवतीति विरोधात्। अतोऽकर्मसाध्यतोक्तिगुणवादः। यथा यद्ब्रह्मविद्यया सर्वं भविष्यन्तोऽमन्यन्त किमुत तद्ब्रह्मावेद्यस्मात् तत्सर्वमभवदिति। '**ब्रह्म वा इदमग्र आसीत्। तदात्मानमेवावेदाहं ब्रह्मास्मीति। तस्मात् तत्तत् सर्वमभवत्। तदिदमप्येतर्हि** '**य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति**' इत्यर्थवादः।

---

[१] शत.ब्रा.१२.६.१.१.

[२] **पुरुष एवेदं सर्वम्। यद्भूतं यच्च भव्यम्।** उतामृतत्वस्येशानः यदन्नेनातिरोहति।। (पु.सू.२)

[३] पु.सू.१.

[४] पु.सू.२.

# ८. देवतान्तरोपास्यत्वभङ्गः

किञ्च '**पुरुष एवेदं सर्वम्**' इति मन्त्रस्य नारायणोपनिषदि [१]"**नारायण एवेदं सर्वं यद्भूतं यच्च भव्यम्**' इति वाक्येन स्पष्टीकरणात् पुरुषसूक्तं विष्णुपरम्। पुरुषसूक्तभाष्योदाहृतश्रुत्यन्तरैश्च सूक्तस्यास्य भगवत्परत्वसिद्धिः।

मुद्गलोपनिषदि - 'वामदेव आङ्गिरसः सन् पूर्वप्रजासमारब्धोऽत्रिपत्न्यानसूयया गर्भ एव शयानो ब्रह्म वेदयाञ्चक्रिरे। स हि गर्भः पुरा भित्वा ब्रह्मलोकमुपचक्राम। मध्येऽध्वानमुपनिषद्य उवाच भगवांस्तु गर्भपञ्जरमेवाभिनिविशमाने विज्ञानतोपायम् अकस्मात् किञ्चिद्वीता संगः [२]सर्वंमन्यमानः अध्वनः पारमुपगच्छसि। तदेतदिहाश्चर्यं यद्बालस्य गुरुमनुपेयुषोऽधिगन्तुश्च भगवतोऽकस्मात् [३]विशिष्टो ब्रह्मप्रत्ययो विपरीतस्य विपरीतम्। सोऽहं भगवः उप त्वा सेदिवानस्मि' इत्यादिभिः, [४]"**भगवज्ज्ञानमुपदिश्य**

---

[१] अथ नित्यो नारायणः। ब्रह्मा नारायणः। शिवश्च नारायणः। शक्रश्च नारायणः। कालश्च नारायणः। दिशश्च नारायणः। विदिशश्च नारायणः। **नारायण एवेदं सर्वं यद्भूतं यच्च भव्यम्**। निष्कलङ्गो निरञ्जनो निर्विकल्पो निराख्यातः शुद्धो देव एक नारायणो न द्वितीयोऽस्ति कश्चित्। य एवं वेद स विष्णुरेव भवति। स विष्णुरेव भवति। य एतद्यजुर्वेदशिरोऽधीते।। (ना.उ.२)

[२] क - सर्वैर्मन्यमानः; घ - सर्वंमन्यमानः

[३] क - विशब्दो

[४] अथ तथा मुद्गलोपनिषदि पुरुषसूक्तस्य वैभवं विस्तरेण प्रतिपादितम्। वासुदेव इन्द्राय **भगवज्ज्ञानमुपदिश्य पुनरपि सूक्ष्मश्रवणा**य प्रणतायेन्द्राय परमरहस्यभूतं पुरुषसूक्ताभ्यां खण्डद्वयाभ्यामुपादिशत्। द्वौ खण्डावुच्येते। योऽयमुक्तस्स पुरुषो नाम रूपज्ञानागोचरं संसारिणामतिदुर्ज्ञेयं विषयं विहाय क्लेशादिभिः संक्लिष्टदेवादिजिहीर्षया सहस्रकलावयवकल्याणं दृष्टमात्रेण मोक्षदं वेषमाददे। तेन वेषेण भूम्यादिलोकं व्याप्यानन्तयोजनमत्यतिष्ठत्। पुरुषो नारायणो भूतं भव्यं भविष्यच्चासीत्। स एष सर्वेषां मोक्षदश्चासीत्। स च सर्वस्मान् महिम्नो ज्यायान्। तस्मान्न कोऽपि ज्यायान्। महापुरुष आत्मानं चतुर्धा कृत्वा त्रिपादेन परमे व्योम्नि चासीत्। इतरेण चतुर्थेनानिरुद्धनारायणेन विश्वान्यासन्। स च पादनारायणो जगत्स्रष्टुं प्रकृतिमजनयत्। स समृद्धकायः सन् सृष्टिकर्म न जज्ञिवान्। सोऽनिरुद्धनारायणस्तस्मै सृष्टिमुपादिशत्। ब्राह्मन् तवेन्द्रियाणि याजकानि ध्यात्वा कोशभूतं दृढं ग्रन्थिकलेबरं हविर्ध्यात्वा मां हविर्भुजं ध्यात्वा वसन्तकालमाज्यं ध्यात्वा ग्रीष्ममिध्मं ध्यात्वा शरदृतुं रसं ध्यात्वैवमग्नौ हुत्वाङ्गस्पर्शात् कलेबरो वज्रं हीष्यते। ततः स्वकार्यान् सर्वप्राणिजीवान् सृष्ट्वा पश्चाद्याः प्रादुर्भविष्यन्ति। ततः स्थावरजङ्गमात्मकं जगद्भविष्यति। एतेन जीवात्मनोर्योगेन मोक्षप्रकारश्च कथित इत्यनुसन्धेयम्। य इमं सृष्टियज्ञं जानाति मोक्षप्रकारं च सर्वमायुरेति।।'(मुद्गल.उ.१.)

**पुनरपि सूक्ष्मश्रवणाय प्रणतायेन्द्राय परमं रहस्यभूतं पुरुषसूक्तार्थद्वाभ्यामुपादिशत्। द्वौ खण्डावुच्येते योऽयमुक्तगुणस्स पुरुषमनानामगोचरं संसारिणामतिदुर्ज्ञानं विहाय कोशादिसंसृष्टदेवादीनुज्जिहीर्षया सर्वावयवकल्याणं दृष्टिमात्रेण मोक्षदं वेषमाददे तेन रूपेण भूम्यादिलोकजातं व्याप्यानन्तयोजनमत्यतिष्ठत्। स पुरुषो नारायणो भूतं भवच्चासीत्। स एव सर्वेषां मोक्षद आसीत्। आसीत् स चेदृशेन महिम्ना ज्यायान्। आसीत् स च ज्यायान् महापुरुष आत्मनश्चतुर्धारूपा परमव्योम्नि भासते। इतरेण चतुर्थेनानिरुद्धनारायणाख्येन पादेन विश्वमासीत। स च पादनारायणो जगत्सृष्टुम्। सा च प्रकृतिः। ब्रह्मन् तवेन्द्रियाणि याजकानि ध्यात्वा जगत्कोशभूतं दृढग्रन्थिकलेबरं हविर्ध्यात्वा मां हर्विभुजं ध्यात्वा ग्रीष्ममिध्मं ध्यात्वा शरदृतुं पुरोडाशं ध्यात्वैवमग्नौ हुत्वा योजय। मदङ्गस्पर्शनार्थात् कलेबरोबृंहिष्यति। ततः स्वात्कायात् सर्वाणि निबिडाः पश्वाद्याः प्रादुर्भविष्यन्ति। ततश्चराचरं जगत् भविष्यति। एतेन जीवात्मपरमात्मनोर्योगेन मोक्षप्रकारोऽपि कथ्यत इत्यनुसन्धेयम्'** इति प्रथमः खण्डः।

**'य इमं सृष्टियज्ञं जानाति मोक्षप्रकारञ्च सर्वमायुरेति। अरोगश्च भवति। श्रीमांश्च भवति। पुत्रपौत्रादिभिस्समृद्धो भवति। विद्वांश्च भवति। महापातकात् पूतो भवति। अगम्यागमनात् पूतो भवति। वेदो हननात्पूतो भवति। सर्वगमनात् पूतो भवति। गुरोरशुश्रूषणात् पूतो भवति। अयाज्ययाजनात् पूतो भवति।**

---

'य एतदुपनिषदं नित्यमधीते सोऽग्निपूतो भवति। स वायुपूतो भवति। स आदित्यपूतो भवति। अरोगी भवति। श्रीमांश्च भवति। पुत्रपौत्रादिभिस्समृद्धो भवति। विद्वांश्च भवति। महापातकात् पूतो भवति। सुरापानात् पूतो भवति। अगम्यागमनात् पूतो भवति। मातृगमनात् पूतो भवति। दुहितृस्नुषाभिगमनात् पूतो भवति। स्वर्णस्तेयात् पूतो भवति। वेदिजन्महानात् पूतो भवति। गुरोरशुश्रूषणात् पूतो भवति। अयाज्ययाजनात् पूतो भवति। अभक्षभक्षणात् पूतो भवति। उग्रप्रतिग्रहात् पूतो भवति। परदारगमनात् पूतो भवति। कामक्रोधलोभमोहेर्ष्यादिभिरबाधितो भवति। सर्वेभ्यः पापेभ्यः मुक्तो भवति। इह जन्मनि पुरुषो भवति। तस्मादेतत् पुरुषसूक्तार्थमतिरहस्यं राजगुह्यं देवगुह्यं गुह्यादपि गुह्यतरं नादीक्षितायोपदिशेत्। नानूचानाय नायज्ञशीलाय नावैष्णवाय नायोगिने न बहुभाषिणे नाप्रियनादिने नासंवत्सरवेदिने नातुष्टाय नानधीतवेदायोपदिशेत्। गुरुरप्येवंविच्छुचौ देशे पुण्यनक्षत्रे प्राणानायम्य पुरुषं ध्यायन्नुपसन्नाय शिष्याय दक्षिणकर्णे पुरुषसूक्तार्थमुपदिशेद्विद्वान्। न बहुशो वदेत्। यातयामो भवति। असकृत्कर्णमुपदिशेत्। एतत्कुर्वाणोऽध्येताध्यापकश्च इह जन्मनि पुरुषो भवतीत्युपनिषत्।' (मुद्गल.उ.२.)

## ८. देवतान्तरोपास्यत्वभङ्गः

**उग्रप्रतिग्रहात् पूतो भवति। परदारगमनात् पूतो भवति। क्रोधादिभिरबाधितो भवति। सर्वेभ्यः पापेभ्यः पूतो भवति। इह जन्मनि पुरुषो भवति। तदिदं पुरुषसूक्तार्थमितिरहस्यं राजगुह्यं गुह्यादपि गुह्यतरम् नादीक्षितायोपदिशेत् नाप्रियवादिने नायज्ञशीलाय नासंवत्सरवासिने नासन्तुष्टाय नानधीतवेदाय। गुरुरेवंभूतस्सन् शुचौ देशे पुण्ये नक्षत्रे प्राणानायम्य पुरुषं ध्यायेत्। उपसन्नाय शिष्याय दक्षिणकर्णे सकृत्पुरुषसूक्तमुपदिशेत्। न बहुशो वदेत्। यातयामो भवतीति। असकृत्कर्णमुपदिशेत्। एवं कुर्वते अध्येष्टा अध्यापकश्चेह जन्मनि भयतोऽवत**' इति।

शाम्बव्यब्राह्मणे - पुरुषसूक्तसंहितायां आदितश्चतसृणामर्थमुक्त्वा 'तस्मादित्यादि' तस्मात् व्यापारात्, अनन्तरं - '**अथ पादनारायणान्मूलप्रकृतिरजायत। सा प्रकृतिः पादनारायणशासनान्महदहङ्कारादीन् पदार्थानजनयत्। एवं सूक्ष्मायां सृष्टौ कृतायां स पादनारायणः स्थूलसृष्ट्यर्थं चतुर्मुखमभिदध्यौ। तत् ध्यानानन्तरमधि-विराजः पश्चात् पुरुषश्चतुर्मुखाख्योऽजायत। स पश्चात् पुरतश्चात्यरिच्यते। अतिरेको वृद्धिः। सर्वकार्यक्षमोऽतिवृद्धकायोऽभवत्। वृद्धकायभूतस्तूष्णीमास्त। अनिरुद्धनारायणोऽप्राक्षीत्। ब्रह्मन् किं तूष्णीं भवसि। अज्ञानादिति होवाच। ब्रह्मंस्तवेन्द्रियाणि देवान् ऋत्विजः कृत्वा त्वदीयं च कलेबरं हविः कृत्वा मां हविर्भुजं ध्यात्वा मय्यग्नौ निवेदय। मदङ्गस्पर्शमात्रेण जगत्कोशभूतस्त्वत्कायो बृंहिष्यते। तस्मादुद्भूतानि प्राणिजातानि यथापुरं निर्माय त्वष्टा भविष्यसि। य एवं सृष्टियज्ञं जानाति स जन्मनीह मुक्तो भवति**' इति।

शतपथब्राह्णेऽध्यात्मखण्डे[१] - '**अतो ज्यायान्**' इत्युक्तं ज्यैष्ठ्यं प्रतिपादितम् - '**यदायं नारायणाख्यः पुरुषो महान् भवति तदानीमेवाणुर्भवति। यदायं व्याप्तो भवति तदैव प्रादेशिको भवति। यदैव भूमौ भवति तदैव परमव्योम्नि भवति। यदा एको भवति तदाऽनेको भवति। यदायं प्राकृतो भवति तदैवाप्राकृतो भवति। यदा विषयविवशो भवति तदैवोपरतो भवति। यदा नरको भवति तदा स्वर्गो भवति। यदा स्त्री भवति तदा पुरुषो भवति। यदा मनुष्यो भवति तदा देवो भवति। यदा सर्वं भवति तदा शून्यो भवति। यदा प्रपञ्चभिन्नो भवति तदैवाभिन्नो भवति। यदा बद्धो भवति तदैव मुक्तो भवति। यदा शुक्लो भवति तदा कृष्णो भवति। यदा**

---

[1] अध्यात्मखण्डद्वयभाष्यं पराशरभट्टारकप्रणीतमिति श्रुतम्।

**शरीरो भवति तदा शरीरी भवति। तस्माद्यानि यानि विरुद्धस्वभावानि तानि तानि सर्वाणि तदानीमेवास्मिन् लीनानि भवन्ति। तस्मादयमीदृश इति दुर्ज्ञानो दुर्वचः दुर्ध्यानः। तस्मात् ज्येष्ठः। अवाङ्मनसयोरगोचर**' इत्येताः श्रुतयः पुरुषसूक्तभाष्योदाहृताः।

किञ्च [१]"**अम्भस्य पार**' इत्यतः प्रभृति [२]"**एष हि देव**' इत्यन्तः प्रकृतसन्दर्भः परमात्मसूक्तं भास्करादिभिस्तथा व्याख्यानात्। तत्र च सूक्ते '**अद्भ्यस्संभूतो हिरण्यगर्भ इत्यष्टौ**' इत्यनेन वाक्येन '**अम्भस्य पार**' इत्येतदन्तर्गतेनाम्भस्य पार इत्यस्य '**अद्भ्यः संभूत**' इत्यस्य '**हिरण्यगर्भ**' इत्यस्य चान्तर्भावितत्वात् त्रयाणामेकवाक्यत्वमवगम्यते।

---

[१] **अम्भस्य पारे** भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान्।
शुक्रेण ज्योतींषि समनुप्रविष्टः प्रजापतिश्चरति गर्भे अन्तः।।
यस्मिन्निदं सं च वि चैति सर्वं यस्मिन्देवा अधि विश्वे निषेदुः।
तदेव भूतं तदु भव्यमानमिदं तदक्षरे परमे व्योमन्।।
येनावृतं खं च दिवं मही च येनादित्यस्तपति तेजसा भ्राजसा च।
यदन्तः समुद्रे कवयो वदन्ति तदक्षरे परमे प्रजाः।।
यतः प्रसूता जगतः प्रसूति तोयेन जीवान्व्यचसर्ज भूम्याम्।
यदोषधीभिः पुरुषान् पशूंश्च विवेश भूतानि चराचराणि।।
अतः परं नान्यदणीयसं हि परात्परं यन्महतो महान्तम्।
यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात्।।
तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम्।
इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः।।
तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः। तदेव शुक्रममृतं तद्ब्रह्म तदापः स प्रजापतिः।।
सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि। कला मुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वशः।।
अर्धमासा मासा ऋतवः संवत्सरश्च कल्पताम्। स आपः प्रदुघे उभे इमे अन्तरिक्षमथो सुवः।।
नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभत्। न तस्येशे कश्चन तस्य नाम महद्यशः।।
न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्।
हृदा मनीषा मनसाभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति।।
**अद्भ्यः सम्भूतो हिरण्यगर्भ इत्यष्टौ**।। (म.ना.उ.१.१-१२)

[२] **एष हि देवः** प्र दिशोऽनु सर्वाः पूर्वो हि जातः स उ गर्भे अन्तः।
स विजायमानः स जनिष्यमाणः प्रत्यङ्मुखस्तिष्ठति सर्वतोमुखः।।(म.ना.उ.२.१)

## ८. देवतान्तरोपास्यत्वभङ्गः

एतेषाञ्च नारायणपरत्वं लिङ्गसमाख्या विनियोगैरवगम्यते। '**अद्भ्यस्संभूत**' इत्यत्र हि [१]'**ह्रीश्च ते लक्ष्मीश्च पत्न्यौ**' इति श्रीभूमिपतित्वमाम्नायते। अत्र ह्रीशब्दस्य

[२]'**रामस्य दक्षिणे पार्श्वे पद्मा श्रीस्समवस्थिता।**
**सव्ये तु श्रीर्विशालाक्षी व्यवसायस्तथाग्रत**'

इति परिशेषात् सव्यपार्श्वान्वयलिङ्गेन च रामायणे भूदेव्यां प्रयोगेण, पाद्मे च '**सव्ये तु श्री**' इत्यस्य स्थाने [३]'**तथैव धरणी देवी दक्षिणेतरगा तथा**' इति प्रयोगाच्चात्रत्य ह्रीशब्दस्योपबृंहणेन भूमिपरत्वाद्व्यवसाय इति संकल्पः सुदर्शन इत्यर्थः। यद्वा लक्ष्मीतन्त्राद्यनुसाराच्छ्रीवाचको ह्रीशब्दः। तथाहि तत्र -

[४]'**परमात्मानमादाय योजयेत् कालवह्निना।**'
[५]'**त्रैलोक्यैश्वर्यदोपेतां मायामस्मिन्नियोजयेत्।**
**इयं सा परमा शक्तिः वैष्णवी सर्वकामदा**'

इति परमात्मकालानलत्रैलोक्यैश्वर्यदमायाशब्दवाच्यतया पूर्वाध्यायसिद्धैरुत्तराध्याये च [६]'**तं विद्धि प्रथमं वर्णं हकारं पुरुषोत्तमम्**' इत्यादिना पुरुषोत्तमस्य [७]तत्तैजसस्यैव

---

[१] **ह्रीश्च ते लक्ष्मीश्च पत्न्यौ**। अहोरात्रे पार्श्वे नक्षत्राणि रूपम्।
अश्विनौ व्यात्तम्। इष्टं मनिषाण। अमुं मनिषाण। सर्वं मनिषाण। (पु.सू.२.६)

[२] रामस्य दक्षिणे पार्श्वे सपद्मा श्रीस्समस्थिता।
सव्येऽपि च मही देवी व्यवसायस्तथाग्रतः।। (रामायण.७.१०९.६)

[३] रामस्य दक्षिणे पार्श्वे पद्महस्ता रमागता।
तथैव धरणीदेवी दक्षिणेतरगा तथा।। (पाद्म.पु.उत्तरे.२४४.६९)

[४] भूमौ पद्मे तथा देव्यास्ततो मन्त्रान् समुद्धरेत्।
परमात्मानमादाय योजयेत् कालवह्निना।।(लक्ष्मीतन्त्र.२५.३६)

[५] लक्ष्मीतन्त्र.२५.३७.

[६] नित्यं प्रेरयितारञ्च प्राणसंज्ञं सनातनम्। **तं विद्धि प्रथमं वर्णं हकारं पुरुषोत्तमम्**।।
यस्तस्य प्रथमोन्मेषः क्रोडीकृतजगत् त्रयः। अशेषभुवनाधारो ज्वलद्रूपोऽमितोऽन्यतः।।
**रेफं** तत्परमं विद्धि तेजोरूपं सनातनम्। उन्मेष एव सम्यक् स व्याप्नुवन् सकलां गतिम्।।
व्यापारान् पञ्च बिभ्रच्च बिन्दून् सृष्ट्यादिलक्षणान्। आश्चर्यज्ञानरूपश्च निमेषोन्मेष संततेः।।
इच्छाज्ञानक्रियारूपं बिभ्रच्च विततिक्रमम्। ईईरूपस्य युग्मस्य स्थितिरेषा सनातनी।।
तदेवं परमोन्मेष रूपाहं विततोदया।
**इच्छाज्ञानक्रियारूपा** पञ्चकृत्यकरी विभोः।। (लक्ष्मीतन्त्र.२७.९-१४)

[७] क - तत्तैजसस्तस्यैव; घ - तत्तैजसस्यैव

परमव्योमेशरूपस्य [1]तदिच्छाज्ञानक्रियारूपाया लक्ष्म्याश्च वाचकतया वक्ष्यमाणैः हकाररेफानुस्वारैकारैः [2]'**हल्लेखा**' मन्त्रमुद्धृत्य

[3]'**हल्लेखा परमादिव्या मत्स्वरूपं पुरन्दरः।**'

[4]'**अनयैव सदा सांख्यैः संख्यायेऽहं सनातनी।**'

[5]'**अनयैव सदा योगैस्समाधीये समाधिना।**

**अभिधीयेऽनुयैवाहं शैवैः षट्त्रिंशदन्तिमा**'

इत्यादिना लक्ष्मीवाचकत्वस्य प्रपञ्चनात्। [6]'**अस्या रूपाणि पञ्चेह तत्वज्ञास्संप्रचक्षत**' इत्यादिनानुस्वारान्तत्वेकारान्तत्वबिन्दुनादान्तत्वमकारान्तत्वैश्चतुरः पक्षानागमादिसिद्धान् प्रदर्श्य वेदे '**ह्रीश्च त**' इति विसर्जनीयान्तां नानाभिप्रायेण [7]'**सृष्टिकारणमन्तेऽन्ये वैदिकास्समधीयत**' इति पञ्चमपक्षोपन्यासाच्च [8]'**विसर्गः सृष्टिकृत् ख्यातो ह्यकारः परमेश्वर**' इति तत्रत्यवर्णनिखण्ड्वनुसारेण सृष्टिकारणशब्दस्य विसर्गवाचित्वात्। एवं श्रीवाचको ह्रीशब्दोऽन्तरङ्गलक्षणया भूमिपरः। [9]'**स्रष्टा विष्णुरियं सृष्टिः श्रीर्भूमिश्रीधरो हरिः**' इति विष्णुपुराणानुसारात्। किञ्च समानप्रकरणे वाजसनेयके

---

[1] लक्ष्मीतन्त्र.२७.१४.

[2] **हल्लेखा** परमात्मस्था या शक्तिर्भुवनेश्वरी।
चिच्छक्तिः शान्तरूपा च घोषिणी घोषसंभवा।। (लक्ष्मीतन्त्र.२५.४६)

[3] मम दिव्या पराशक्तिर्नित्यं मद्धर्मधर्मिणी।
**हल्लेखा परमा विद्या मत्स्वरूपं पुरन्दरः**।।(लक्ष्मीतन्त्र.२७.६)

[4] ओतं प्रोतममुष्यां वै जगच्छब्दार्थतामयम्।
**अनयैव सदा सांख्यैः संख्यायेऽहं सनातनी**।। (लक्ष्मीतन्त्र.२५.४०)

[5] लक्ष्मीतन्त्र.२५.४१.

[6] आदाय सर्वसंभारं प्रतितिष्ठामि निष्कला।
अस्या रूपाणि पञ्चेह तत्वज्ञास्संप्रचक्षते।। (लक्ष्मीतन्त्र.२७.१७)

[7] **सृष्टिकर्तारमन्तेऽन्ये वैदिकास्समधीयते**।
एवं पञ्चस्वरूपाणि तारिकाया विदुर्बुधाः।। (लक्ष्मीतन्त्र.२७.२१)

[8] त्रैलोक्यैश्वर्यदो व्यापी व्योमेशोंकार एव च।
**विसर्गः सृष्टिकृत् ख्यातो ह्यकारः परमेश्वरः**।। (लक्ष्मीतन्त्र.२५.१०)

[9] **स्रष्टा विष्णुरियं सृष्टिः श्रीर्भूमिर्भूधरो हरिः**।
सन्तोषो भगवांल्लक्ष्मीस्तुष्टिर्मैत्रेय शाश्वती।। (विष्णु.पु.१-८-१९)

## ८. देवतान्तरोपास्यत्वभङ्गः

[१]'**ह्रीश्च ते लक्ष्मीश्च पत्न्यौ**' इति श्रूयते। तत्र च लक्ष्मीशब्देन पौनरुक्त्यप्रसङ्गात्। लक्ष्म्या सहैकपत्यन्वयाल्लिङ्गात् '**श्रीर्भूमिः श्रीधरो हरिः**' इत्युदाहृतवैष्णववचनानुगुण्यात्। [२]'**गन्धद्वाराम्**' इति मन्त्रे '**त्वामिहोपह्वये श्रियम्**' इति भूम्यां दृष्टप्रयोगत्वाच्छ्रीशब्दो भूमिपरः नत्वैश्वर्यादिपरः। तत्स्थानापन्नः तैत्तरीये ह्रीशब्दोऽपि तथा। यद्यपि '**श्रीश्च ते लक्ष्मीश्च**' इत्यत्र श्रीशब्दस्य प्रथमश्रुतत्वाच्चरमश्रुतलक्ष्मीशब्दस्यान्यपरत्वं न्याय्यम्। तथापि श्रौतभूमिविषयोदाहृतप्रयोगानुसारादुपबृंहणानुरोधाच्च भूपरत्वम्।

न च [३]'**श्रियं लक्ष्मीमौपलामम्बिकां गाम्**' इत्यायुष्यसूक्तेः श्रीशब्दलक्ष्मीशब्दयोः गौर्यामपि दृष्टप्रयोगत्वादत्रापि तत्परत्वमिति केनचिदुक्तं युक्तम्। तत्र हरिहरविरिञ्चाः स्कन्दपत्नीनामभिधानात्। आरण्यपर्वणि[४] स्कन्दपत्न्या षष्ठीतिथ्यधिदेवतात्वेन षष्ठी नामकत्वम्। देवीमाहात्म्ये चेन्द्रसेनेत्यभिधानं प्रसिद्धम्। बह्वीनां पत्नीनामभिधानादेव षष्ठीञ्चेति समुच्चयोपपत्तिः। यामिन्द्रसेना [५]इत्युदाहृतः तां षष्ठीञ्च इत्यन्वयः। [६]'**षष्ठीं च याम्**' इति पाठे सामानाधिकरण्येनान्वयेऽप्यपौनरुक्त्यैक्येतरपदानां तत्तच्छब्दवाच्यता लक्षणाया वाच्यत्वादुपक्रमश्रीपदस्य मुख्यार्थत्वमङ्गीकृत्येतरपदेषूक्तलक्षणाङ्गीकार्या।

[७]ननु चरमश्रुतस्याम्बिकापदस्य [८]मुख्यार्थता। तस्मादेषां सर्वेषां नाम्नां लक्ष्मीवाचकत्वमेव सिद्ध्यति। अत एव पूर्वतापनीये तृतीयोपनिषदि नृसिंहशक्तिरूपां

---

[१] पु.सू.२.६.

[२] **गन्धद्वारां** दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां **त्वामिहोपह्वये श्रियम्**।। (श्री.सू.९)

[३] **श्रियं लक्ष्मीमौपलामम्बिकां गां** षष्ठीं च **यामिन्द्रसेनेत्युदाहुः**।
तां विद्यां ब्रह्मयोनिं सरूपामिहायुषे तर्पयामो घृतेन।(आयुष्य.सू.४)

[४] बृहस्पतिर्मन्त्रविद्धि जजाप च जुहाव च। एवं स्कन्धस्य महिषीं देवसेनां विदुर्जनाः।।
षष्ठीं यां ब्राह्मणाः प्राहुः लक्ष्मीमाशां सुखप्रदाम्। सिनीवालीं कुहूं चैव सद्वृत्तिमपराजिताम्।।
यदा स्कन्धः पतिर्लब्धः शाश्वतो देवसेनया। तदा तमाश्रयल्लक्ष्मीः स्वयं देवी शरीरिणी।।
श्रीजुष्टः पञ्चमीं स्कन्धस्तस्माच्छ्री पञ्चमी स्मृता।
षष्ठ्यां कृतार्थोऽभूद्यस्मात्तस्मात् **षष्ठी** महातिथिः।। (महा.वन.२२९.४९-५२)

[५] क - घ - इत्याहुः

[६] आयुष्य.सू.४.

[७] क - न तु

[८] क - अमुख्यार्थता; घ - मुख्यार्थता

[1]नानाशब्दवाच्यां लक्ष्मीमधिकृत्य [2]"**श्रियं लक्ष्मीमौपलामम्बिकां गां षष्ठीं च यामिन्द्रसेनेत्याहुः। ताम् विद्यां ब्रह्मयोनिं सरूपामिहायुषे शरणमहं प्रपद्ये**' इति श्रूयते। वस्तुतस्तु तत्र तथात्वेऽप्यत्र नाम्नां स्वारस्यस्यानुरोध्यत्वादौचित्याच्च बह्वीनामेव देवीनामिहाभिधानमौचित्यञ्च चतुर्णाम् [3]अवताराणां पूर्वमिहाभिधानात्। तथाहि [4]'**यो ब्रह्मा**' इति चतुर्मुखोऽभिधीयते स्वारस्यात्। यो ब्रह्मा स न आयुर्दधातु तस्मै जुहोमि हविषा घृतेनेत्यन्वयः। प्राणेश्वरः कृत्तिवासाः पिनाकी ईशानो देवः ब्रह्मणः चतुर्मुखादुज्जहार - उद्बभूव। धातूनामनेकार्थत्वात् तत्तत्कर्मानुक्तेश्च। य ईशानः चतुर्मुखादुज्जहार स ईशानो न आयुर्दधातु तस्मै जुहोमि हविषा घृतेनेत्यन्वयः तनूर्वर्षिष्ठेतिवत्। 'यो ब्रह्मा' इत्यनन्तरमेव 'स न आयुर्दधातु' इति वक्तव्येऽप्युभयोरन्वय-विवक्षयैवोभयानन्तरं पाठः तनूर्वर्षिष्ठेतिवदेव।

अथवा 'यो ब्रह्मा चतुर्मुखः ब्रह्मणः परमात्मन उज्जहार स न आयुर्दधातु, यः प्राणेश्वरः कृत्तिवासाः पिनाकी ईशानो देवः स न आयुर्दधातु। यद्वा यो ब्रह्मा ब्रह्मण उज्जहार स न आयुर्दधातु, यः प्राणेश्वरः कृत्तिवासाः पिनाकी ईशानो देवः ब्रह्मण उज्जहार, स न आयुर्दधात्वित्यर्थः। अत्रापि ब्रह्मपदं परमात्मपरम्।

[5]"**विभ्राजमान**' इत्यादिना भगवानभिधीयते। 'विभ्राजमान' इति नैसर्गिकं तेजोऽभिधीयते। 'रोचमान' इत्यवतारदशायां तदप्रच्युतिः। 'सरिरस्य' - सलिलस्य समुद्रस्य मध्यात्, रोचमान एव, 'अगात्' - अवतीर्णः दुष्कृद्विनाशार्थत्वात् अवतारस्य 'घर्मरुचिः' - अत्युष्णदीधितिः।

---

[1] क - मायाम्

[2] नृ.पू.ता.उ.३.

[3] क - देवानाम्; घ - अवताराणाम्

[4] **यो ब्रह्मा** ब्रह्मण उज्जहार **प्राणैः शिरः कृत्तिवासाः पिनाकी**।
ईशानो देवः स न आयुर्ददातु तस्मै जुहोमि हविषा घृतेन।। (आयुष्य.सू.१)

[5] **विभ्राजमानः** सरिरस्य मध्याद्रोचमानो घर्मरुचिर्य आगात्।
स मृत्युपाशानपनुद्य घोरानिहायुषेणो घृतमत्तु देवः।। (आयुष्य.सू.२)

## ८. देवतान्तरोपास्यत्वभङ्गः

[१]'**ब्रह्मज्योतिः**' इत्यादिना सुब्रह्मण्योऽभिधीयते। ब्रह्मज्योतिश्चतुर्मुखपुत्रो रुद्रः। ब्रह्मपत्नीष्वत्रिसुतत्वेन ब्राह्मणस्य सोमस्य पत्नीषु कृत्तिकासु यं गर्भमादधात् बहुरूपं मातृसंख्यानुरोधाय मुखतो बहुरूपं जयन्तं सुब्रह्मण्यमसुरविजयाय देवसेनापतिपदाभिषेकात् जयशीलम्। वैजयन्तस्सिद्धसेन इति वैजयन्ती। किञ्चिद्विकारेऽपि न दोषः। अतश्चतुर्णां देवानामभिधानात्तेषां पत्नीनामभिधानं युक्तम्। श्रियं लक्ष्मीम् इहायुषे वर्धयामो घृतेन। औपलामम्बिकाम् इहायुषे वर्धयामो घृतेन। गाम् इहायुषे वर्धयामो घृतेन। षष्ठीं च याम् इन्द्रसेनेत्याहुः तामिहायुषे वर्धयामो घृतेन। ब्रह्मयोनिं विद्यां निरुक्तदेवताप्रतिपादक-वेदाधिदेवतामिहायुषे वर्धयामो घृतेनेत्यन्वयः।

[२]'**एकः पुरस्तात्**' इति पुनर्भगवन्तमाह। [३]'**अहो रात्रे पार्श्वे**' इत्येतच्चार्थलक्ष्मी-हरिप्रभृतिरूपविशेषाभिप्रायेण विष्णौ स्वरसम्। [४]'**सीता रात्रिर्दिवा भवान्**' इति पाद्मपुराणवचनेन लक्ष्मीनारायणयोर्रात्रिदिवत्वेनोक्ततयार्थलक्ष्मीरूपस्याहोरात्रपार्श्वकत्वात्। तच्च संदर्शितम् -

**'हस्तैर्बिभ्रत् सरसिजगदाशंखचक्राणि विद्यां**
**पद्मादर्शौ कनककलशं मेघविद्युद्विलासम्।**
**वामे तुङ्गस्तनमविरलाकल्पमाश्लेषलोभात्**
**एकीभूतं वपुरवतु वः पुण्डरीकाक्षलक्ष्म्योः'**

इत्यादिना। वस्तुतस्तु '**अहोरात्र**' इत्यादि कालनिर्वाहकत्वपरम्। [५]'**नक्षत्राणि रूपम्**' इत्येतच्च आरण्यपर्वणि पुंसूक्तार्थमनुक्रम्य [६]'**तारारूपाणि दृश्यन्ते यान्येतानि नभः**

---

[१] **ब्रह्मज्योति**र्ब्रह्मपत्नीषु गर्भं यमादधात् पुरुरूपं जयन्तम्।
सुवर्णरम्भग्रहमर्कमर्च्यं तमायुषे वर्धयामो घृतेन ।। (आयुष्य.सू.३)

[२] **एकः पुरस्तात्** य इदं बभूव यतो बभूव भुवनस्य गोपाः।
यमप्येति भुवनँ सामं पराये स नो हविर्घृतमिहायुषेत्तु देवः।। (आयुष्य.सू.७)

[३] पु.सू.२.६.

[४] सीता संज्ञा भवान् सूर्यः **सीता रात्रिर्दिवा भावान्।**
सीता देवी महाकाली महाकालो भवान् सदा।। (पाद्म.पु.उ.२४३.३५)

[५] पु.सू.२.६

[६] **तारारूपाणि दृश्यन्ते यान्येतानि नभः स्थले।**
**मम रूपाणि तान्येव** विद्धि त्वं द्विजसत्तम।। (महा.आरण्य.१८९.१८)

**स्थले। मम रूपाणि तान्येव**' इति मार्कण्डेयं प्रति भगवद्वचनेनोपबृंहितम्। मार्कण्डेयेन च ततः श्रुतवता क्रौष्टुकिं प्रति भुवनकोशं वर्णयता मार्कण्डेयपुराणे तत्प्रपञ्चितम्। तत्र हि

[१]'**भद्राश्वेऽश्वशिरा विष्णुर्भारते कूर्मसंस्थितिः।**
**वाराहः केतुमाले च मत्स्यरूपस्तथोत्तरे**'

इति कूर्मरूपमुपक्षिप्य

[२]'**किन्तु कूर्मस्त्वया पूर्वं भारते भगवान् हरिः।**
**कथितस्तस्य संस्थानं श्रोतुमिच्छाम्यशेषतः**'

इति क्रोष्टुकिप्रश्नमुद्भाव्य - [३]'**नवधावस्थितान्यस्य नक्षत्राणि समन्तत**' इत्युपक्रम्य, [४]'**मध्यसारस्वता मत्स्याश्शूरसेनास्समाधिना**' इत्यादिना देशविशेषान्मध्याद्यवयवविशेष-स्थानभिधाय,

[५]'**कृत्तिकारोहिणीसौम्या तेषां [६]मध्यनिवासतः।**
**नक्षत्रत्रितयं विप्र शुभाशुभविपाकदम्।।**'
[७]'**रौद्रं पुनर्वसूपुष्ये नक्षत्रत्रितयं मुखे**'
[८]'**आश्लेषर्क्षं तथा पैत्रं फल्गुन्यः प्रथमास्तथा**'
[९]'**नक्षत्रत्रितयं पादमाश्रितं पूर्वदक्षिणम्**'

---

[१] मार्क..पु.५१.३१.
[२] मार्क.पु.५५.२.
[३] **नवधा संस्थितेऽन्यस्य नक्षत्राणि समन्ततः।**
विषयाश्च द्विजश्रेष्ठ ये सम्यक्तन्निबोध मे।। (मार्क.पु.५५.५)
[४] **मध्ये सारस्वता मत्स्याश्शूरसेनास्समाथुराः।**
धरण्यया ज्योतिषिका गौरग्रीवा गुडाश्मकाः।। (मार्क.पु.५५.७)
[५] **कृत्तिका रोहिणी सौम्या एतेषां मध्यवासिनाम्।**
नक्षत्रत्रितयं विप्र शुभाशुभविपाकदम्।। (मार्क.पु.५५.१०)
[६] क - मध्ये निवासिनः
[७] **रौद्रं पुनर्वसूपुष्यो नक्षत्रत्रितयं मुखे।**
पादे तद्दक्षिणे देशाः क्रौष्टके वदतः शृणु।। (मार्क.पु.५५.१५)
[८] तथैव पर्णशबराः पादे वै पूर्वदक्षिणे।
**आश्लेषर्क्ष तथा पैत्र्यं फल्गुन्यः प्रथमास्तथा**।। (मार्क.पु.५५.१९)
[९] **नक्षत्रत्रितयं पादमाश्रितं पूर्वदक्षिणम्।**
कालाजिनाञ्चैव शैलिका निकटास्तथा।। (मार्क.पु.५५.२०)

## ८. देवतान्तरोपास्यत्वभङ्गः

**[1]'फाल्गुन्यश्चेतरा हस्तश्चित्रापार्श्वं तथापरम्'**
**[2]'एते जनपदाः पादे स्थिता ये दक्षिणापथे।**
**स्वातीविशाखामैत्रञ्च नक्षत्रत्रयमत्र च।।'**
**[3]'अश्वकेशस्तथा पुच्छे जातिः कूर्मस्य संस्थिताः।'**
**[4]'ऐन्द्रं मूलं तथाषाढं नक्षत्रत्रयमत्र च।'**
**'कूर्मस्य पदमेते वै पश्चिमोत्तरमाश्रिताः।**
**[5]'आषाढाश्रवणे चोभे धनिष्ठा च तदाश्रयाः।'**
**[6]'क्षेमधूर्ताश्च कूर्मस्य वामं कुक्षिमुपाश्रिताः।'**
**[7]'वारुणञ्चात्र नक्षत्रं तद्वत् प्रोष्ठपदद्वयम्।'**
**[8]'पूर्वोत्तरं तु कूर्मस्य पादमेते समाश्रिताः।**
**रेवती चाश्विदेवत्यं याम्यं चर्क्षमिति त्रयम्।।'**
**[9]'एष कूर्मो मयाख्यातो भारते भगवान् विभुः।'**
**[1]'नारायणो ह्यचिन्त्यात्मा यत्र सर्वं प्रतिष्ठितम्।'**

---

[1] **फाल्गुन्यश्चौत्तराहस्तश्चित्रा चर्क्षत्रयं द्विज** ।
कूर्मस्य दक्षिणे कुक्षौ बाह्यपादस्तथापरम्।। (मार्क.पु.५५.२९)

[2] एते जनपदाः पादे स्थिता ये दक्षिणेऽपरे।
स्वात्यो विशाखा मैत्रञ्च नक्षत्रत्रयमेव च।। (मार्क.पु.५५.३३)

[3] एकेक्षणा वाजिकेशा दीर्घग्रीवाः सचूलिकाः।
**अश्वकेशस्तथा पुच्छे जनाः कूर्मस्य संस्थिताः**।।(मार्क.पु.५५.३७)

[4] **ऐन्द्रं मूलं तथाषाढा नक्षत्रत्रयमेव च**।
माण्डव्याश्चण्डखारश्च अश्वकालनदास्तथा।। (मार्क.पु.५५.३८)

[5] **आषाढश्रवणे चोभे धनिष्ठा च यत्र संस्थिता**।
कैलासो हिमवाञ्चैव धनुष्मान् वसुमांस्तथा।।(मार्क.पु.५५.४१)

[6] यौधेया दासमेयाश्च राजन्याः स्यामकास्तथा।
**क्षेमधूर्ताश्च कूर्मस्य वामं कुक्षिमुपाश्रिताः**।। (मार्क.पु.५५.४७)

[7] **वारुणञ्चात्र नक्षत्रं तद्वत् प्रोष्ठपदाद्वयम्**।
येन किन्नरराज्यं चपशुपालं सकीचकम्।। (मार्क.पु.५५.४८)

[8] मार्क.पु.५५.५३.

[9] प्रयतानां मनुष्याणां ग्रहर्क्षोत्थान्यशेषतः।
**एष कूर्मो मयाख्यातो भारते भगवान् विभुः**।। (मार्क.पु.५५.७३)

[2]'**मेषादयस्त्रयो मध्ये मुखे द्वौ मिथुनादिकौ।**'
[3]'**प्राग्दक्षिणे तथा पादे कर्कसिंहौ व्यवस्थितौ।**
**सिंहः कन्या तुला चैव कुक्षौ राशित्रयं स्मृतम्।।**'
[4]'**तुला च वृश्चिकश्चैव पादे दक्षिणपश्चिमे।**
**पूर्वे च वृश्चिकेनैव सह धन्वी व्यवस्थितः।।**'
[5]'**वायव्ये चास्य वै पादे धनुर्मकरकुंभकाः।**
**कुम्भमीनौ तथा चास्य उत्तरं कुक्षिमाश्रितौ।**'
[6]'**मीनमेषौ द्विजश्रेष्ठ पादे पूर्वोत्तरे स्थितौ**'

इति नक्षत्रतनुं कूर्मरूपं भगवन्तमभिधाय, [7]'**पूर्वेण यत्स्थितं वर्षं भद्राश्वं तन्निबोध म**' इति [8]पक्षान्तरं प्रस्तुत्य, [9]'**अत्र चाश्वशिरा देवश्चतुर्बाहुर्जनार्दनः**' [10]'**शिरो हृदयमेढ्रांघ्रिहस्तै ऋक्षत्रयान्वित**' इत्युक्त्वा [11]'**केतुमालमथो वर्षं निबोध मम पश्चिमम्**'

---

[1] **नारायणो ह्यचिन्त्यात्मा यत्र सर्वं प्रतिष्ठितम्।**
अत्र देवाः स्थिताः सर्वे प्रतिनक्षत्रसंश्रयाः।। (मार्क.पु.५५.७४)

[2] तथा मध्ये हुतवहः पृथ्वी सोमश्च वै द्विज।
**मेषादयस्त्रयो मध्ये मुखे द्वौ मिथुनादिकौ**।। (मार्क.पु.५५.७५)

[3] मार्क.पु.५५.७६.

[4] तुलाथ वृश्चिकश्चोभी पादे दक्षिणपश्चिमे।
पृष्ठे च वृश्चिकेनैव सह धन्वी व्यवस्थितः।। (मार्क.पु.५५.७७)

[5] वायव्ये चास्य वै पादे धनुर्ग्राहादिकं त्रयम्।
कुम्भमीनौ तथैवास्य उत्तरां कुक्षिमाश्रितौ।। (मार्क.पु.५५.७८)

[6] **मीनमेषौ द्विजश्रेष्ठ पादे पूर्वोत्तरे स्थितौ।**
कूर्मे देशास्तथार्क्षाणि देशेष्वेतेषु वै द्विज।। (मार्क.पु.५५.७९)

[7] **पूर्वेण यत्स्थितं वर्षं भद्राश्वं तन्निबोध मे।**
श्वेतपर्णश्च नीलश्च शैवालश्चाचलोत्तमः।। (मार्क.पु.५६.४)

[8] क - वर्षान्तरम्; घ - पक्षान्तरम्

[9] तितिक्षादिभिरष्टाभिः प्रकृत्यात्मगुणैर्युताः।
**तत्राप्यश्वशिरा देवाश्चतुर्बाहुर्जनार्दनः**।। (मार्क.पु.५६.१०)

[10] **शिरो हृदयमेढ्रांघ्रिहस्तैश्चाक्षित्रयान्वितः।**
तस्याप्यथैवं विषया विज्ञेया जगतः प्रभोः।। (मार्क.पु.५६.११)

[11] **केतुमालमतो वर्षं निबोध मम पश्चिमम्।**
विशालः कम्बलः कृष्णो जयन्तो हरिपर्वतः।। (मार्क.पु.५६.१२)

## ८. देवतान्तरोपास्यत्वभङ्गः

इति प्रस्तुत्य [१]'**अत्रापि भगवान् हरिः। वाराहरूपी पादास्यहृत्पृष्ठे पार्श्वत स्थितः**' [२]'**त्रिनक्षत्रयुतो देशैर्नक्षत्राणि युतानि च**' इत्यभिधाय, [३]'**अतः परं कुरून् वक्ष्ये निबोधेह ममोत्तरान्**' इत्युत्तरकुरूनधिकृत्य, [४]'**तत्रापि भगवान् विष्णुः प्राक्शिरा मत्स्यरूपवान्**' [५]'**विभक्तो नवधा बिभ्रन्नक्षत्राणि त्रयस्त्रय**' इति भूयसा प्रबन्धेन भूयसां विग्रहाणां नक्षत्रपरत्वं[६] प्रपञ्चितम्। एवं सवैष्णवेऽपि पुराणे नक्षत्ररूपं भगवत उक्तम् -

[७]'**तारामयं भगवतः शिंशुमाराकृति प्रभोः।**
**दिवि रूपं हरेर्यत्तु तस्य पृष्ठे ध्रुवः स्थित**'

इति। भागवते च शिंशुमारं प्रस्तुत्य, [८]'**पुनर्वसुपुष्ये दक्षिणवामयोः श्रोण्येतरार्द्राश्लेषा च दक्षिणवामयोः पादयोरभिजिदुत्तराषाढे दक्षिणवामयोर्नासिकयोः**' इत्यादि।

एवञ्च यद्राजसतामसेषु पुराणान्तरेषु देवतान्तरस्यापि नक्षत्ररूपत्वं कीर्तितं तद्राजभृत्ये राजत्वकीर्तनवत् प्रशंसार्थम्। अतः तदनुसारात्[९] नक्षत्ररूपत्वस्य

---

[१] अत्राप्यायुः समं पूर्वैरत्रापि भगवान् हरिः।
**वाराहरूपी पादास्य हृत्पृष्ठे पार्श्वतस्तथा**।। (मार्क.पु.५६.१६)

[२] **त्रिनक्षत्रयुते देशे नक्षत्राणि युतानि च**।
इत्येत्केतुमालं ते कथितं मुनिसत्तम।। (मार्क.पु.५६.१७)

[३] **अतः परं कुरून् वक्ष्ये निबोधेह ममोत्तरान्**।
तत्र वृक्षा मधुफला नित्यपुष्पफलोपगाः।। (मार्क.पु.५६.१८)

[४] वनेषु तेषु रम्याणि शतशोऽथ सहस्रशः।
**तत्रापि भगवान् विष्णुः प्राक्छिरा मत्स्यरूपवान्**।। (मार्क.पु.५६.२६)

[५] **विभक्तो नवधा बिभ्रत् नक्षत्राणां त्रयं त्रयम्**।
देशास्तत्रापि नवधा विभक्ता मुनिसत्तम।। (मार्क.पु.५६.२७)

[६] क - रूपत्वम्; घ - परत्वम्

[७] तारामयं भगवतः शिंशुमाराकृति प्रभोः।
दिवि रूपं हरेर्यत्तु तस्य **पुच्छे स्थितो ध्रुवः**।। (विष्णु.पु.२.९.१)

[८] **पुनर्वसुपुष्यौ दक्षिणवामयोश्रोण्योरार्द्राऽऽश्लेषे च दक्षिणवामयोः पादयोरभिजिदुत्तराषाढे दक्षिणवामयोर्नासिकयो**र्यथासङ्ख्यं श्रवणपूर्वाषाढे दक्षिणवामयोर्लोचनयोः धनिष्ठामूलं च दक्षिणवामयोः कर्णयोः मघादीन्यष्टनक्षत्राणि दक्षिणायनानि वामपार्श्ववङ्क्रि युञ्जीत तथैव मृगशीर्षादीन्युदगयनानि दक्षिणपार्श्ववङ्ङ्क्रिषु प्रातिलोम्येन प्रयुञ्जीत। शतभिषाज्येष्ठे स्कन्धयोर्दक्षिणवामयोर्न्यवसत्।। (भा.पु.५.२३.६)

[९] क - तन्निरासात्; घ -तदनुसारात्

रुद्रासाधारण्यात्तल्लिङ्गबलादेतदनुवाकस्य रुद्रपरत्वन्न शङ्कनीयम्। आदित्यवर्णत्वमपि लिङ्गम्। [१]'**ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्**' इत्यस्य सन्निधौ [२]'**आदित्यवर्णं तमसः परस्तात्**' इति गीतत्वात्। किञ्च [३]'**उत्तरनारायणेनादित्यमुपतिष्ठेत**' इत्यादौ नारायणसमाख्यायाः तद्देवताकत्वनिमित्तताया दर्शनाद्भगवत्परत्वं सिद्धम्।

[४]नारायणीयोपनिषदि आदित्यमण्डलान्तर्वर्तितया एतद्भर्गाख्यं विष्णुसंज्ञं सर्वाधारं धाम [५]'**आनन्दतृप्तमचलममृतमच्युतं विष्णुसंज्ञितं सर्वाधारं धाम**' इति प्रस्तुते विष्णौ [६]'**एतत् सत्यधर्मं**, **एतद्भानुवर्णम्**' इति भानुवर्णत्वश्रुतेः [७]'**प्राहुरादित्यवर्णं तं पुरुषं तमसः परम्**' इति मोक्षधर्मवचनेन वामनप्रादुर्भावे महापुरुषस्तवे उपनिषत्सु पठितैर्नामभिः तुष्टावेत्युपक्रम्य [८]'**आदित्यवर्ण**' [१]'महापुरुषोत्तम' इति स्तुत्यक्तेश्च। [२]'**अम्भस्य पार**'

---

[१] **ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्।**
यः प्रयाति त्यजन्देहं स याति परमां गतिम्।। (महा.भीष्म.३२.१३, भ.गी.८.१३)

[२] कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः।
सर्वस्य धातारमचिन्त्यरूपं **आदित्यवर्णं तमसः परस्तात्**।। (महा.भीष्म.३२.१३, भ.गी.८.९)

[३] त्रैधातवीययोदवसाय पृथगरणीष्वग्नीन् समारोप्य **उत्तरनारायणेनादित्यमुपतिष्ठेत**।
(आप.श्रौ.सू.२०.२४.१६)

[४] क - मैत्रायणीयोपनिषदि; घ - नारायणीयोपनिषदि

[५] मरुतो जगती सप्तदशो वैरूपं वर्षा अपानः शुक्र आदित्याः पश्चादुद्यन्ति तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्त्यन्तर्विवरेणेक्षन्ति तच्छान्तमशब्दमभयमशोक**मानन्दमचलममृतमच्युतं ध्रुवं विष्णुसंज्ञितं सर्वापरं धाम**। (मै.उ.७.३)

[६] नभसोऽन्तर्गस्य तेजसोंऽशमात्रमेतद्यदादित्यस्य मध्ये उदित्वा मयूखे भवत एतत्सवित् **सत्यधर्म** एतद्यजुरेतत्तप एतदग्निरेतद्वायुरेतत् प्राण एतदाप एतच्चन्द्रमा एतच्छुक्रमेतदमृतम्। एतद् ब्रह्मविषयमे**तद्भानुवर्ण**वस्तस्मिन्नेव यजमानाः सैन्धव इव व्लीयन्त। एषा वै ब्रह्मैक्ताऽत्र हि सर्वे कामाः समाहिता इत्यत्रोदाहरन्ति। (मै.उ.६.३५)

[७] **प्राहुरादित्यवर्णं तं पुरुषं** तमसः परम्।
बृहन्तं सर्वगं देवमीशानं वरदं प्रभुम्।। (महा.शान्ति.३४०.५७)

[८] त्वं गण इष्टोऽसि इज्योऽसि ईड्योऽसि **त्वष्टा** त्वमसि समिद्धस्त्वमेव गतिर्गतिमतामसि मोक्षोऽसि योगोऽसि गुह्योऽसि सिद्धोऽसि धन्योऽसि धातासि परमोऽसि यज्ञोऽसि सोमोऽसि यूपोऽसि दक्षिणासि दीक्षासि विश्वमसि स्थविष्ट स्थविर विश्व तुराषाट् हिरण्यगर्भ हिरण्यनाभ हिरण्यनारायण नारायणान्तर नृणामयन **आदित्यवर्ण** आदित्यतेजः **महापुरुष सुरोत्तम** आदिदेव पद्मनाभ पद्मेश पद्माक्ष पद्मगर्भ हिरण्याग्रकेश शुक्लविश्वदेव विश्वतोमुख विश्वाक्ष विश्वसंभव विश्वभुक्त्वमेव भूरिविक्रम चक्रक्रम

## ८. देवतान्तरोपास्यत्वभङ्गः

इत्यत्र [३]'**समुद्रेऽन्तं विश्वशंभुवम्**' इति नारायणानुवाकवाक्येन [४]'**अहं रुद्राय धनुरा तनोमि ब्रह्मद्विषे शरवे हन्त वा उ**' [५]'**अहं सुवे पितरमस्य मूर्धन्मम योनिरप्स्वन्तः समुद्र**' इति ब्रह्मभावनया [६]स्वात्मनो ब्रह्मधर्मानभिलंपन्त्या वाग्देव्या वाक्येनाम्भृणीसूक्त-गतेन [७]'**समुद्रेऽन्तः कवयो वि चक्षते मरीचीनां पदमिच्छन्ति वेधस**' इति।

[८]'**स्वर्णधर्मानुवाकेन महापुरुषविद्यया।**
**पौरुषेणाथ सूक्तेन सामभी राजतादिभिः**'

इति भागवतवचनेन विष्णुपूजायां विनियुक्तब्रह्मपरानुवाक्यान्तरस्थवाक्ये[९] नारायणे प्रसिद्धम्। '**महार्णवे शयानोऽप्सु**' इत्यादिनोपबृंहणगतेन समुद्रशायित्वञ्च पर्यवसितम्। समुद्रान्तर्वर्तित्वं [१०]'**यमन्तः समुद्रे कवयो वदन्ति**' इत्यनूद्यमानं नारायणनामनिर्वचन-प्रत्यभिज्ञापकं तत्प्रतिपाद्यस्य नारायणत्वे लिङ्गम्। [११]'**अहं रुद्राय**' इति मन्त्रे 'शरु' शब्दो

---

त्रिभुवन सुविक्रम स्वविक्रम बभ्रु सुविभुः प्रभाकर शम्भुः स्वयंभूश्च भूतादिः भूतात्मन् महाभूत विश्वभुक्त्वमेव विश्वगोप्तासि विश्वंभर पवित्रमसि हविर्विशारद हविकर्मा अमृतेन्धन सुरासुरगुरो महादेव नृदेव ऊर्ध्वकर्मन् पूतात्मन् अमृतेश दिवस्पृक् विश्वस्य पते घृताच्यासि अनन्तकर्मन् द्रुहिणवंश स्ववंश विश्वपास्त्वं त्वमेव विश्वं बिभर्ति वरार्थिनो नः त्रायस्वेति।। (ह.वं.३.६८.१३४-२०२)

[१] क - तमभिपुरुष पुरुषोत्तम; घ - महापुरुषोत्तमेति

[२] **अम्भस्य पारे** भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान्।
शुक्रेण ज्योतींषि समनुप्रविष्टः प्रजापतिश्चरति गर्भे अन्तः।। (म.ना.उ.१.१)

[३] अनन्तमव्ययं कविं **समुद्रेऽन्तं विश्वशम्भुवम्**।
पद्मकोशप्रतीकाशं सुषिरं चाप्यधोमुखम्।। (म.ना.उ.११.७)

[४] **अहं रुद्राय धनुरा तनोमि ब्रह्मद्विषे शरवे हन्त वा उ।** अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आ विवेश। (ऋग्वेद .१०.१२५.६)

[५] **अहं सुवे पितरमस्य मूर्धन्मम योनिरप्स्वन्तस्समुद्रे**। ततो वि तिष्ठे भुवनानु विश्वोतामूं द्यां वर्ष्मणोप स्पृशामि। (ऋग्वेद.१०.१२५.७)

[६] क - स्वामिनः; घ - स्वात्मनः

[७] पतङ्गमक्तमसुरस्य मायया हृदा पश्यन्ति मनसा विपश्चितः।
**समुद्रे अन्तः कवयो वि चक्षते मरीचीनां पदमिच्छन्ति वेधसः**।। (ऋग्वेद.१०.१७७.१)

[८] स्वर्णधर्मानुवाकेन महापुरुषविद्यया। पौरुषेणापि सूक्तेन सामनीराजनादिभिः।। (भा.पु.११.२७.३०)

[९] क - वाक्येन च

[१०] येनावृतं खं च दिवं मही च येनादित्यस्तपति तेजसा भ्राजसा च ।
**यदन्तः समुद्रे कवयो वदन्ति** तदक्षरे परमे प्रजाः।। (म.ना.उ.१.३)

[11] ऋग्वेद .१०.१२५.६.

हिंसकार्थः चतुर्थी द्वितीयार्थे। मूर्ध्नीति सर्गाद्यकालः योनिशब्दस्स्थानवाची। यद्यपि तामसपुराणभेदे-

[1]'**मध्ये लिङ्गं महाघोरं महाब्धेरम्भसि स्थितम्।**
**ध्यात्वा प्रदोषकाले तु शिवसायुज्यमाप्नुयात्**'

इति दृश्यते। तथापि न तदिह ग्राह्यम्। श्रुतिप्रसिद्धस्यैव संभवे ग्राह्यत्वात्। तस्य ध्यानशेषतयार्थः तथात्वासिद्धेश्च। एवं विद्युतः पुरुषादधीत्युक्तविद्युद्वर्णत्वमपि लिङ्गम्। [2]'**विद्युद्रूपा महात्मन**' इत्यादिनोद्योगपर्वणि भगवतो वासुदेवस्य धृतराष्ट्राय विश्वरूपं प्रदर्शयतो विद्युद्वर्णविग्रहाद्देवादीनामाविर्भावं वर्णयता वचनेन सिद्धत्वात्। मानवे धर्मशास्त्रे उपक्रमे [3]'**आपो नारा**' इत्यादिना प्रस्तुतं नारायणं [4]'**रुक्माभं स्वप्नधीगम्यं विद्यात्तु पुरुषं परम्**' इति [5]उपसंहारस्थेन रुक्मवर्णपुरुषत्वेनाभिदधता वचनेन सिद्धत्वाच्च। एवं [6]'**विश्वं पुराणं तमसः परस्तात्**' इति श्रुतं तमःपारवर्तित्वमपि लिङ्गम्। तद्धि [7]'**वषट् ते विष्णु**' इत्युपक्रम्य '**क्षयन्तमस्य रजसः पराक**' इति रजोगुणोपलक्षितप्रकृतेः परत्वं वर्णयन्त्या श्रुत्या नारायणासाधारणत्वेन सिद्धम्। [8]'**प्राहुरादित्यवर्णं तं पुरुषं तमसः**

---

[1] मध्ये लिङ्गं महाघोरं महाब्धेरम्भसि स्थितम्।
कृत्वा भक्त्या प्रतिष्ठाप्य शिवसायुज्यमाप्नुयात्।। (लिङ्ग.पु.७६.६१)

[2] एवमुक्त्वा जहासोच्चैः केशवः परवीरहा।
तस्य संस्मयतः शौरे**र्विद्युद्रूपा महात्मनः**।। (महा.उद्योग.१३१.४)

[3] **आपो नारा** इति प्रोक्ता आपो वै नरसूनवः।
ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः।। (मनु.स्मृ.१.१०)

[4] प्रशासितारं सर्वेषामणीयांसमणोरपि।
**रुक्माभं स्वप्नधीगम्यं विद्यात्तु पुरुषं परम्**।। (मनु.स्मृ.१२.१२२)

[5] क -उपसंहारस्थवचनेन; घ - उपसंहारस्थेन

[6] अतः परं नान्यदणीयसं हि परात्परं यन्महतो महान्तम्।
यदेकमव्यक्तमनन्तरूपं **विश्वं पुराणं तमसः परस्तात्**।। (म.ना.उ.१.५)

[7] वषट् ते विष्ण्वास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम्।
वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयम्पात स्वस्तिभिः सदा नः।।
प्र तत्ते अद्य शिपिविष्ट नामार्यः शंसामि वयुनानि विद्वान्।
तं त्वा गृणामि तवसमतवीयान् क्षयन्तमस्य रजसः पराके।। (तै.सं.२.२.१२)

[8] **प्राहुरादित्यवर्णं तं पुरुषं तमसः परम्।**
बृहन्तं सर्वगं देवमीशानं वरदं प्रभुम्।। (महा.शान्ति.३४०.५७)

## ८. देवतान्तरोपास्यत्वभङ्गः

**परम्**' इति नरायणीयवचनेन, '**तमसः परमो धाता शंखचक्रगदाधर**' इति श्रीरामायणवचनेन च तदसाधारणत्वेन सिद्धम्। [१]"**तदेव भूतं तदु भव्यमानमिदम्**' इत्युक्तं सार्वात्म्यमपि लिङ्गम्। तस्य [२]"**चक्षुश्च द्रष्टव्यं च नारायण**' इत्यादिना सर्वस्य नारायणात्मकत्वमभिधायाम्नाते [३]"**पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम्**' इत्यस्मिन् सौबालमन्त्रे भगवदसाधारणत्वेन सिद्धत्वात्। एवं [४]'**न तस्येशे कश्चन**' इति प्रतिपादितमनन्येश्वरत्वमपि लिङ्गम्। [५]"**पतिं विश्वस्यात्मेश्वरम्**' इति नारायणानुवाके तस्य भगवदसाधारण्यसिद्धेः। एवं [६]"**तस्य नाम महद्यश**' इत्युक्तं महायशस्त्वमपि

---

[१] यस्मिन्निदं सं च वि चैति सर्वं यस्मिन् देवा अधि विश्वे निषेदुः।
**तदेव भूतं तदु भव्यमानमिदं** तदक्षरे परमे व्योमन्।। (म.ना.उ.१.२)

[२] नैवेह किञ्चनाग्र आसीदमूलमनाधारमिमाः प्रजाः प्रजायन्ते दिव्यो देव एको नारायणश्**चक्षुश्च द्रष्टव्यञ्च** नारायणः श्रोत्रञ्च श्रोतव्यञ्च नारायणो घ्राणं च घ्रातव्यञ्च नारायणो जिह्वा च रसयितव्यञ्च नारायणस्त्वक् च स्पर्शयितव्यञ्च नारायणो मतश्च मन्तव्यञ्च नारायणो बुद्धिश्च बोद्धव्यञ्च नारायणोहङ्कारश्चाहसंकर्तव्यञ्च नारायणः। चित्तञ्च चेतयितव्यञ्च नारायणो वाक् च वक्तव्यञ्च नारायणो हस्तौ चादातव्यञ्च नारायणः पादौ च गन्तव्यञ्च नारायणः पायुश्च विसर्जयितव्यञ्च नारायण उपस्थश्चानन्दयितव्यञ्च नारायणो धाता विधाता कर्ता विकर्ता दिव्यो एको नारायण आदित्या रुद्रा मरुतो वसवोऽश्विनावृचो यजूँषि सामानि मन्त्रोऽग्निराज्याहुतिर्नारायण उद्भवः सम्भवो दिव्यो एको नारायणो माता पिता भ्राता निवासश्शरणं सुहृद्गतिर्नारायणो विरजा सुदर्शनाजितासोम्यामोघाकुमारामृतासत्यामध्यमानासीराशिशुरासूरासूर्यास्वराविज्ञेयानि नाडीनामानि दिव्यानि गर्जति गायति वाति वर्षति वरुणोऽर्यमा चन्द्रमाः कला कलिर्धाता ब्रह्मा प्रजापतिर्मघवा दिवसाश्चार्धदिवसाश्च कलाः कल्पाश्चोर्ध्वञ्च दिशश्च सर्वं नारायणः। **पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम्**। उतामृतत्वस्येशानो यदन्नेनातिरोहति।। (सु.उ.६)

[३] सु.उ.६

[४] नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभत्।
**न तस्येशे कश्चन** तस्य नाम महद्यशः।। (म.ना.उ.१.१०)

[५] **पतिं विश्वस्यात्मेश्वरं** शाश्वतं शिवमच्युतम्।
नारायणं महाज्ञेयं विश्वात्मानं परायणम्।। (म.ना.उ.११.३)

[६] नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभत्।
न तस्येशे कश्चन **तस्य नाम महद्यशः**।। (म.ना.उ.१.१०)

लिङ्गम्। तत्तस्य [१]"**त्रेधोरुगायः**' [२]"**त्रेधा विष्णुरुरुगायो विचक्रमे**' विष्णव उरुगायो यदादिशत् तदुरुगायस्य विष्णोः त्वं विष्णुरुरुगायो [३]ममास्पदत्वादिषु विष्णु साधारण्येनाभ्यस्यमानत्वात्। नक्षत्रेष्टौ विष्णुर्वा अकामयतेत्यादि इष्टिविधौ ततो वै स पुण्यं श्लोकमशृणोदिति विष्ण्वसाधारणत्वेन पुण्यश्लोकवत्वप्रसिद्धेः।

[४]"**क्षणा निमिषः काष्ठाश्च कलास्त्रैकाल्यमेव च।**
**मुहूर्तास्तिथयो मासाः दिनं संवत्सरं तथा।**
**ऋतवः कालयोगाश्च प्रमाणं त्रिविधं त्रिषु**'

इति विष्णुधर्मतयानुशासनिकोपबृंहिता कला मुहूर्ता इति श्रुता कालसृष्टिरपि लिङ्गम्। [५]"**न सन्दृशे तिष्ठति रूपमस्य**' इत्युक्तम्। अग्राह्यत्वमपि लिङ्गम्। तस्य मोक्षधर्मे [६]"**न**

---

[१] विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजाँसु योऽस्कभायादुत्तरँ सधस्थं विचक्रमाणः **त्रेधोरुगायो** विष्णोरराटमसि विष्णोः पृष्ठमसि विष्णोः श्नप्तेस्थो विष्णोस्यूरसि विष्णोर्ध्रुवमसि वैष्णवमसि विष्णवे त्वा।। (विष्णु.सू.१)

[२] महीं देवीं विष्णुपत्नीमजूर्याम्। प्रतीचीमेनाँ हविषा यजामः।
**त्रेधा विष्णुरुरुगायो विचक्रमे**। (तै.ब्रा.३.१.२.६)

[३] क - नमस्य इत्यादिषु; घ - ममास्पदत्वादिषु

[४] क्षणा लवा मुहूर्ताश्च निमेषा युगपर्ययाः।
रक्षन्तु सर्वत्र गतं त्वां यादव सुखावहम्।। (महा.आनु.१४.२३,)
पृथिवी चान्तरिक्षं च नक्षत्राणि ग्रहास्तथा।
मसार्धमासा ऋतवो रात्र्यः संवत्सराः क्षणाः।। (महा.आनु.१५.१८)
मुहूर्ताश्च निमेषाा तथैव युगपर्ययाः।
दिव्या राजन्नमस्यन्ति विद्याः सर्वा दिशस्तथा।। (महा.आनु.१५.१९)
ऋतुः संवत्सरो मासः पक्षः संख्यासमापनः।
कला काष्ठा लवो मात्रा मुहूर्तोऽहः क्षणाः क्षणाः।। (महा.आनु.१७.१३८)
संवत्सरः स ऋतुः सोऽर्धमासः सोऽहोरात्रः स कला वै स काष्ठाः।
मात्रा मुहूर्ताश्च लवाः क्षणाश्च विष्वक्सेने सर्वमेतत्प्रतीहि।। (महा.आनु.१४३.३०))
सर्वे निमेषा जज्ञिरे विद्युत पुरुषादधि।
कला मुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वशः।। (म.ना.उ.१.८)
अर्धमासा मासा ऋतवः संवत्सरश्च कल्पताम्।
स आपः प्रदुघे उभे इमे अन्तरिक्षमथो सुवः।। (म.ना.उ.१.९)

[५] **न सन्दृशे तिष्ठति रूपमस्य** न चक्षुषा पश्यति कश्चनैनम्।
हृदा मनीषा मनसाभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति।। (म.ना.उ.१.११, कठ.उ.२.३.९)

## ८. देवतान्तरोपास्यत्वभङ्गः

**सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्।**' '**धृत्या च भक्त्या च समाहितात्मा ज्ञानस्वरूपं** [2]'**परिपश्यन्तीह**' इति। नारायणीये ब्रह्मरुद्रसंवादे -

[3]'**न स शक्यस्त्वया द्रष्टुं मयान्यैर्वापि सत्तम।**'

[4]'**ममान्तरात्मा तव च ये चान्ये देहिसंज्ञिताः।**

**सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचित्**' इति

भगवदसाधारण्येनोपबृंहणात् [5]'**विश्वतश्चक्षुः**' इत्याद्युक्तं विश्वाक्षत्वादिकमपि लिङ्गम्। तस्य नारायणानुवाके [6]'**विश्वमूर्धा विश्वभुजो विश्वपादाक्षिनासिक**' इति नारायणीय-वचनोपबृंहिते नारायणधर्मत्वेन प्रसिद्धत्वात्। [7]'**येनादित्यस्तपति तेजसा भ्राजसा च**' इति श्रुतसूर्यादितेजोऽनुग्राहकत्वमपि लिङ्गम्। तस्य [8]'**तेजो जगद्भासयतेऽखिलम्। यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्**' इति भगवद्गीतावचनेन [9]'**तस्यादित्यो गामुपयुज्य भाति**' [10]'**तमध्वरे वेदविदः पठन्ति**' इत्याद्यानुशासनिकवचनेन

---

[1] **न सादृश्ये तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्।**
मनीषयाथो मनसा हृदा च य एनं विदुरमृतास्ते भवन्ति।।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्।। (महा.उद्योग.४६.६)
न चक्षुषा पश्यति रूपमात्मनो न पश्यति स्पर्शनमिन्द्रियेन्द्रियम्।
न श्रोत्रलिङ्गं श्रवणेन दर्शनं तथा कृतं पश्यति तद्विनश्यति।। (महा.शान्ति.२०३.४)

[2] क - परिपश्यतीह; घ - परिपश्यन्निह

[3] **न स शक्यस्त्वया द्रष्टुं मयान्यैर्वापि सत्तम।**
सगुणो निर्गुणो विश्वो ज्ञानदृश्यो ह्यसौ स्मृतः।। (महा.शान्ति.३५१.२)

[4] महा.शान्ति.३५१.४.

[5] **विश्वतश्चक्षुरुत** विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्।
सं बाहुभ्यां धमति सं पतत्रैर्द्यावापृथिवी जनयन् देव एकः।। (म.ना.उ.२.२)

[6] **विश्वमूर्धा विश्वभुजो विश्वपादाक्षिनासिकः।**
एकश्चरति क्षेत्रषु स्वैरचारी यथासुखम्।। (महा.शान्ति.३५१.५)

[7] येनावृतं खं च दिवं मही च **येनादित्यस्तपति तेजसा भ्राजसा च।**
यमन्तः समुद्रे कवयो वयन्ति यदक्षरे परमे प्रजाः।। (म.ना.उ.१.३)

[8] यदादित्यगतं तेजो जगद्भासयतेऽखिलम्।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्।। (महा.भीष्म.३९., भ.गी.१५.१२)

[9] तस्यैवोर्ध्वं तिर्यगधश्चरन्ति गभस्तयो मेदिनीं भासयन्तः।
तं ब्राह्मणा वेदविदो जुषन्ति **तस्यादित्यो गामुपयुज्य भाति।।** (महा.आनु.१५८.२२)

[10] स मासि मास्यध्वरकृद्विधत्ते **तमध्वरे वेदविदः पठन्ति।**

[1]'**तस्मादेव समुद्भूतं तेजोरूपगुणात्मकम्।**
**येन [2]संस्तूयते सूर्यस्तेन लोकान् विराजत**'
इति मोक्षधर्मवचनेन,
'**तस्य रूपं तु भगवान् परब्रह्ममयो हरिः।**
**तेजसाधिष्ठितस्तस्य भानुर्भुवनभासकः।**
**पर्येति मेरुं देदीप्यन् ज्योतिश्चक्रसमन्वित**'
इति भगवद्रूपप्रतिष्ठाध्यायगतब्रह्माण्डवचनेन च वैष्णवत्वेन सिद्धत्वात् स नो बन्धुरित्युक्तम्। [3]'**माता पिता भ्राता निवासश्शरणं सुहृत्। गतिर्नारायण**' इति सौबालवाक्यप्रपञ्चितम्। [4]'**तस्य नाभ्यां पुष्करं संप्रसूतं यत्रोत्पन्नः स्वयमेवामितौजाः**' [5]'**अजस्य नाभावध्येकं यस्मिन् विश्वं प्रतिष्ठितम्**' इत्यादिशान्त्यानुशासनिकवचनैः भगवत्परतयोपबृंहितेन '**यो नः पिता जनिता**' इति तैत्तिरीयवाक्येन च सिद्धम्। [6]'**सर्वेषामेव लोकानां पिता माता च माधव**' इत्यारण्यपर्ववचनसिद्धं सर्वविध-बन्धुत्वमपि लिङ्गम्। [7]'**यदेकमव्यक्तमनन्तरूपम्**' इत्येतच्च। श्रीमत्सुन्दरकाण्डे
[8]'**किं वैष्णवं वा कपिरूपमेत्य रक्षोविनाशाय परं सुतेजः।**
**अनन्तमव्यक्तम् अचिन्त्यमेकं[9] स्वमायया सांप्रतमागतं वा**'
इत्युपबृंहणाद्विष्णुपरम्।

---

स एवोक्तश्चक्रमिदं त्रिनाभिसत्पाश्वयुक्तं वहते वै त्रिधाम।। (महा.आनु.१५८.२३)

[1] महा.शान्ति.३४४.८.

[2] क - संयुज्यते; घ - संस्तूयते

[3] सु.उ.६.

[4] **अस्य नाभ्यां पुष्करं संप्रसूतं यत्रोत्पन्नः स्वयमेवामितौजाः।**
तेनाच्छिन्नं तत्तमः पार्थ घोरं यत्तत् तिष्ठत्यर्णवं तर्जयानम्।। (महा.आनु.१५८.९)

[5] **अजस्य नाभावध्येकं यस्मिन् विश्वं प्रतिष्ठितम्।**
पुष्करे पुष्कराक्षस्य तस्मै पद्मात्मने नमः।। (महा.शान्ति.४७.५९)

[6] **सर्वेषामेव लोकानां पिता माता च माधवः।**
गच्छध्वमेनं शरणं शरण्यं कौरवर्षभाः।। (महा.वन.१८९.५७)

[7] अतः परं नान्यदणीयसं हि परात्परं यन्महतो महान्तम्।
**यदेकमव्यक्तमनन्तरूपं** विश्वं पुराणं तमसः परस्तात्।। (म.ना.उ.१.५)

[8] रामायण.५.५४.३७.

[9] क - अचिन्त्यरूपम्

## ८. देवतान्तरोपास्यत्वभङ्गः

ननु [१]'**अम्भस्य पार**' इत्यनुवाकान्ते [२]'**पुरुषस्य विद्म सहास्राक्षस्य महादेवस्य**' इति श्रुतेरनुवाकः [३]स्फुट इति चेन्न। [४]'**एष हि देव**' इत्यतः प्राक्तनस्यैव भागस्य परमात्मसूक्तत्वेन भास्करादिभिरुक्तत्वात् तत्सूक्तानन्तर्भूतस्यास्य तदैकार्थ्या नावश्यंभावात्। अस्तु वा '**पुरुषस्य**' इत्यतः प्राक्तनः सर्वो ग्रन्थो भगवत्परः। हरिवंशे पौष्करप्रादुर्भावे [५]'**अहमग्निर्ब्रह्ममयः सदसस्पतिरद्भुत**' इति मात्स्ये च। तत्रैव [६]'**अहमग्निर्हव्यवाहः सदसस्पतिरद्भुत**' इति भगवद्वचनेन '**एष हि देव**' इत्यादिषु श्रुतस्य [७]'**सदसस्पतिमद्भुतम्**' इत्यस्य भगवत्परतयोपबृंहणात् '**पुरुषस्य विद्म**' इत्ययमपि मन्त्रो भास्करेणेत्थं व्याख्यातः। पुरुषं विश्वस्य पूरयितारं परं वस्तु विद्म विजानीम लभेमहि वा विन्दतेर्विकरणव्यत्ययः। तदर्थं '**महादेवस्य**' '**महादेवं धीमहि**' इति। एवञ्च [८]'**विद्युतः पुरुषात्**' इति प्रस्तुते 'पुरुषस्य हरेर्ज्ञानाय लाभाय वा महादेवं धीमहि' इति मन्त्रार्थः। '**ईश्वरात् ज्ञानमन्विच्छेत् उपायोऽस्मि हरेस्मृतौ**' इत्याद्युपबृंहणानुसाराच्च तद्युक्तम्। अत्र च [९]'**प्रजापतिश्चरति गर्भेऽन्त**' इति प्रजापति-शब्दो नारायणपरः।

[१०]'**राजाधिराजस्सर्वेषां विष्णुर्ब्रह्ममयो महान्।**

---

[१] म.ना.उ.१.१.

[२] **तत्पुरुषस्य विद्महे सहास्राक्षस्य महादेवस्य** धीमहि। तन्नो रुद्रः प्रचोदयात्। (म.ना.उ.३.१)

[३] क - तत्परः; घ - स्फुटः

[४] **एष हि देवः** प्र दिशोनु सर्वाः पूर्वो हि जातः स उ गर्भे अन्तः।
स विजायमानः स जनिष्यमाणः प्रत्यङ्मुखास्तिष्ठति सर्वतोमुखः।। (म.ना.उ.२.१)

[५] अहं सहस्रशीर्षाद्यैर्यः पदैरभिसंवृतः। आदित्यो यज्ञपुरुषो देवा यज्ञमयो मखः।
**अहमग्निर्हव्यवाहो यादसां पतिरव्ययः**।। (ह.वं.३.१०.५२)

[६] आदित्यवर्णः पुरुषो मखे ब्रह्ममयो मखः।
**अहमग्निर्हव्यवाहो यादसां पतिरव्ययः**।। (मत्स्य.पु.१६६.५१)

[७] **सदसस्पतिमद्भुतं** प्रियमिन्द्रस्य काम्यम् सनिं मेधामयासिषम्। (म.ना.उ.२.८)

[८] सर्वे निमेषा जज्ञिरे **विद्युतः पुरुषादधि।**
कला मुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वशः।। (म.ना.उ.१.८)

[९] अम्भस्य पारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान्।
शुक्रेण ज्योतींषि समनुप्रविष्टः **प्रजापतिश्चरति गर्भेऽन्त**रिति। (म.ना.उ.१.१)

[१०] राजाधिराजः सर्वेषां विष्णुर्ब्रह्ममयो महान्।
ईश्वरत्वं विजानीध्वं कर्तारमकृतं हरिम्।। (महा.आश्व.४३.१३)

**ईश्वरं तं विजानीमः स पिता स प्रजापतिः'**

इत्याश्वमेधिकवचनात्। वाराहे विंशाध्याये -

[1]'**पुत्रौ प्रजापतिं देवं भक्त्याराधयतं परम्।**
**नारायणं स वो दाता वृत्तेर्नूनं भविष्यति'**

इत्यश्विनौ प्रति मार्ताण्डवचनप्रयोगात्। [2]'**एवं स्तुतस्तदा ताभ्यामश्विभ्यां स प्रजापतिः'** इति प्रयोगात् 'आश्रावय' इत्यादि सप्तदशाक्षरसमूहप्रतिपाद्यस्य '**एष वै सप्तदशाः प्रजापति**' इत्युक्तस्य प्रजापतेः [3]'**चतुर्भिश्च चतुर्भिश्च**' इति राजधर्मवचने [4]'**स मे विष्णुः प्रसीदतु**' इति विष्णुशब्देनाभिधानात्। '**कस्मात् सत्याद्या तया मान्यन्यानि हवींष्यया यातयाममाज्यमिति प्राजापत्यमिति ब्रह्म अयातयामहि देवानां प्रजापतिः'** इति। [5]'**आज्यस्य दैवतं विष्णुः'** इत्यादिषु नारदीयादिषु [1]'**घृतस्य परमात्मा च**

---

[1] पुत्रौ प्रजापतिं देवं भक्त्याराधयतां वरम्।
नारायणं स वो दाता वरं नूनं भविष्यति।। (वराह.पु.२०.२२)

[2] महातपा उवाच-
शृणु राजन्यथा स्तोत्रमश्विभ्यां ब्रह्मणः कृतम्। ईदृशञ्च फलं प्राप्तं तयोः स्तोत्रस्य चानघ।
नमस्ते निष्क्रिय निष्प्रपञ्च निराश्रय निरपेक्ष निरालम्ब। निर्गुण निरालोक निराधार निर्मम निरालम्भ। ब्रह्म महाब्रह्म ब्राह्मणप्रिय पुरुष महापुरुष पुरुषोत्तम। देव महादेव देवोत्तम स्थाणो स्थितिस्थापक। भूत महाभूत भूताधिपते यक्ष महायक्ष यक्षाधिपते। गुह्य महागुह्य गुह्याधिपते सौम्य महासौम्य सौम्याधिपते। पक्षि महापक्षिपते दैत्य महादैत्याधिपते। रुद्र महारुद्राधिपते विष्णो महाविष्णुपते। परमेश्वर नारायण प्रजापतये नमः।।
**एवं स्तुतस्तदा ताभ्यामश्विभ्यां स प्रजापतिः।**
तुतोष परमप्रीत्या वाक्यञ्चेदमुवाच ह।। (वराह.पु.२०.२६-३१)

[3] **चतुर्भिश्च चतुर्भिश्च** द्वाभ्यां पञ्चभिरेव च।
हूयते च पुनर्द्वाभ्यां **स मे विष्णुः प्रसीदतु**।।(नारद.पु.१९.३५)

[4] यो देवः सर्वभूतानामन्तरात्मा जगन्मयः। निर्गुणः परमात्मा च **स मे विष्णुः प्रसीदतु**।।
हृदयस्थोपि दूरस्थो मायया मोहितात्मनाम्। ज्ञानिनां सर्वगो यस्तु **स मे विष्णुः प्रसीदतु**।।
चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च। हूयते च पुनर्द्वाभ्यां **स मे विष्णुः प्रसीदतु**।।
ज्ञानिनां कर्मिणां चैव तथा भक्तिमतां नृणाम्। गतिदाता विश्वमृग्यः **स मे विष्णुः प्रसीदतु**।।
जगद्धितार्थं ये देहा ध्रियन्ते लीलया हरेः। तानर्चयन्ति विबुधा **स मे विष्णुः प्रसीदतु**।।
यमामनन्ति वै सन्तः सच्चिदान्दविग्रहम्।
निर्गुणं च गुणाधारं **स मे विष्णुः प्रसीदतु**।। (नारद.पु.१९.३४-३८)

[5] **आज्यस्य दैवतं विष्णुः** उष्णोदस्य दिवाकरः।

## ८. देवतान्तरोपास्यत्वभङ्गः

**वासुदेवोऽधिदैवतम्**' इति पाद्मसंहितायां सहस्रकलशस्नपनाध्याये वचनाच्चाज्यदैवतत्वेन स्मृतिप्रसिद्धे विष्णौ प्रजापतिशब्दप्रयोगात्। '**यः पूर्व्याय वेधसे नवीयस**' इति नित्ययुवत्वात्मकतया यातयामत्वस्य विष्णावेव प्रसिद्धत्वात्। वाजपेये प्राजापत्यपशुषु गुणविधौ '**श्यामा एकरूपा भवन्ति**' इति। अस्यार्थवादे एवमिव हि 'प्रजापतिः समृद्ध्या' इति प्रजापतेः श्यामत्वाभिधानात् '**पूर्वे प्रजानिसर्गे त्वामाहुरेकं प्रजापतिः**' इत्यारण्यपर्ववचनात् '**देवः कृष्णः प्रजापतिः**' इति भारते रामायणे च प्रयोगात्। तस्मिन् [२]'**प्रजापतिर्वायुर्भूत्वाचरत्। स इमामपश्यत्। तां वराहो भूत्वाऽऽहरत्**' इति वाराहरूपं प्राप्स्यति प्रजापतिशब्दप्रयोगात्। तस्य च रूपस्य [३]'**उद्धृतासि वराहेण कृष्णेन शतबाहुना**' इति श्रुतौ स्मृतीतिहासादिषु च वैष्णवत्वेन प्रसिद्धत्वात्। नारसिंहे [४]'**परं पराणामपि कारणं हरिं महीधरं लोकगुरुं प्रजापतिम्**' इति प्रयोगः। मात्स्ये पौष्करप्रादुर्भावे - [५]'**यत्तत्सत्यं च परममहमेकः प्रजापतिः**' [६]'**अहं सांख्यमहं योगमहं तत्परमं पदम्**' इति प्रयोगश्च द्रष्टव्यः। वस्तुतस्तु नारायणसमाख्याबलात् कृत्स्नोऽपि प्रश्नो भगवत्परः। अत एव [७]'**सद्यो जातम्**' इत्यादि पञ्चब्रह्माख्यानुवाका अपि भगवत्परत्वेन स्कान्दे [८]निर्वाणखण्डे रामगीतायामुपबृंहिताः -

'**प्रवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथोत्तमा।**

---

ब्रह्मा रत्नाम्भसो देवः कुबेरस्तु फलाम्भसः।। (नारदीय.सं.२०.१०६)

[१] **घृतस्य परमात्मा च वासुदेवोऽधिदैवतम्।**
उष्णोदकुम्भे पुरुषस्सत्यस्स्यात्तु फलोदके।। (पाद्म.सं.चर्या.८.१७४)

[२] तै.ब्रा.१.१.३.६.

[३] **उद्धृतासि वराहेण कृष्णेन शतबाहुना।** भूमिर्धेनुर्धरित्री च धरणी लोकधारिणी।
तेन या ब्रह्मदत्तासि काश्यपेनाभिमन्त्रिता। (म.ना.उ.४.५)

[४] **परं पराणामपि कारणं हरिं क्षितीश्वरं लोकपतिं प्रजापतिम्।**
परं पराणामपि कारणं हरिं नमामि लोकत्रयकर्मसाक्षिणम्।। (नृ.पु.१०.११)

[५] अहं चैव सरिद्दिव्या क्षीरोदश्च महार्णवः।
**यत्तत्सत्यं च परममहमेकः प्रजापतिः**।। (मत्स्य.पु.१६६.५५)

[६] **अहं सांख्यमहं योगोऽप्यहं तत्परमं पदम्।**
अहमिज्या क्रिया चाहमहं विद्याधिपः स्मृतः।। (मत्स्य.पु.१६६.५६)

[७] **सद्यो जातं** प्रपद्यामि सद्योजाताय वै नमः।
भवे भवे नातिभवे भजस्व मां भवोद्भवाय नमः।। (म.ना.उ.१७.१)

[८] ग - इतः परं कोशे अस्ति

**शान्त्यतीता परा सूक्ष्मा समरा चोन्मना तथा।**
**सीताविलसितं सर्वं नानाकारेण दृश्यते।**
**तथानुग्रहशक्त्यैव त्वदैक्यमपि लभ्यते।**
**सद्यो जातः प्रवृत्तेस्त्वमीशिषे क्षेत्ररक्षकः।**
**वामदेवः [1]प्रतिष्ठाया वासनां तनुमाश्रितः।**
**विद्यानामप्यघोरस्त्वं तेजसां निधिरक्षयः।**
**प्राणस्तत्पुरुषश्शान्ते तन्त्राणां यत्र वाहकः।**
**ईशानः [2]शान्त्यतीताया व्यापको व्योमविग्रहः।**
**विष्णुश्च [3]समानायामुन्मानायाम् निरञ्जन'**

इत्यादिना [4]'**हिरण्यगर्भ इत्याद्यष्टर्चम्**' च भगवदाराधने विष्णुस्मृतौ [5]'**हिरण्यगर्भः समवर्तताग्र**' इत्यष्टभिर्हविर्निवेदयेदिति विनियुक्तम्।

ननु वायव्यपशावैन्द्रे द्वितीयाघारे [6]'**हिरण्यगर्भस्समवर्तताग्र इत्याघारमाघारयति**' इति विनियोगवन्नारायणसमाराधने विनियोगस्तत्परत्वाभावेऽपि युज्यते। अतो

[7]'**हिरण्यमस्य गर्भोऽभूद्धिरण्यस्यापि [8]गर्भजम्।**
**तस्माद्धिरण्यगर्भोऽसौ पुराणेऽस्मिन्निरुच्यत**'

इति लैङ्गे निर्वचनात्। बोधायनसूत्रे शिवशङ्करादिद्वादशनाममध्ये परिगणनात्। [9]'**य ईशे अस्य द्विपदश्चतुष्पद**' इत्युपन्यस्तात् '**येषामीशे पशुपतिः पशूनां चतुष्पदामुत च द्विपदाम्। एतावन्तो वै पशवो द्विपादश्चतुष्पादश्च**' इति श्रुत्यन्तरप्रतिपन्नात्

---

[1] ग - प्रतिष्ठाय वामनाम्; घ - प्रतिष्ठायाः वासनानाम्
[2] ग - शान्त्यतीताय; घ - शान्त्यतीतायाः
[3] ग - समानाया उन्मनाया; घ - समानायाम् उन्मानायाम्
[4] म.ना.उ.१.१२
[5] हिरण्यगर्भ इत्यष्टाभिर्नैवेद्यम् (विष्णु.स्मृ.६५.१३)
[6] **हिरण्यगर्भस्समवर्तताग्र इति स्रुच्यमाघारयति**। (आप.श्रौ.सू.६.७.८)
[7] लिङ्ग.पु.७०.१०६.
[8] क - ग - गर्भजः; घ - गर्भजम्
[9] यो देवानामधिपो यस्मिन् लोका अधिश्रिताः।
**य ईशे अस्य द्विपदश्चतुष्पदः** कस्मै देवाय हविषा विधेम।। (श्वे.उ.४.१३)

## ८. देवतान्तरोपास्यत्वभङ्गः

द्विपाच्चतुष्पाद्रूपपशुपतित्वलिङ्गाच्च रुद्रपरत्वमिति चेन्न। राजधर्मे [१]‘**हिरण्यगर्भं त्वामाहुः**’ इति। मोक्षधर्मे च -

[२]‘**हिरण्यगर्भो द्युतिमान् य एषश्छन्दसि स्तुतः।**
**योगैस्संपूज्यते नित्यं स एवाहं भुवि स्मृत**’

इति श्रुतिस्मृत्यादिषु हिरण्यगर्भशब्दार्थो विष्णुरिति वचनात्। हरिवंशे उपनिषत्सु पठितैर्नामभिः [३]‘**तुष्टाव**’ इत्युपक्रम्य [४]‘**हिरण्यगर्भहिरण्यनाभ नारायणादित्यवर्ण**’ इत्यादिभिः महापुरुषस्तवे काश्यपस्तुतिदर्शनात्। वाराहे गौरमुखकृतदशावतारस्तुतौ [५]‘**स जामदग्न्यो भुवनस्य गोप्ता हिरण्यगर्भोऽसुरहा प्रपातु**’ इति प्रयोगात्। [६]‘**चतुष्प्रकारं स्वशरीरमाद्यं हैरण्यगर्भं प्रतिपालयित्वा। रामादिरूपैर्बहुरूपभेदं चकार**’ इति वाराह एव [७]ज्येष्ठाद्द्वादशीव्रताध्याये [८]‘**तस्य पुत्रस्स्वयं जज्ञे रामनाम्ना सुतो बली**’ [९]‘**चतुर्धा**

---

[१] अम्भोनिधिस्त्वं ब्रह्मा त्वं पवित्रं धाम धामवित्।
**हिरण्यगर्भं त्वामाहुः** स्वधा स्वाहा च केशव।। (महा.शान्ति.४३.१५)

[२] महा.शान्ति.३४२.९६.

[३] **तुष्टाव** च तमीशानं मारीचः कश्यपस्तदा।
वेदोक्तैः स्वकृतैश्चैव स्तवैः स्तुत्यं जगद्गुरुम्।। (ह.वं.२.७२.२८)

[४] त्वं गण इष्टोऽसि इज्योऽसि ईड्योऽसि त्वष्टा त्वमसि समिद्धस्त्वमेव गतिर्गतिमतामसि मोक्षोऽसि योगोऽसि गुह्योऽसि सिद्धोऽसि धन्योऽसि धातासि परमोऽसि यज्ञोऽसि सोमोऽसि यूपोऽसि दक्षिणासि दीक्षासि विश्वमसि स्थविष्ट स्थविर विश्व तुराषाट् **हिरण्यगर्भ हिरण्यनाभ** हिरण्य**नारायण** नारायणान्तर नृणामयन **आदित्यवर्ण** आदित्यतेजः महापुरुष सुरोत्तम आदिदेव पद्मनाभ पद्मेश पद्माक्ष पद्मगर्भ हिरण्याग्रकेश शुक्लविश्वदेव विश्वतोमुख विश्वाक्ष विश्वसंभव विश्वभुक्त्वमेव भूरिविक्रम चक्रक्रम त्रिभुवन सुविक्रम स्वविक्रम बभ्रु सुविभुः प्रभाकर शम्भुः स्वयंभूश्च भूतादिः भूतात्मन् महाभूत विश्वभुक्त्वमेव विश्वगोप्तासि विश्वंभर पवित्रमसि हविर्विशारद हविकर्मा अमृतेन्धन सुरासुरगुरो महादेव नृदेव ऊर्ध्वकर्मन् पूतात्मन् अमृतेश दिवस्पृक् विश्वस्य पते घृताच्यासि अनन्तकर्मन् द्रुहिणवंश स्ववंश विश्वपास्त्वं त्वमेव विश्वं बिभर्ति वरार्थिनो नः त्रायस्वेति।। (ह.वं.३.६८.१३४-२०२ नामानि)

[५] त्रिः सप्तकृत्वो जगतीं जिगाय कृत्वा ददौ कश्यपाय प्रचण्डः।
**स जामदग्न्योऽभिजनस्य गोप्ता हिरण्यगर्भोऽसुरहा प्रपातु**।। (वराह.पु.१५.१५)

[६] **चतुः प्रकारञ्च वपुर्य आद्यं हैरण्यगर्भं प्रतिमानलक्ष्यम्।**
**रामादिरूपैर्बहुरूपभेदं चकार** सोऽस्मान्न सुरान्तकोऽव्ययात्।। (वराह.पु.१५.१६)

[७] क - घ - ज्येष्ठा; ग - ज्येष्ठ

[८] प्राग्रहस्यं विदित्वा तु स राजा कृतवानिदम्।

**योऽव्ययो विष्णुः परितोषान्महामुन**' इति विष्णोश्चातुर्विध्यवदिहापि वैष्णवरूपं चतुष्प्रकारं कल्पयित्वेति वक्तव्ये [२]तत्स्थाने '**हैरण्यगर्भं स्वशरीरमाद्यम्**' इत्यभिधानात्। ज्योतिश्शास्त्रे सूर्यसिद्धान्ते [३]'**वासुदेवः परं ब्रह्म**' इत्यारभ्य [४]'**तत्रानिरुद्धः प्रथमं व्यक्तीभूतस्सनातनः**' [५]'**हिरण्यगर्भो भगवानेषश्छन्दसि पठ्यत**' इति वचनात्। [६]'**हिरण्यगर्भो भूगर्भ**' इति सहस्रनामसु पाठात्। तदनुसारिविनियोगेन भगवत्परत्वावसायात् '**विष्णुना विधृते भूमिः व्यस्कभाद्रोदसी विष्णुरेते दधार पृथिवीमभितो मयूखैः**' इत्याद्युक्तस्य द्यावापृथिवीधारकत्वस्य [७]'**योऽस्कभायात्**' इति श्रुतद्युस्तंभकत्वस्य च '**यः पार्थिवानि विममे रजाँसि**' इति श्रुतरजोविमानस्य च '**स दाधार पृथिवीं द्यामुतो माम्**' इति सूक्तोपक्रमे [८]उत्तरत्रितये [९]'**येन द्यौरुग्रा पृथिवी च दृढे येन सुवस्तभितं येन नाकः। योऽन्तरिक्षे रजसो विमान**' इति प्रत्यभिज्ञानात् तन्मध्यवर्तिद्विपाच्चतुष्पादीशत्वं सर्वेश्वरे विष्णावेव संगच्छते। '**यस्येमाः प्रदिशो यस्य**

---

**तस्य पुत्रस्स्वयं जज्ञे राम नाम्ना सुतो बली**।। (वराह.पु.४५.७)

[१] **चतुर्धा सोऽव्ययो विष्णुः परितुष्टो महामुने**।
एतदैहिकमाख्यानं पारत्रिकमथो शृणु।। (वराह.पु.४५.८)

[२] क - तत्स्थाने; घ - अप्येतत्स्थाने

[३] **वासुदेवः परं ब्रह्म** तन्मूर्तिः पुरुषः परः।
अव्यक्तो निर्गुणः शान्तः पञ्चविंशात् परोऽव्ययः।।
प्रकृत्यन्तर्गतो देवो बहिरन्तश्च सर्वगः।
सङ्कर्षणोऽयं सृष्ट्वादौ तासु वीर्यमवासृजत्।। (सू.सि.भू.१२-१३)

[४] तदण्डमभवद्धैमं सर्वत्र तमसावृतम्।
**तत्रानिरुद्धः प्रथमं व्यक्तीभूतः सनातनः**।। (सू.सि.भू.१४)

[५] **हिरण्यगर्भो भगवानेष छन्दसि पठ्यते**।
आदित्यो ह्यादिभूतत्वात् प्रसूत्या सूर्य्य उच्यते।। (सू.सि.भू.१५)

[६] ईशानः प्राणदः प्राणो ज्येष्ठः श्रेष्ठः प्रजापतिः।
**हिरण्यगर्भो भूगर्भो** माधवो मधुसूदनः।। (महा.आनु.१४९.२१)

[७] विष्णोर्नुकं वीर्याणि प्रवोचं **यः पार्थिवानि विममे रजाँसि योऽस्कभायादुत्तरँ** सधस्थं विचक्रमाणस्त्रेधोरुगायो विष्णोरराटमसि विष्णोः पृष्ठमसि विष्णोः श्नप्त्रेस्थो विष्णोस्यूरसि विष्णोर्ध्रुवमसि वैष्णवमसि विष्णवे त्वा।। (विष्णु.सू.१)

[८] क - ग - उत्तरत्र च; घ - उत्तरत्रितये

[९] **येन द्यौरुग्रा पृथिवी च दृढा येन स्वः स्तभितं येन नाकः।**
**योऽन्तरिक्षे रजसो विमानः** कस्मै देवाय हविषा विधेम।। (यजुर्वेद.३२.६)

## ८. देवतान्तरोपास्यत्वभङ्गः

**बाहू**' इति वाक्यस्य चारण्यपर्वण्युदङ्कस्तोत्रे [१]"**बाहवस्ते दिशस्सर्वा**' इति, भीष्मपर्वणि [२]"**दिक् बाहुस्त्रिदिवं शिर**' इति च भगवत्परतयोपबृंहणात्। किञ्च -

[३]"**मा नो हिंसीज्जनिता यः पृथिव्या यो वा दिवं सत्यधर्मा जजान।**
**यश्चापश्चन्द्रा बृहतीर्जजान कस्मै देवाय हविषा विधेम**'

इति मन्त्रो जगत्कर्तृविषयो नारायणपरः। मैत्रायणीयश्रुतौ [४]"**विष्णुसंज्ञम्**' इति प्रकृते [५]"**एतत्सत्यधर्म**' इति सत्यधर्माभिधानदर्शनात्। योगयागवल्क्ये '**ईश्वरं पुरुषाख्यं तु सत्यधर्माणमच्युतम्**' इति दर्शनात्। राजधर्मे च -

[६]"**यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च।**
**गृणन्ति सत्यधर्माणं सत्यं सत्येषु सामसु**'

---

[१] निःश्वासः पवनश्चापि तेजोऽग्निश्च तवाच्युत।
**बाहवस्ते दिशः सर्वाः** कुक्षिश्चापि महार्णवः।। (महा.वन.२०१.१६)

[२] पादौ तव धरा देवी **दिशो बाहू दिवं शिरः**।
मूर्तिस्तेहं सुराः कायश्चन्द्रादित्यौ च चक्षुषी।। (महा.भीष्म.६५.५९)

[३] मा मा हिंसीज्जनिता यः पृथिव्या यो वा दिवं सत्यधर्मा व्यानट्।
यश्चापश्चन्द्राः प्रथमो जजान कस्मै देवाय हविषा विधेम।। (यजुर्वेद.१२.१०२)

[४] यः शब्दस्तदोमित्येतदक्षरम् यदस्याग्रं तच्छान्तमशब्दमभयमशोकमानन्दं तृप्तं स्थिरममृतमच्युतं ध्रुवं **विष्णुसंज्ञितं** सर्वापरत्वाय तदेता उपासीतेति। (मै.उ.६.२३)
ततः शुद्धः सत्वान्तरस्थमचलममृतमच्युतं ध्रुवं **विष्णुसंज्ञितं** सर्वापरं धाम सत्यकामसर्वज्ञत्व संयुक्तं स्वतन्त्रं चैतन्यं स्वे महिम्नि तिष्ठमानं पश्यत्रोदाहरन्ति। (मै.उ.६.३८)
मरुतो जगतो सप्तदशो वैरूपं वर्षा अपानः शुक्र आदित्याः पश्चादुद्यन्ति तपन्ति वर्षन्ति स्तुवन्ति पुनर्विशन्त्यन्तर्विवरेणेक्षन्ति तच्छान्तमशब्दमभयमशोकमानन्दं तृप्तं स्थिरमचलमच्युतं ध्रुवं **विष्णुसंज्ञितं** सर्वापरं धामेति। (मै.उ.७.३)

[५] हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्। तत्त्वं पूषन्नपावृणु सत्यधर्माय विष्णवे। योऽसावादित्ये पुरुषः सोऽसाहमिति। एष ह वै सत्यधर्मो यदादित्यत्यस्य आदित्यत्वं तच्छुक्लं पुरुषमलिङ्गं नभसोऽन्तर्गतस्य तेजसोंऽशमात्रमेतद्यदादित्यस्य मध्य इवेत्यक्षिण्यग्नौ चैतद्ब्रह्मैतदमृतद्भर्गः। **एतत्सत्यधर्मो** नभसोऽन्तर्गस्य तेजसोंऽशमात्रमेतत्।। (मै.उ.६.३५)

[६] महा.शान्ति.४७.१६

इति दर्शनाच्च। [१]‘**पुरुषो ह वै नारायणोऽकामयत। प्रजास्सृजेयेति। अथापः ससर्ज**’ इति श्रुताया अबुपलक्षितसकलतत्वसृष्टेः [२]‘**आपो नारा इति प्रोक्ता**’ इति मानवादि-स्मृतिभिः ‘**नाराज्जातानि तत्वानि नाराणीति ततो विदुः**’ इत्यानुशासनिकादिवचनैः चोपबृंहिता ‘**यश्चापश्चन्द्रा बृहतीर्जजान**’ इति श्रवणाच्च। तत्र च श्रुतस्य [३]‘**कस्मै देवाय हविषा विधेम**’ इत्यस्य [४]‘**हिरण्यगर्भ**’ इत्याद्यष्टर्चे श्रवणात् तदैकार्थ्यात् ‘कस्मै’ इत्यस्य ‘**सर्वप्रधानायाविज्ञातपारमार्थ्याय**’ इति भास्करादिभिर्व्याख्यातस्य ‘**नारायणस्य चाङ्गानि सर्वे देवास्तथाभवन्**’ [५]‘**तस्य लोकप्रधानस्य जगन्नाथस्य भूपते**’ [६]‘**त्वं हि लोकातिर्ब्रह्मन् न त्वां केचन जानते**’ ‘**श्रूयतां परमं दैवं दुर्विज्ञेयं मयापि च**’ इत्यादि भारतरामायणादिवचनावगमितसर्वदेवताप्राधान्यदुर्विज्ञेयभावे वैष्णव्ये गोणगारिर्देवता-प्रधानत्वादिति। सोमातिरेकप्रायश्चित्तविधायकाश्वलायनवचनसिद्धप्राधान्ये तत एव चाव्यक्तनामकत्वेन प्रसिद्धे ‘**कः पुरुषः**’ ‘**स्वयंभूर्विष्णुः**’ इति गायत्रीहृदयसिद्ध ‘क’ शब्दवाच्यभावे नारायण एव संभवदर्थत्वात्[७]। तापनीये अष्टर्चान्तर्गतस्य [८]‘**य आत्मदा**’

---

[१] **पुरुषो ह वै नारायणोऽकामयत। प्रजास्सृजेयेति**। नारायणात् प्राणो जायते मनः सेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी। नारायणात् ब्रह्मा जायते। नारायणाद्रुद्रो जायते। नारायणात् प्रजापतिः प्रजायते। नारायणाद्द्वादशादित्या रुद्रा वसवः सर्वाणि छन्दांसि। नारायणादेव समुद्पद्यन्ते। नारायणात् प्रवर्तन्ते। नारायणे प्रलीयन्ते। एतदृग्वेदशिरोऽधीते। (ना.अथर्व.उ.१)

[२] **आपो नारा इति प्रोक्ता** आपो वै नरसूनवः।
ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः।। (मनु.स्मृ.१.१०)

[३] यो देवानामधिपो यस्मिंल्लोका अधिश्रिताः।
य ईशे अस्य द्विपदश्चतुष्पदः **कस्मै देवाय हविषा विधेम**।। (श्वे.उ.४.१३)

[४] अद्भ्यः सम्भूतो **हिरण्यगर्भ इत्यष्टौ**। (म.ना.उ.१.१२)

[५] **तस्य लोकप्रधानस्य जगन्नाथस्य भूपते**।
विष्णोर्नाम सहस्रं मे शृणु पापभयापहम्।। (महा.आनु.१४९.१२)

[६] वैष्णवीं तां महातेजो यद्वाऽऽकाशं सनातनम्।
त्वं हि लोकातिर्ब्रह्मन् न त्वां केचित् प्रजानते।। (रामायणे.उत्तरे.११०.१०)

[७] क - ग - संभवदर्थकत्वात्; घ - संभवदर्थत्वात्

[८] **य आत्मदा** बलदा यस्य विश्वं उपासते प्रशिषं यस्य देवाः। यस्य छायामृतं यो मृत्युमृत्युः कस्मै देवाय हविषा विधेम। तस्मादुच्यते मृत्युमृत्युमिति। अथ कस्मादुच्यते नमामीति। यस्माद्यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्च। प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थम्। यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरे। तस्मादुच्यते नमामीति। अथ कस्मादुच्यते अहमिति। अहमस्मि प्रथमजा

## ८. देवतान्तरोपास्यत्वभङ्गः

इति मन्त्रस्य नृसिंहविषयतयोदाहरणात्सिद्धं तस्य नारायणपरत्वम्। अत एव [१]'**अद्भ्यस्संभूतो हिरण्यगर्भ इत्यष्टौ**' इति वाक्यव्याख्यानावसरे यजुर्भाष्यकृता '**एषां मन्त्राणामात्मतत्वप्रतिपादनपराणामन्यत्राधीतानामपीहातिदेशबलात् कल्पसूत्रकार-विनियोगमन्तरेण लिङ्गादिना महापुरुषार्चनादौ विनियोग**' इत्युक्तम्। स्मृतिविनियोगो लिङ्गमूल इत्याशयः। किञ्च पाद्मे गिरियज्ञानन्तरमिन्द्रस्तवे भगवत्परतयेयं श्रुतिरुपबृंहिता। यथा -

[२]'**अग्रे हिरण्यगर्भस्त्वं भूतस्य समवर्तत।**
**त्वमेवैकः पतिरसि पुरुषस्त्वं हिरण्मयः।।**'
[३]'**पृथिवीं द्यामिमां देव त्वमेव धृतवान् प्रभो।**
**आत्मदः बलदो यस्य विश्वस्य जगदीश्वरः।।**'
[४]'**उपास्यसे त्वं त्रिदशैः प्रशिषं जगतां पते।**
**अमृतं चैव मृत्युश्च तवच्छाये[५] सनातने।।**'
[६]'**तस्मै देवाय भवते विधेम हविषा वयम्**' इति।

तस्मादस्याष्टर्चस्य नारायणपरत्वं सिद्धम्। अतो [७]'**अम्भस्य पार**' [८]'**अद्भ्यस्संभूतो**' '**हिरण्यगर्भ**' इति त्रयाणां नारायणपरत्वे सिद्धे [९]'**वेदाहमेतम्**' इत्युत्तरनारायणगतमन्त्रस्य पुरुषसूक्ते श्रवणात् तदैकार्थ्यात् पुरुषसूक्तस्य नारायणपरत्वं सिद्धम्।

---

ऋत्ना३स्य। पूर्वं देवेभ्यो अमृतस्य ना३भायि। यो मा ददाति स इदेव मा३वाः। अहमन्नमन्नमदन्तमा३द्मि। अहं विश्वं भुवनमभ्यभवा३म्। सुवर्णज्योतिः। य एवं वेदेत्युपनिषत्।। (नृ.पू.ता.उ.२.४)

[१] म.ना.उ.१.१२; तै.आ.६.३;

[२] पाद्म.पु.६.२७२.१९१.

[३] पृथिवीं द्यामिमां देव त्वमेव धृतवानसि।
आत्मदः बलदो यश्च स्यादेवं जगदीश्वरः।। (पाद्म.पु.६.२७२.१९२)

[४] अवाप्तं तत्र त्रिदशैः प्रकाशं जगतां पते।
अमृतं चैव मृत्युश्च छाया तव जगत्पते।। (पाद्म.पु.६.२७२.१९३)

[५] क - तवच्छाये; ग - तव जाये

[६] **तस्मै देवाय भवते विधेम हविषा वयम्**।
हेमवन्त इमे यस्य समुद्भूता हिरण्मयाः।। (पाद्म.पु.६.२७२.१९४)

[७] म.ना.उ.१.१.

[८] म.ना.उ.१.१२.

ननु [2]'**सर्वो वै रुद्र**' इत्युक्त्यनन्तरं [3]'**पुरुष एवेदं सर्वम्**' इति मन्त्रविरोधशङ्कानिराकरणाय [4]'**पुरुषो वै रुद्र**' इति श्रुत्या स रुद्रपरत्वेन [5]व्याख्यात इत्यौचित्यादवगम्यते। तथा च तन्मन्त्रयुक्तसूक्तस्य श्रुत्यैव [6]आत्मपरत्वेन व्याख्यानात् कथं नारायणपरत्वमिति चेन्न।

अत्रत्यरुद्रशब्दस्य पुरुषपर्यन्तत्वेन व्याख्यानादपि विरोधशङ्कानिरासात् गुहस्वामिदेवस्वामिभ्यामिदं वाक्यमित्थं व्याख्यातम्। [7]'**पुरुषो नारायणः परमात्मा**' [8]'**आत्मा हि पुरुषव्याघ्र ज्ञेयो विष्णुरिति श्रुतिः**' इति भगवान् व्यासः स एव रुद्रः ततस्सर्वस्योत्पत्तेस्तत्पर्यायो वेति। अत्र 'तत' इति प्रकृतपुरुषः परामृश्यते। 'तत्पर्याय' इति रुद्रपर्यायस्तद्वाच्य इति यावत्। अपि च [9]'**सहस्रशीर्षं देवम्**' इत्यस्य भगवत्परत्वात् तत्र प्रतिपन्नसहस्रशीर्षत्वप्रत्यभिज्ञानात् तदैकार्थ्याच्चास्य पुरुषसूक्तस्य भगवत्परत्वमवर्जनीयम्। स्मृतिश्च ऋग्विधाने '**पुरुषस्य हरेः सूक्तं स्वर्ग्यं धन्यं यशस्कर**म्' इति। मोक्षधर्मे नारायणीये पुरुषसूक्तार्थो वेदसिद्धन्ततत्वाशयेन[10] [11]'**इदं पुरुषसूक्तं हि सर्ववेदेषु पठ्यत**' इति प्रस्तुत्य तत्प्रतिपाद्यपुरुषनिर्णयार्थं प्रवर्तते। ब्रह्मरुद्रसंवादे -

---

[1] **वेदाहमेतं** पुरुषं महान्तम्। आदित्यवर्णं तमसः परस्तात्।
तमेवं विद्वानमृत इह भवति। नान्यः पन्था विद्यतेऽयनाय।। (पु.सू.२.२)

[2] **सर्वो वै रुद्रः** तस्मै रुद्राय नमो अस्तु। पुरुषो वै रुद्रस्तन्महो नमो नमः। विश्वं भूतं भव्यं भुवनं चित्रं बहुधा जातं जायमानं च यत्। सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु। (म.ना.उ.१२.२)

[3] **पुरुष एवेदं सर्वम्**। यद्भूतं यच्च भव्यम्।
उतामृतत्वस्येशानः। यदन्नेनातिरोहति। (पु.सू.१.२)

[4] म.ना.उ.१२.२.

[5] क - ग - घ - व्याख्यायते

[6] क - ग - अन्यपरत्वेन; घ - आत्मपरत्वेन

[7] तत्र यः **परमात्मा** हि स नित्यं निर्गुणः स्मृतः।
स हि **नारायणो** ज्ञेयः सर्वात्मा **पुरुषो** हि सः।। (महा.शान्ति.३५१.१४)

[8] **आत्मा हि पुरुषव्याघ्र ज्ञेयो विष्णुरिति स्थितिः**।
य एष गुरुरस्माकमृषिर्गन्धवतीसुतः।। (महा.शान्ति.३४६.८)

[9] **सहस्रशीर्षं देवं** विश्वाख्यं विश्वशम्भुवम्।
विश्वं नारायणं देवमक्षरं परमं प्रभुम्।। (म.ना.उ.११.१)

[10] क - इत्याशयेन; घ - तत्वाशयेन

[11] **इदं पुरुषसूक्तं हि सर्ववेदेषु पार्थिव**।

## ८. देवतान्तरोपास्यत्वभङ्गः

[१]‘**तत्र यः परमात्मा तु स नित्यो निर्गुणः स्मृतः।**
**स हि नारायणो ज्ञेयस्सर्वात्मा पुरुषो हि स**’

इति पुरुषस्य नारायणत्वावबोधनात् पुरुषसूक्तस्य नारायणपरत्वं प्रतीयते। उत्तरगार्ग्ये -

[२]‘**सर्वं जगन्मम भवेदिति सञ्चिन्तयन्मुनिः।**
**ध्यायेत् पुरुषसूक्तेन प्रतिपाद्यं जनार्दनम्**’ इति स्मर्यते।

तथा भागवते दशमस्कन्धे प्रथमेऽध्याये -

[३]‘**तत्र गत्वा जगन्नाथं वासुदेवं वृषाकपिम्।**
**पुरुषं पुरुषसूक्तेन उपतस्थे समाहित**’ इति।

अत्र हि ‘**आग्नेय्याग्नीध्रमुपतिष्ठत**’ इतिवदुपतिष्ठतिरभिधानार्थः। ‘वासुदेवम्’ इति [४]विशेष्यलाभेऽपि पुरुषत्वात् पुरुषसूक्तेनोपस्थानं युक्तमित्यभिप्रायं ‘पुरुषम्’ इति पदम्। बोधायनसूत्रे विष्ण्वर्चने [५]‘**अथैनमृग्यजुस्सामभिः स्तुवन्ति**’ [६]‘**ध्रुवसूक्तं जपित्वा**’ [७]‘**पुरुषसूक्तं चाथान्यांश्च वैष्णवान् मन्त्रान् इत्येके**’ इति पुरुषसूक्तस्य वैष्णवत्वसिद्धवत्कारेण ‘अन्यान्’ इति विशेषयति। एवञ्च रुद्रार्च्चनमुक्त्वा [८]‘**अथैनमृग्यजुस्सामभिः स्तुवन्ति**’ [१]‘**सहस्राणि सहस्रश**’ इत्यनुवाकं जपित्वा

---

ऋतं सत्यञ्च विख्यातमृषिसिंहेन चिन्तितम्।। (महा.शान्ति.३५०.५)

[१] महा.शान्ति.३५१.१४.

[२] योगवासिष्ठम्

[३] भा.पु.१०.१.२०.

[४] क - विशेष; घ - विशेष्य

[५] **अथैनं वैष्णवीभि ऋग्यजुस्सामाथर्वाभिः** स्तुतिभिः स्तुवन्ति। (बो.गृ.सू.२.१४.१०)

[६] आभिर्विश्वा अभियुजः इति जानुं निपात्य चतुःप्रदक्षिणं परिक्रमेत् विश्वभुजे नमः। सर्वभुजे नमः। आत्मने नमः। परमात्मने नमः। **ध्रुवसूक्तं जपित्वा** पुरुषमुद्वासयेत् ओं भूः पुरुषमुद्वासयाम्यों भुवः पुरुषमुद्वासयाम्यों सुवः पुरुषमुद्वासयाम्यों भूर्भुवस्सुवः पुरुषमुद्वासयामि इत्युद्वास्य यत्रापस्तत् गत्वोत्सृजेदवभृथम्। (बो.गृ.सू.३.७.४)

[७] प्रच्छाद्य तु तृणैश्शुद्धैर्दूर्वाभिश्च विशेषतः।
विष्णोर्नामसहस्रं वा शैवं वापि तथा जपेत्।।
गायत्रीमथ वा शैवं वैष्णवं मा जपेद्गुरुः।
जपेयुः परितो विप्रास्तथा **मन्त्रांश्च वैष्णवान्**।। (बो.गृ.सू.१.२२.८-९)

[८] रौद्रीभिः **ऋग्यजुस्सामाथर्वाभिस्तुतुभिस्स्तुवन्ति** आर्षैस्स्तोत्रैश्च नमस्कृत्य प्रयातु भगवान् महादेवः इति विसर्जयति। (बो.गृ.सू.२.१७.१४)

'**अन्यांश्च रौद्रान् मन्त्रान्**' इत्यत्रान्यविशेषणव्यवच्छेद्यस्य '**सहस्राणि सहस्रशो रुद्रा**' इत्यस्य रौद्रत्वमिव वैष्णवत्वं सिद्धम्। समाख्या च नारायणाभ्यां [२]'**ब्राह्मण एकहोता**' इति चोपस्थानमिति बोधायनसूत्रे, [३]'**सहस्रशीर्षा पुरुष इत्युपहितां पुरुषेण नारायणेन यजमान उपतिष्ठते।**' नारायणाभ्यामुपस्थानं [४]'**उत्तरनारायणेनादित्यमुपतिष्ठेत**' इत्यापस्तम्बसूत्रे च नारायणसमाख्यादर्शनात्। अत्रोत्तरनारायणोऽद्भ्यस्संभूतानुवाकः। उत्तरपदेन[५] च पुरुषसूक्तं व्यावर्तयत्तस्यापि नारायणसमाख्यां व्यनक्ति। अन्यत्र कल्पसूत्रे पुरुषनारायणेन परा चानुशंसतीति[६]। नन्वत्र नारायणदृष्टत्वं समाख्यार्थः।

'**अस्य पुरुषसूक्तस्य ऋषिर्नारायणः स्मृतः।**
**छन्दस्त्वानुष्टुभं सूक्तं तिस्रोऽन्त्यास्त्रिष्टुभो मताः।**
**परमव्योमवासी च पुरुषो देवता भवेत्**'

इति शौनकेन नारायणार्षत्वाभिधानादिति चेन्न। ऋषिसंबन्धपरत्वे लक्षणापत्तेः। नारायणस्य इतीदमिति विवक्षायां [७]'**तस्येदम्**' इति प्राप्तस्याणो [८]'**वृद्धाच्छ**' इति 'छ' प्रत्ययेन बाधात्। नारायणेन दृष्टमिति विवक्षायां साम्नोऽन्यत्र तद्धितविधानात् 'दृष्टं साम' इति यत्तददृष्टं साम चेत्तद्भवतीति [९]प्रकृत्यर्थोपाधेः साम्नि हि तद्धितो विधीयते। नारायणो देवता अस्येत्यर्थविवक्षायां तु [१०]'**साऽस्य देवता**' इति सूक्तहविषोः [१]प्राग्दीव्यतीयस्याणो विधानात् नारायण इति रूपं सिद्ध्यति।

---

[१] अथ त्रयम्बकं यजामहे मा नो महान्तं मा नस्तोके आर्द्रया रुद्रः हेती रुद्रस्य आरात्ते अग्निः विकिरिद विलोहित **सहस्राणि सहस्रधा** सहस्राणि सहस्रशः इति। द्वादशनामभिः शिवाय शङ्कराय महमानाय शितिकण्ठाय कपर्दिने ताम्रायारुणायापगुरमाणाय हिरण्यबाहवे सस्थिञ्जराय बभ्लुशाय हिरण्याय स्वाहा इति। (बो.गृ.सू.२.१६.३७)

[२] अथ वै भवति **ब्राह्मण एकहोता**। (बो.गृ.सू.२.३.१)

[३] आप.श्रौ.सू.६.२८.३.

[४] त्रैधातवीययोदवसाय पृथगरणीष्वग्नीन् समारोप्य **उत्तरनारायणेनादित्यमुपस्थायारण्यमवतिष्ठेत**। (आप.श्रौ.सू.२०.२४.१६)

[५] क - ग - उत्तरपदञ्च; घ - उत्तरपदेन

[६] ग - चानुशंसिनीति; घ - चानुशासतीति

[७] पाणिनि.सू.४.३.१२०

[८] पाणिनि.सू.४.२.११४.

[९] क - प्रकृत्यर्थोपाधौ; घ - प्रकृत्यर्थोपाधेः

[१०] पाणिनि.सू.४.२.२४.

## ८. देवतान्तरोपास्यत्वभङ्गः

अत एव तस्येदमित्यर्थे [1]'[2]'**नारायणीयमाख्यानम्**' इति मोक्षधर्मे दृश्यते। [3]'**त्रिः पठेदघमर्षणम्**' इत्यत्र त्वनन्यगत्या लक्षणाश्रीयते। अत एव वाधूलसूत्रे ऋषिविवक्षायां '**नारायणदृष्टेन पुरुषसूक्तेन उपहितां चितिमुपतिष्ठमान इह जन्मनि पुरुषो भवेत्**' इति [4]दृष्टपदप्रयुक्तञ्च शंक्यते। अस्य सूक्तस्य नारायणार्षत्वसिद्धेः '**वेदाहम्**' इत्यत्राहंशब्दस्य तत्परतया [5]'**कर्मकर्तृव्यपदेशाच्च**' इति सूत्रोक्तन्यायेन सूक्तप्रतिपाद्यात् व्यतिरेको नारायणस्य [6]सिध्यति, तत्र श्रीसूक्तस्य श्रीदृष्टतया तत्रत्यास्मच्छब्दोत्तमपुरुषादेः श्रीपरत्वप्रसङ्गेन [7]'**त्वामिहोपह्वये श्रियम्**' इत्यादिना तत्सूक्तप्रतिपाद्यस्यापि श्रीव्यतिरेकप्रसङ्गात्। तस्मात्तदार्षत्वस्य तद्दृष्टतारूपतया तद्वचनत्वासिद्धेः अहंनिर्देशो नर्षिगोचरः। अतो '**वेदाहम्**' इति ब्रह्मविदभिलापः ऋष्यभिलापत्वेऽपि न हानिः। दुर्विज्ञेयताख्यापनार्थम्[8] 'अहं वेद' इति निर्देशात् [9]स्वरूपज्ञाने च को नाम कर्मकर्तृविरोधः। '**त्वमेव त्वां वेत्थ योऽसि सोऽसि**' इत्यपि हि दृश्यते।

गीतायां च [10]'**स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम**' इति स्वोपासनोक्तौ हि स विरोधो भवेत्। '**एतम्**' इति निर्देशश्च प्रकृताकारपरामर्शार्थं ज्ञातव्यगौरवख्यापनार्थञ्च[11] समञ्जसमिव[1] विनियोगश्च। यथाथर्वणे[2] वैष्णव्यां पुरुषसूक्तम् इति विष्णुदैवत्यमहाशान्तौ विनियोगः। आह भगवान् शौनकः -

---

[1] प्राग्दीव्यतोऽण् (पाणिनि.सू.४.१.८३)

[2] **नारायणीयमाख्यान**मेतत्ते कथितं मया।
पृष्ठेन शौनकाद्येह नैमिषारण्यवासिषु।। (महा.शान्ति.३४६.१६)

[3] अपि चाप्सु निमज्जेत **जपंस्त्रिरघमर्षणम्**।
यथाश्वमेधावभृथस्तथा तन्मनुरब्रवीत्।। (महा.शान्ति.१५२.३०)

[4] क - दृष्ट; ग - पुरुष

[5] ब्र.सू.१.२.४.

[6] क - ग - सिध्यतीति तत्र; घ - सिध्यति। तत्र

[7] कां सोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम्।
पद्मे स्थितां पद्मवर्णां **त्वामिहोपह्वये श्रियम्**।। (श्री.सू.४)

[8] क - ज्ञापनार्थम्; ग - घ - ख्यापनार्थम्

[9] क - ग - स्वस्वरूपज्ञाने; घ - स्वरूपज्ञाने

[10] **स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम**।
भूतभावन भूतेश देवदेव जगत्पते।। (महा.भीष्म.३४.१५, भ.गी.१०.१५)

[11] क - घ - ख्यापनार्थञ्च; घ - ज्ञापनार्थञ्च

**‘प्रायश्चित्ते जपे चैव विष्णोराराधने तथा।**
**मोक्षे वश्येऽग्न्युपस्थाने सुपुत्रप्रापणेऽपि च।**
**सर्वकामफलावाप्तावारोग्ये मृत्युनाशने।**
**एतेष्वर्थेष्विदं सूक्तं मुनयो विनियुञ्जत’**

इति प्रायश्चित्ते। यमस्मृतौ रहस्यप्रायश्चित्ताधिकारे -

**‘योऽनूचानं द्विजं मर्त्यो हतवानर्थलोभतः।**
**स जपेत् [३]पूरुषं सूक्तं जलस्थश्चिन्तयन् हरिम्’**

इति। अत्र जलस्थश्चिन्तयन् हरिसूक्तं जपेदिति विशिष्टसिद्धिः[४]। तत्र च चिन्तायाः [५]अग्नित्वे मन्त्रस्य दृष्टार्थत्वसंभवात् मन्त्रवित् मन्त्रविशिष्टध्यानसिद्धे विधिः। यद्वा ‘**तस्य वाचकः प्रणवस्तज्जपस्तदर्थभावनम्**’ इति [६]योगशास्त्रोक्तन्यायेन जपशब्दस्यैव

---

[१] क - ग - समञ्जसमेव; घ - समञ्जसमिव

[२] सहस्रबाहुः पुरुषः सहस्राक्षस्सहस्रपात्। स भूमिं विश्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम्।।
त्रिभिः पद्भिर्द्यामरोहत् पादस्येहाभवत् पुनः। तथा व्यक्रामद् विश्वङ्शनानशनेऽनु।।
तावन्तोऽस्य महिमानस्ततो ज्यायांश्च पूरुषः। पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि।।
पुरुष एवेदँ सर्वं यद्भूतं यच्च भाव्यम्। उतामृतत्वस्येश्वरो यदन्येनाभवत् सह।।
यत् पुरुषं व्यदधुः कतिधा व्यकल्पयन्। मुखं किमस्य किं बाहू किमूरू पादा उच्येते।।
ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्योऽभवत्। मध्यं तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत।।
चन्द्रमा मनसो जातश्चक्षोः सूर्योऽजायत। मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत।।
नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत। पद्भ्यां भूमिर्दिशः श्रोत्रात् तथा लोकानकल्पयन्।।
विराडग्रे समभवद्विराजोऽधिपूरुषः। स जातोऽत्यरिच्यत पश्चाद्भूमिमथो पुरः।।
यत् पुरुषेण हविषा देवा यज्ञमतन्वत। वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः।।
तं यज्ञं प्रावृषा प्रौक्षन् पुरुषं जातमग्रशः। तेन देवा अयजन्त साध्या वसवश्च ये।।
तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे। छन्दोह जज्ञिरे तस्माद्यजुस्तस्मादजायत।।
तस्माद्यज्ञात् सर्वहुतः संभृतं पृषदाज्यम्। पशूँस्ताश्चक्रे वायव्यानारण्या ग्राम्याश्च ये।।
सप्तास्यासन् परिधयस्त्रिः सप्त समिधः कृताः। देवा यद्यज्ञं तन्वाना अबध्नन् पुरुषं पशुम्।।
मूर्ध्नो देवस्य बृहतो अंशवः सप्तसप्ततीः। राज्ञः सोमस्याजायन्त जातस्य पुरुषादधि।।
(अथर्व.२.१९.६.१-१६)

[३] क - ग - पौरुषम्

[४] क - ग - विधिः; घ - सिद्धिः

[५] क - घ - अग्नित्वे; ग - अङ्गित्वे

[६] क - ग - योगशास्त्रसूत्रोक्तन्यायेन; घ - योगशास्त्रोक्तन्यायेन

## ८. देवतान्तरोपास्यत्वभङ्गः

तदर्थभावनापर्यन्तत्वात् भावनियमार्थविशेषः क इत्यपेक्षायां हरिमिति तद्विशेषः [१]ससर्पत इति विनियोगात् तत्परत्वसिद्धिः। एवं पाद्मे च - [२]“**ब्रह्महत्यादिपापानां सर्वेषामपनुत्तये**’ ‘**पठेत्तु पौरुषं सूक्तमेकान्ते संस्मरन् हरिम्**’ इति। जपे वृद्धमनुः -

[३]‘**ब्रह्मयज्ञे जपेत्सूक्तं पौरुषं चिन्तयन् हरिम्।**
**स सर्वान् जपते वेदान् साङ्गोपाङ्गान् द्विजोत्तमा**’इति।

आराधने शौनकः - [४]‘‘**आद्ययावाहयेद्देवमृचा तु पुरुषोत्तमम्**’ इत्यारभ्य[५] ‘**षोडश्योद्वासनं कुर्यादेवमाराधयेद्धरिम्**’ इत्यन्तेन ऋग्वेदपाठानुसारेण षोडशानामृचां विनियोगमुक्त्वा, [६]‘‘**दद्यात्पुरुषसूक्तेन यः पुष्पाण्यप एव वा**’ [७]‘‘**अर्चितं स्याज्जगदिदं तेन सर्वं चराचरम्**’ इति। आह व्यासस्मृतौ -

[८]‘‘**न विष्ण्वाराधनात् पुण्यं विद्यते कर्म वैदिकम्।**’
[९]‘‘**तस्मादनादिमध्यान्तं नित्यमाराधयेद्धरिम्।**
**तद्विष्णोरिति मन्त्रेण सूक्तेन पुरुषेण तु।।**’

---

[१] क - समर्पत; घ - ससर्पत
[२] योग्याप्रकारं तं देव ब्रूहि मह्यं यथाक्थम्।
**ब्रह्महत्यादिपापानां अपनोदनमुत्तमम्**।। (पाद्म.सं.चर्या.२०.५)
[३] ब्रह्मयज्ञे जपेत्सूक्तं पौरुषं चिन्तयन् हरिम्।
स सर्वान् जपते वेदान् साङ्गोपाङ्गविधानतः।। (वाधू.स्मृ.१५६)
[४] अर्चितं स्याज्जगत्सर्वं तेन वै स चराचरम्।**आद्ययावाहयेद्देवमृचा तु पुरुषोत्तमम्**।। (नृ.पु.६२.९)
[५] द्वितीययाऽऽसनं दद्यात् पाद्यं दद्यात्तृतीयया। चतुर्थ्यार्घ्यः प्रदातव्यः पञ्चम्याचमनीयकम्।।
षष्ठ्या स्नानं प्रकुर्वीत सप्तम्या वस्त्रमेव च। यज्ञोपवीतमष्टम्या नवम्या गन्धमेव च।।
दशम्या पुष्पदानं स्यादेकदश्या च धूपकम्। द्वादश्या दीपदानं स्यात् त्रयोदस्या हविस्तथा।।
चतुर्दश्या स्तुतिं कृत्वा पञ्चदश्या प्रदक्षिणम्।
**षोडश्योद्वासनं कुर्यादेवमाराधयेद्धरिम्**।।(पाद्म.पु., नृ.पु.६२.९-१३)
[६] पुरुषो यो जगद्बीजं ऋषिर्नारायणः स्मृतः।
**दद्यात्पुरुषसूक्तेन यः पुष्पाण्यप एव वा**।। (पाद्म.पु, नृ.पु.६२.८)
[७] **अर्चितं स्याज्जगदिदं तेन सर्वं चराचरम्**।
आद्ययावाहयेद्देवमृचा तु पुरुषोत्तमम्।। (पाद्म.पु, नृ.पु.६२.९)
[८] प्रदद्याद्वाथ पुष्पाणि विन्यसेच्च पृथक् पृथक्।
न विष्ण्वाराधनात् पुण्यं विद्यते कर्म वैदिकम्।। (व्यास.स्मृ.२.४१)
[९] व्यास.स्मृ.२.४२.

[१]'**नैताभ्यां सदृशो मन्त्रो वेदेषूक्तश्चतुर्ष्वपि।**
**तदात्मा तन्मनाश्शान्तस्तद्विष्णोरिति मन्त्रत**' इति।

वैष्णवस्मृतौ - '**सुप्रक्षालितपाणिपादस्स्वाचान्तो देवतार्चायां स्थण्डिले वा भगवन्तं वासुदेवमर्चयेत्**'[२] इत्यारभ्य षोडशोपचाराननुक्रम्याह -

[३]'**एवमभ्यर्च्य तु जपेत्सूक्तं वै पौरुषं ततः।**
**तेनेव चाज्यं जुहुयाद्य इच्छेच्छाश्वतं पदम्**' इति।

वाराहे - [४]'**पौरुषं सूक्तमास्थाय ये यजन्ति द्विजोत्तमाः।**
**संहिता जपमास्थाय ते मां प्राप्स्यन्ति ब्राह्मणा**' इति।

मोक्षे तु विनियोगो योगरत्ने दर्शितः - '**संसारान् मोक्षमन्विच्छन् स सन्यस्येषणा त्रयम्**' इत्यादिना सन्यासमभिधाय,

[५]'**एकाकी यतचित्तात्मा त्यक्तसर्वपरिग्रहः**।'
'**ध्यायेन्नारायणं देवं हृदयांभोजमध्यगम्।**
**दिग्देशकालावस्थाद्यैरनवच्छेद्य वैभवम्।**
**सर्वदा पौरुषं सूक्तं मनसैव जपेच्छुचिः**' इति।

वश्ये तु विनियोगः उत्तरगार्ग्ये वश्याध्याये दर्शितः।

'**सर्वं जगन्मम भवेदिति संचिन्तयन्मुनिः।**

---

[१] व्यास.स्मृ.२.४३.

[२] अथातः सुस्नातः **सुप्रक्षालितपाणिपादस्स्वाचान्तो देवतार्चायां स्थले वा भगवन्तमनादिनिधनं वासुदेवमभ्यर्चयेत्**। अश्विनोः प्रणस्तौत इति जीवादानं दत्वा युञ्जते मन इत्यनुवाकेनावाहनं कृत्वा जानुभ्यां पाणिभ्यां शिरसा च नमस्कारं कुर्यात्। आपो हिष्ठेति तिसृभिरर्घ्यं निवेदयेत्। हिरण्यवर्णा इति चतसृभिः पाद्यम्। शंन आपो धन्वन्या इत्याचमनीयम्। इदमापः प्रवहतेति स्नानीयम्। रथेष्वक्षेषु वृषभराजा इत्यनुलेपनालङ्कारौ। युवा सुवासा इतिवासः। पुष्पावतीरिति पुष्पम्। धूरसि धूर्वेति धूपम्। तेजोऽसि शुक्रमिति दीपम्। दधिक्राव्ण इति मधुपर्कम्। हिरण्यगर्भ इत्यष्टाभिर्नैवेद्यम्। चामरं व्यजनं मात्रां छत्रं यानासने तथा। सावित्रेणैव तत्सर्वं देवाय विनिवेदयेत्।। (विष्णु.स्मृ.६५.१-१४)

[३] एवमभ्यर्च्य तु जपेत्सूक्तं वै पौरुषं ततः।
तेनेव जुहुयादाज्यं य इच्छेच्छाश्वतं पदम्।। (विष्णु.स्मृ.६५.१५)

[४] पौरुषं सूक्तमास्थाय ये यजन्ति द्विजासु माम्।
ते मां प्राप्स्यन्ति सततं संहिताध्ययनेन च।। (वराह.पु.६६.१०)

[५] योगी युञ्जीत सततमात्मानं रहसि स्थितः।
**एकाकी यतचित्तात्मा त्यक्तसर्वपरिग्रहः**।।(महा.भीष्म.३०.१०, भ.गी.६.१०)

## ८. देवतान्तरोपास्यत्वभङ्गः

**ध्यायेत्पुरुषसूक्तेन प्रतिपाद्यं जनार्दनम्।**
**यद्वशे वर्तते सर्वं चराचरमिदं जगत्।**
**वशे भवति तस्यापि जगत्सर्वं मुनेरपि'**

इत्यग्न्युपस्थाने त्वापस्तम्बविनियोगः प्रागेवोक्तः। सुपुत्रप्राप्तौ ऋग्विधाने विनियुक्तम्

'**शुक्लपक्षे शुभे वारे पुंनक्षत्रे सुगोचरे।**
**द्वादश्यां पुत्रकामाय चरुं कुर्वीत वैष्णवम्।**
**दंपत्योरुपवासः स्यादेकादश्यां सुरालये।**
**ऋग्भिष्षोडशभिस्सम्यगर्चयित्वा जनार्दनम्।**
**चरुं पुरुषसूक्तेन प्राशयेत् पुत्रकाम्यया।**
**प्राप्नुयाद्वैष्णवं पुत्रमचिरात् सन्ततिक्षमम्**' इति।

लक्ष्मीतन्त्रे षड्त्रिंशेऽध्याये श्रीरुवाच -

[१]'**एको नारायणो देवः श्रीमान् कमललोचनः।**
**एकाहं परमाशक्तिस्सर्वकार्यकरी हरेः।।**
**तावावां परमे व्योम्नि क्षेमाय सकलात्मनाम्।**
**आसीनौ सकलेशानौ सूरिभिस्सेवितौ सदा।।**
**तयोर्नौ हृदि संकल्पः कश्चिदाविर्बभूव ह।**
**उत्तारणाय जीवानामुपायोऽन्विष्यतामिति।।**
**आवाभ्यामथितं तेजश्शब्दब्रह्ममहोदधिः।**
**मथ्यमानात्ततस्तस्मादभूत् सूक्तद्वयामृतम्।।**
**पुरुषस्य हरेस्सूक्तं मम सूक्तं तथैव च।**
**अन्योऽन्यशक्तिसंरुद्धम् अन्योऽन्यार्णपरिष्कृतम्।।**'

[२]'**नारायणार्षम् आद्यन्तु पौरुषं सूक्तमुच्यते।**
**अन्यन्मदार्षं सूक्तं तु श्रीसूक्तं यत्प्रचक्षते।।**'

[३]'**अष्टादश ऋचः प्रोक्ताः पौरुषे सूक्तसत्तमे।**
**ताभिस्सप्रणवाद्याभिर्भोगानष्टादशोत्तमान्।।**

---

[१] लक्ष्मीतन्त्र.३६.६९-७३.

[२] **नारायणार्षमव्यक्तं** पौरुषं सूक्तमिष्यते।
अन्यन्मदार्षकं सूक्तं श्रीसूक्तं यत्प्रचक्षते।। (लक्ष्मीतन्त्र.३६.७४)

[३] लक्ष्मीतन्त्र.३६.७६-७८.

**कुर्यादावाहनाद्यांश्च त एतेऽष्टादश स्मृताः।**
**आवाहनासने सार्घ्यं पाद्यमाचमनं तथा।।**
**स्नानञ्च परिधानञ्च सोत्तरीयोपवीतकम्।**
**गन्धास्सुमनसो दीपो धूपश्च मधुपर्ककः।।**
**प्रापणं सेन्दुताम्बूलं पादयोः कुसुमाञ्जलिः।**
**आत्माराधनदानञ्च [1]यथेच्छास्थानचिन्तनम्।।**'

तत्रैव शौनककल्पानुसारेण विनियोगः।

[2]'**आद्ययावाहनं कुर्यादासनञ्च द्वितीयया।**
**अर्घ्यं तृतीयया देयं मूर्ध्न्यापः कुसुमास्स्मृताः।।**
**पाद्यो देयश्चतुर्थ्या तु पञ्चम्याचमनीयकम्।**
**षष्ठ्या स्नानविधिः कार्यः सप्तम्या परिधानकम्।।**
**अष्टम्योत्तरवासश्च नवम्या गन्धलेपनम्।**
**दशम्या स्रगलङ्कारं एकादश्या तु दीपकम्।।**
**द्वादश्या सुरभिर्धूमः परया मधुपर्ककः।**
**प्रापणं तु चतुर्दश्या पञ्चदश्यानुवासनम्।।**
**षोडश्या तु नमस्कारः परया कुसुमाञ्जलिः।**
**अष्टादश्या प्रदानञ्च समाराधनकर्मण**' इति।

यद्यपि '**यजेत पुरुषसूक्तेन धनदम् विश्वरूपिणम्। वरुणं विश्वरूपिणम्**' इत्यादिना धनदपूजादिष्वपि विनियोगोऽस्ति। बोधायनसूत्रे शिवसंकल्पादिभिस्सह श्रीरुद्राङ्गमन्त्रेषूपदेशात्, छन्दोगानां वाजसनेयिनाञ्च महारुद्रजपमध्ये विनिवेशात्,

'**नमकं चमकञ्चैव पुरुषसूक्तञ्च नित्यशः।**
**जपन्नेति महादेवं गृहं गृहपतिर्यथा**'

इति पुराणेषु फलश्रवणात्, '**आवाह्य कुम्भे देवेशं रुद्रं भुवननायकम्**' इत्युपक्रम्य '**नमकं चमकञ्चैव पौरुषं सूक्तमेव च**' इत्यादिना वास्तुशान्तौ जपे विनियोगात्। लैङ्गादित्यपुराणादिषु -

[1]'**सकूर्चेन सपुष्पेण स्नापयेन्मन्त्रपूर्वकम्।**

---

[1] क - ग - यथेष्टस्थान

[2] लक्ष्मीतन्त्र.३६.१००-१०४.

## ८. देवतान्तरोपास्यत्वभङ्गः

**मन्त्रांश्च ते प्रवक्ष्यामि शृणु सर्वार्थसिद्धये।।**' इत्युपक्रम्य[२]
'**ज्येष्ठसाम्ना त्रयेणैव तथा देवव्रतेन च।**
**रथन्तरेण पुण्येन सूक्तेन पुरुषेण च**'

इति शिवाभिषेकमन्त्रेषु परिगणनाच्च शिवाराधनेऽप्यस्ति विनियोगः। तथापि न तावता तत्परत्वसिद्धिः। उक्तश्रुतिस्मृति [३]तद्धृदयविनियोगसमाख्यातदनुसार्युपबृंहणाञ्जस्याय[४] अन्येषां विनियोगानां कथञ्चिन्नेयत्वात्।

किञ्च [५]'**धनदा विश्वरूपी सा वरुणं विश्वरूपिणम्**' इति विश्वरूपि-पदेनान्तर्यामिपरत्वमवगम्यते। तत्र धनदाद्यन्तर्यामिनो महापुरुषस्य पुरुषसूक्तेनाभिधानम् [६]अञ्जसैवोपपद्यते। बोधायनसूत्रे श्रीरुद्राङ्गतया विनियोगोऽपि पुरुषसूक्तस्य रुद्रपरत्वाभावेऽपि तापनीये नारसिंहानुष्टुभाङ्गतया [७]'**घृणिस्सूर्य आदित्य**' इति सौरस्याष्टाक्षरस्यैवोपपद्यते। न ह्यर्थमुखे निरीक्षणनिरपेक्षे[८] केवलादृष्टार्थोऽङ्गन्यास-विनियोग आरादुपकारताङ्गतया विनियोगो वार्थविशेषतात्पर्यनिर्धारकः। महारुद्रमध्ये वास्तुशान्तौ चावाहनाद्यविनियुक्तस्य रौद्रस्य वैष्णवस्य च मन्त्रस्य जपो

---

[१] सकूर्चेन सपुष्पेण स्नापयेन्मन्त्रपूर्वकम्।
**मन्त्राणि** ते प्रवक्ष्यामि शृणु सर्वार्थसिद्धये।। (लिङ्ग.पु.१.२७.३९)

[२] यैः लिङ्गं सकृदप्येवं स्नाप्य मुच्यते मानवः। पवमानेन मन्त्रज्ञाः तथा वामीयकेन च।।
रुद्रेण नीलरुद्रेण श्रीसूक्तेन शुभेन च। रजनीसूक्तकेनैव चमकेन शुभेन च।।
होतारेणाथ शिरसा अथर्वेण शुभेन च। शान्त्या चाथ पुनः शान्त्या भारुण्डेनारुणेन च।।
**वारुणेन च ज्येष्ठेन तथा वेदव्रतेन** च।
रथन्तरेण पुण्येन सूक्तेन पुरुषेण च।। (लिङ्ग.पु.१.२७.४३)

[३] क - ग - तदुभय; घ - तद्धृदय

[४] क - ग - तदुपबृंहणाञ्जस्याय

[५] क - ग - धनदं विश्वरूपिणम्

[६] क - अञ्जसैवोपपद्यते; ग - आञ्जस्येनोपपद्यते

[७] अथ सावित्री गायत्री या यजुषा प्रोक्तः तया सर्वमिदं व्याप्तं **घृणिरिति** द्वे अक्षरे सूर्य इति त्रीण्यादित्य इति त्रीण्येतद्वै सावित्रस्याष्टाक्षरं पदं श्रियाभिषिक्त य एवं वेद श्रिया हैवाभिषिच्यते।। (नृ.पू.ता.उ.४.२)
**घृणिस्सूर्य आदित्य** ओम्। अर्चयन्ति तपः सत्यं मधुक्षरन्ति तद्ब्रह्म तदाप आपो ज्योतीरसोमृतं ब्रह्म भूर्भुवःस्वरोम्। (म.ना.उ.१५.२,३७.१)

[८] क - ग - निरपेक्ष

राक्षोघ्नतयोपपद्यते। यथा पितृविष्णुदेवताके श्राद्धे राक्षोघ्नानां सूक्तानां महादेवप्राप्तिफल-श्रवणमपि विष्णुपूजनस्य विष्णुकीर्तनादेश्च निरतिशयरुद्रप्रीतिहेतुत्वाद्युक्तम्। स्नपनविनियोगस्य पावमानीनामब्लिङ्गानामिव च पावित्र्यादेवोपपत्तेः।

ननु [१]उभयथा विनियोगेऽपि श्रुत्यनुगुणविनियोगायातार्थो ग्राहः। अस्ति ह्यत्र [२]'**उतामृतत्वस्येशान**' इति श्रुतिः। तस्य रुद्रे रूढत्वादिति चेन्न, '**वैष्णव्यां पुरुषसूक्तम्**' इत्यादिश्रौतविनियोगबलीयस्त्वेन तदनुसार्यर्थस्यैव ग्राह्यत्वे वचनात्त्वयथार्थमैन्द्रीयं स्यादिति न्यायेन ईशानशब्दरूढेरनादरणीयत्वात्।

किञ्च ईशानशब्दस्य[३] रुद्रपरत्वे लिङ्गम्। वैष्णवी नाम सहिता[४] इति वैष्णवत्वे श्रुतिः तया लिङ्गं [५]बाधते। किञ्च रुद्रवाचीशानशब्दः [६]'**ताच्छील्यवयोवचनशक्तिषु चानश्**' इति विहितचानशन्तो वाच्यः। शानजन्तत्वे '**स ईशानस्स भगवान्**' इत्यादौ वेदे '**ईशानस्सपरिवार**' इत्यादौ लोके च प्रथमासामानाधिकरण्यानुपपत्तेः। [७]'**लटश्शतृशानचौ अप्रथमासमानाधिकरण**' इत्यप्रथमासमानाधिकरण एव तद्विधानात्। यद्यपि [८]'**नन्वोर्विभाषा**' इत्यतो विभाषाग्रहणम्, [९]अनुवर्तव्यावस्थितविभाषां स्वीकृत्य व्यवस्थित-विभाषाश्रवणात्[१०] प्रथमासमानाधिकरणेऽपि क्वचिद्भवति [११]सन् ब्राह्मणः अस्ति ब्राह्मण इत्यादाविति वैयाकरणैरुच्यते। तथाप्यन्यथासिद्धप्रयोगदर्शनात् [१२]कल्पोऽव्यवस्थित-विभाषान्तर्भावो गतिकागतिर्न गत्यन्तरे [१३]शानशन्ततया लब्धे संभवति। अन्यथा

---

[१] क - उभयथा विनियोगेऽपि; ग -उभयविनियोगेऽपि
[२] पु.सू.१.२; श्वे.उ.३.१५.
[३] क - ग - शब्दवत्वं सूक्तस्य; घ - शब्दस्य
[४] क - ग - नामसहिता; घ -मम सहता
[५] क - ग -बाध्यते; घ - बाधते
[६] पाणिनि.सू.३.२.१२९.
[७] पाणिनि.सू.३.२.१२४.
[८] पाणिनि.सू.३.२.१२१.
[९] क - ग - अनुवर्त्य व्यवस्थित
[१०] क - ग - विभाषाश्रयणात्; घ - विभाषाश्रवणात्
[११] क - घ - सन्; ग - स न
[१२] क - ग - कल्प्योऽव्यवस्थित; घ - कल्पोऽव्यवस्थित
[१३] क - ग - चानशन्ततया

## ८. देवतान्तरोपास्यत्वभङ्गः

[१]'**व्यत्ययो बहुलम्**' [२]'**बहुलं छन्दसि**' [३]'**षष्ठीयुक्तश्छन्दसि वा**' इत्यादिलक्षणविषयतापि सत्यपि गत्यन्तरे कल्प्येत।

एवञ्च [४]'**द्वादशाहेऽहीनस्य**' इत्यत्र व्यत्ययो बाहुलकव्यवस्थितविभाषाविषयता-कल्पनात्। अव्ययपूर्वपदप्रकृतिस्वरबाधनेन उत्तरपदाद्युदात्तत्वसंभवात् 'हीनं न भवति इत्यहीनम्' इति व्युत्पत्या हीनशब्दस्य [५]प्रकृतिज्योतिष्टोम एव सर्वसोमयागप्रकृतौ समस्तौपदेशिकधर्मयोगिनिसंभवद्व्यक्तिकतया[६] अहीनशब्दानुपपत्या प्रकरणात् [७]उत्कर्षद्वादशाहादहः गणान्वयकल्पनया [८]सिद्धा, अतो न स्यात्।

उक्तञ्च शैवभाष्ये - निरुपाधिकपरमैश्वर्यविशिष्टत्वादीशानशब्दवाच्यं ब्रह्मेति निरुपाधिकधात्वर्थकर्तृता हि ताच्छील्यं वैयाकरणैर्निरुक्तम्। तट्टीकायां चैतत् सोपपत्तिकमुक्तम्। [९]'**स्थेशभासपिसकसो वरच्**' इति ताच्छील्यार्थविहितवरच्प्रत्ययान्त ईश्वरशब्दस्तत्पर्याय ईशानशब्देऽपि तत्समानार्थत्वात् [१०]'**ताच्छील्यवयोवचनशक्तिषु चानश्**' इति विहितचानशन्त इति। अमरकोशटीकासु तथा व्याख्यानात् चैतद्युक्तम्। अतश्चानशन्तो रुद्रनाम।

अत्र च '**अमृतत्वस्येशान**' इति लादेश शानजन्तः आद्युदात्तत्वात् तस्यानुदात्ते ङिदुपदेशात् तत्संबन्धानुदात्तमिति लादेशानुदात्तत्वेन धातुस्वरपरिशेषेण शानजन्तत्वे लादेशत्वाभावाच्च [११]'**त**' इत्यन्तोदात्तत्वापत्तेः।

---

[१] पाणिनि.सू.३.१.८४.
[२] पाणिनि.सू.३.२.८८.
[३] पाणिनि.सू.१.४.९.
[४] सत्रमहीनश्च द्वादशाहस्तस्योभयथा प्रवृत्तिरैक्कर्म्यात्। (मी.सू.८.२.२४, भा.दीपिका.पृ.११४)
[५] क - घ - प्रकृति; ग - प्रकृत
[६] क - ग - संभवद्वृत्तिकतया; घ - संभवद्व्यक्तिकतया
[७] क - ग - उत्कृष्टद्वादशाहाद्यहः; घ - उत्कर्षद्वादशाहादहः
[८] क - ग - सिद्धान्तो
[९] पाणिनि.सू.३.२.१७५.
[१०] पाणिनि.सू.३.२.१२९.
[११] ते तद्राजाः (पाणिनि.सू.४.१.१७४)

न चात्र शानजन्तत्वे प्रथमान्तत्वानुपपत्तिरप्रथमासमानाधिकरणे तद्विधेरिति वाच्यम्। [१]'**लक्षणहेत्वोः क्रियाया**' इति सूत्रेण शानचस्संभवात् अमृतत्वस्येशानस्सन्निदं सर्वं भवतीत्यन्वयात् भवतीत्याश्रयणेऽप्यस्तिर्भवति परः प्रथमपुरुषो प्रयुज्यमानोऽपीति भवतिशब्दस्य कल्पनात् सर्वशब्दश्च सर्वव्याप्तिपरः। [२]'**तेनेदं पूर्णं पुरुषेण सर्वम्**' [३]'**समाप्नोषि ततोऽसि सर्व**' इति श्रुतिस्मृत्यनुसारात्। तथा चामृतत्वस्याप्यर्थो [४]तत्राध्वलब्धशब्दजगतश्च नियन्ता सन्नस्य जगतो व्यापको भवतीत्यर्थः।

एवञ्च नियन्तृत्वेन व्याप्तिः, उपासकानुग्रहार्थं व्याप्तिश्चोक्ता भवति। अस्तु वा प्रथमायाः छान्दसत्वम्। न चैवं सति [५]ताच्छील्यिकचानशन्तस्याद्युदात्तत्वमेव छान्दसं कुतो न स्यादिति वाच्यम्। शानजन्तो वायं छान्दसप्रथमान्तः चानशन्तो वायं छान्दसाद्युदात्त इति संशयेऽपि नामत्वानिर्धारणात् श्रुतित्वानुपपत्तेः। वस्तुतः प्रथमश्रुतस्वरानुरोधेन चरमश्रुतप्रथमायाः छान्दसत्वकल्पनं ज्यायः। न पाश्चात्यप्रथमानुरोधेन प्रथमावगत-स्वरान्यथाकारः।

किञ्चामृतत्वस्येति प्रतिसंबन्ध्युपादाने योगोन्मेषेण रूढेर्निमग्नत्वान्नात्र रूढ्यादरः। न चौत्सर्गिकरूढ्यर्थोपस्थितिस्तदुपादानेऽपि दुर्वारेति वाच्यम्। शब्दस्यैकार्थप्रतिपादनेन चारितार्थ्यस्यार्थद्वयपरत्वासंभवात्। अन्यतरनियामकाभावात् क्वचिद्योगरूढ्यर्थद्वयपरत्वम्।

यद्वा - अर्थद्वयतात्पर्यग्राहकसद्भावे [६]उभयपरत्वनिर्धारकाभावे रूढितात्पर्यग्राहक-मात्रसंभवस्थल[७] इव रूढार्थपरत्वम्। तत्रैव [८]प्रतीत्याञ्जस्यात् योगतात्पर्यग्राहकमात्रसद्भावे तु तन्मात्रपरत्वमिति तावन्मात्रेण प्रयोगस्य चारितार्थ्यात् योगद्वयतात्पर्यग्राहक-सद्भावेऽप्युभयपरत्वम्। अत एव श्लेषोपपत्तिः

---

[१] पाणिनि.सू.३.२.१२६.

[२] यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्।
वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्**तेनेदं पूर्णं पुरुषेण सर्वम्**।। (म.ना.उ.१०.४, श्वे.उ.३.९)

[३] नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव सर्वः।
अनन्तवीर्यामितविक्रमस्त्वं सर्वं **समाप्नोषि ततोऽसि सर्वः**।।(महा.भीष्म.३५.४०, भ.गी.११.४०)

[४] ग - अत शब्दलब्ध

[५] क - ग - ताच्छीलिक; घ - ताच्छील्यक

[६] क - ग - उभयपरत्वम्; घ - उभयपरत्व

[७] क - ग - सद्भावस्थले; घ - संभवस्थले

[८] क - घ - प्रतीत्याञ्जस्यात्; ग - प्रतीत्यञ्जस्यात्

आर्षानेकनिरुक्त्युपपत्तिश्च। इह तु प्रतिसंबन्ध्युपादानं योगार्थग्रहणे नियामकमस्ति। [१]योगार्थस्य उन्मिषितत्वान्न रूढ्युन्मेषः। योगोन्मेषे रूढेर्निमग्नत्वादेव हि '**पद्मानि यस्याग्रसरोरुहाणि**' इत्यत्र पद्मपदप्रयोगः। यदुक्तं व्यङ्ग्यप्रधानत्वात् काव्यस्य गिरेरौन्नत्यव्यञ्जनाय योगे शब्दस्य [२]उपेक्षया न तत्र रूढिविवक्षा। इह व्यङ्ग्यार्थविवक्षाविरहान्न रूढिर्निमग्नेति तन्न। योगार्थप्रतीतिरेव हि व्यङ्ग्यप्रतीतिनिमित्तम्, न तु रूढ्यविवक्षापि योगार्थप्रतीतेः[३] शब्दस्वभावात् अवर्जनीयतयैवेति [४]रूढिस्तु अग्रपदेनैव योगोन्मेषहेतुना वारिता। तस्य च योगोन्मेष-हेतुत्वमधिकरणाकाङ्क्षेण सरसैवान्वयात्। रोहस्य [५]ह्यधिकरणाकाङ्क्षा सरसैव पूर्णा। वस्तुतस्तु [६]और्ध्वमुखमयूखप्रबोधनमौन्नत्याभिव्यञ्जकम्, न तु योगार्थः [७]तदभिव्यञ्जकः।

किञ्च पदार्थस्य पदार्थेनान्वय स्वरसः, न तु तद्विशेषणेन। तस्य विशेष्यान्वयेन निराकाङ्क्षत्वात्। तथा चान्तरङ्गत्वादीशानशब्दयोगार्थे [८]कथं रूढ्यर्थान्विते पदान्तरोपस्थाप्यस्य बहिरङ्गस्यामृतत्वस्य न निराकाङ्क्षेण विशेषणेन योगार्थेन [९]अन्वये परत्वस्य बद्धस्य राजपुरुष इतिवदयोग्यत्वाच्च न विशेष्येणत्यनन्वय एव स्यात्।

किञ्च [१०]'**उतामृतत्वस्येशान**' इत्यमृतत्वस्येशानत्वं किमीशानशब्दरूढ्यर्थे विधीयते किं वामृतत्वस्येशानत्वं [११]रूढत्वञ्च प्रकृते पुरुषे। नाद्यः, उद्देशकस्येशानशब्दस्य विधेयार्थकत्वायोगात्। न द्वितीयः, अत्रैव पुरुषस्य रुद्रत्वे सिद्धे त्वतिरिक्तरुद्रे [१२]'**सर्वो वै**

---

[१] क - ग - घ - अतो योगार्थस्य

[२] ग - उपेक्षायाम्

[३] क - घ - प्रतीतिः; ग - प्रतीतेः

[४] क - ग - बुद्धिस्तु; ग -रूढिस्तु

[५] घ - व्यधिकरणाकाङ्क्षा

[६] क - ग - घ -ऊर्ध्व

[७] क - तदर्थव्यञ्जकः; ग - घ -तदभिव्यञ्जकः

[८] क - ग - प्रथमम्; घ - कथम्

[९] क - अन्वय; घ - अन्वये

[१०] पु.सू.१.२.; श्वे.उ.३.१५.

[११] क -रुद्रत्वञ्च; घ - रूढत्वञ्च

[१२] **सर्वो वै रुद्र**स्तस्मै रुद्राय नमो अस्तु। पुरुषो वै रुद्रस्तन्महो नमो नमः। विश्वं भूतं भव्यं भुवनं चित्रं बहुधा जातं जायमानञ्च यत्। सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु।। (म.ना.उ.१३.२)

**रुद्र**' इत्युक्ते कथं '**सर्वो वै रुद्रः पुरुषः खलु**' [१]'**पुरुष एवेदं सर्वम्**' इत्यादिषु सर्वत्वेन प्रसिद्ध इति शङ्काया अनुत्थानेन तन्निराकरणार्थं [२]'**पुरुषो वै रुद्र**' इति रुद्रस्य पुरुषत्वमुच्यत इति व्याख्यानायोगात्।

किञ्च '**पुरुष एव**' इति प्रकृते पुरुषे '**उतामृतत्वस्येशान**' इति योगरूढ्यर्थद्वय-विधाने वाक्यभेदप्रसङ्गः विशिष्टविधौ गौरवम्। रूढ्यर्थोद्देशेन योगार्थविधौ अप्यर्थो तच्छब्दान्वयास्वारस्यम्। न हि पुरुषस्सर्वात्मकः रुद्रो 'अमृतत्वस्येशानोऽपि' इति वाक्यम् [३]एकविषयत्वे स्वरसम्। नारायणार्थस्तु योगरुढ्योर्विकल्प एव। अक्षादिशब्द इव रूढ्योः कुतः। एवञ्जातीयकानां शब्दानामवयवार्थसमुदायार्थयोः प्रयोगविकल्पदर्शनात्। उत्पलादिष्वपि हि पङ्कजादिशब्दानवयवार्थविषया[४] वाक्यवत् प्रयुञ्जते। अपङ्कप्रभवेषु जलजेषु च नारायणनाभिजाते च पङ्कजशब्दः प्रयुञ्जत इति। एवञ्चात्र प्रतिसंबन्ध्युपादानेनावयवार्थस्यावश्यविवक्षणीयत्वात् न रूढ्या रुद्रोपस्थितिः।

नन्वेवं सति [५]'**शब्दादेव प्रमित**' इत्यधिकरणे [६]'**अङ्गुष्ठमात्रः पुरुष**' इति मन्त्रप्रतिपाद्यस्य [७]'**ईशानो भूतभव्यस्य**' इति श्रुत्या परब्रह्मत्वनिर्णयो न स्यात्। प्रतिसंबन्ध्युपादानेन रूढ्युन्मेषात् भूतभव्यैश्वर्यस्य च ब्रह्मलिङ्गमात्रत्वादभिधानश्रुतिरूप-शब्दाभावेन '**शब्दादेव**' इत्यस्यासामञ्जस्यापत्तेरिति चेन्न। किमेतन्मन्त्रप्रतिपाद्यो 'जीव उत

---

[१] पु.सू.१.२.

[२] म.ना.उ.१३.२.

[३] क - एतद्विषयत्वे; घ - एकविषयत्वे

[४] क - विवज्ञया

[५] ब्र.सू.१.३.२३

[६] **अङ्गुष्ठमात्रः पुरुषो** मध्य आत्मनि तिष्ठति।
**ईशानो भूतभव्यस्य** न ततो विजुगुप्सते एतद्वै तत्।। (कठ.उ.२.१.१२, कठ.उ.३.४.१२)
**अङ्गुष्ठमात्रः पुरुषो** ज्योतिरिवाधूमकः।
**ईशानो भूतभव्यस्य** स एवाद्य स उ श्वः एतद्वै तत्।। (कठ.उ.२.१.१३, कठ.उ.२.४.१३)
**अङ्गुष्ठमात्रः पुरुषः** सदा जनानां हृदये सन्निविष्टः। (कठ.उ.३.६.१७)
**अङ्गुष्ठमात्रः पुरुषो**ऽङ्गुष्ठं च समाश्रितः।
ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक्।। (म.ना.उ.१६.३)

[७] कठ.उ.३.४.१२; २.४.१३.

सर्वेश्वर' इत्येव विचारप्रवृत्तेः सर्वेश्वरत्वस्य च 'भूतभव्यस्येशान' इति शब्देनैवाभिधीयमानत्वाच्छब्दादेवेत्युपपत्तेः।

किञ्च पुरुषशब्दस्य नारायणाभिधानत्वव्यवस्थापनात्तस्य चात्रोपक्रमे आवृत्तस्य श्रवणाच्चरमश्रुतेशानशब्दरूढिस्त्याज्या। न च 'बर्हिराज्यनयात्' सामान्यशक्त्यैव विशेषे [१]योगोपपत्तेः। पुरुषशब्दस्य न विशिष्यापि शक्तिरिति वाच्यम्। ईशानशब्दादेरपि [२]'प्रोक्षणीन्यायेन' विशेषे शक्त्यसंभवात् पुरुषशब्दस्य विशेषशक्तौ श्रुतिस्मृत्यादिकमुक्तम्। तस्याश्चोक्तविधया [३]प्रयोगलभ्यत्वं शास्त्रप्रतिपाद्यत्वानुकूलासन्निकृष्टार्थोपपादकमुपबृंहणान्यपि भवन्ति। यथा विष्णुस्मृतौ

**[४]'सहस्रशीर्षस्सुमनाः सहस्रपात् सहस्रचक्षुर्वदनः सहस्रवान्।**
**सहस्रबाहुः प्रथमं प्रजापतिः स्रगीपते यः पुरुषो निरुच्यते।'**
**आदित्यवर्णो भुवनस्य गोप्ता ह्येकोऽपूर्वः प्रथमस्तुराषाट्।**
**हिरण्यगर्भः पुरुषो महात्मा स पद्यते वै तमसः परस्तात्।।'**
**कल्पादौ रजसोद्रिक्तो ब्रह्मा भूत्वाऽसृजत् प्रजाः।**
**कल्पान्ते तमसोद्रिक्तो कालो भूत्वाऽग्रसत्पुनः।'**
**स वै नारायणाख्यस्तु सत्वोद्रिक्तोऽर्णवे स्वपन्।**
**त्रिधा विभज्य चात्मानं त्रैलोक्ये समवर्तत'**

इत्यत्र पुरुषसूक्तप्रतिपाद्यस्य नारायणाभिधानस्य प्रथमं प्रजापतिसर्गादौ ब्रह्मत्वकरणमादित्यवर्णत्वं हिरण्यगर्भत्वं तमसः परत्वञ्चोक्तम्। तेन च पुरुषसूक्तस्य '**अद्भ्यस्संभूत**' इत्यस्य [५]'**अम्भस्य पार**' इत्यस्य च नारायणपरत्वमाविष्कृतम्।

---

[१] क - प्रयोगोपपत्तेः; घ - योगोपपत्तेः

[२] **प्रोक्षणीन्यायः -** न हि प्राणातिवादिन्येवातिवादिशब्दो रूढः, क्लृप्तावयवशक्त्यैव लब्धे स्वार्थावबोधने। नष्टावयवनामत्वं प्रत्याचष्टे हि सूत्रकृत् इति दर्शितात्, प्रोक्षणीष्वर्थसंयोगात् इति सूत्रितात् प्रोक्षणीनयादवयवशक्त्या स्वार्थबोधे संभवति रूढिकल्पनाऽयोगात्। अतो न प्राणातिवादिन्येवातिवादिशब्दस्वारस्यमित्यर्थः। (श्रु.प्र.१.३.७) वेदान्तेऽप्यस्योपयोगो यथा-अक्षरशब्दस्यावयवशक्त्या स्वार्थप्रतिपादने प्रमाणान्तरानपेक्षणात्। सम्बन्धग्रहणदशायां अर्थस्वरूपं येन प्रमाणेनावगम्यते, न तत् प्रतिपादनदशायामपेक्षणीयम्। (श्री.भा.१.३.९)

[३] क - प्रयोग्यालभ्यत्वम्; घ - प्रयोगलभ्यत्वम्

[४] ब्रह्मा.पु.६.६३-६६.

[५] म.ना.उ.१.१.

[1]'**प्रजापतिश्चरति**' इत्यादेर्निर्वाहात् बोधायनोऽप्युपबृंहयति - यथा नारायणबलिखण्डे [2]'**विष्णवे नमो नारायणाय नमस्सहस्त्रशीर्षाय नमो यज्ञात्मने नमो यज्ञपुरुषाय नमो विश्वात्मने नमस्सर्वात्मने नमस्सर्वेश्वराय नम**' इति।

युद्धकाण्डे [3]'**लोकानां त्वं परो धर्म**' इत्यनुवर्तमाने [4]'**शाङ्र्गधन्वा हृषीकेशः पुरुषः पुरुषोत्तम**' इति 'त्वं पुरुष' इत्यन्वयः। पुरुषसूक्तादिषु प्रसिद्धः पुरुषस्त्वमित्यर्थः। तत्रैव [5]'**सहस्रचरणश्श्रीमान् शतशीर्षस्सहस्रदृक्**' इति 'सहस्रपात्' इत्यन्तस्योपबृंहणम्।

**ब्रह्माण्डे च मध्यमभागे असितजनकसंवादे** सूक्तमिदमुपबृंहन्ते '**वासुदेवाभिधानस्य**' इत्यादिना वासुदेवाज्जगत्सृष्टिः विस्तरेणोक्ता।

**'भूतं भव्यं भवच्चैव सर्वं स पुरुषस्स्मृतः।**
**इदमावृत्य सकलं सोऽत्यतिष्ठद्दशाङ्गुलम्।**
**स यज्ञतन्त्रात्मा [6]मर्त्यमन्नं यदत्यगात्।**
**ईशानः सर्वलोकानाममृतस्य भवस्य च।**
**ईदृग्विधोऽस्य महिमा पुरुषस्य दुरत्ययः।**
**पादोऽस्य सर्वभूतानि ज्यायानेष यतो नृप।**
**आसंस्तस्य त्रयः पादा दिवि ये यतचेतसाम्।**
**............ महाराज [7]योग्यानां क्लेशसंक्षये।**

---

[1] म.ना.उ.१.१.

[2] प्रदक्षिणीकृत्य शेषमनुज्ञाप्य दक्षिणेनाग्निं प्रागग्रान् दर्भान् संस्तीर्य तेषु बलिं ददाति विश्वेभ्यो देवेभ्यो नमस्साध्येभ्यो देवेभ्यो नमस्सर्वेभ्यो देवेभ्यो नमसर्वाभ्यो देवताभ्यो नमो **विष्णवे नमो नारायणाय नमस्सहस्त्रशीर्षाय नमो यज्ञात्मने नमो यज्ञपुरुषाय नमो विश्वात्मने नमस्सर्वात्मने नमस्सर्वेश्वराय नम इति**। (बो.गृ.सू.३.२०.१२)

[3] अक्षरं ब्रह्म सत्यं च मध्ये चान्ते च राघव।
**लोकानां त्वं परो धर्मो** विष्वक्सेनश्चतुर्भुजः।। (रामायण.६.११७.१४)

[4] **शार्ङ्गधन्वा हृषीकेशः पुरुषः पुरुषोत्तमः**।
अजितः खड्गधृग् विष्णुः कृष्णश्चैव बृहद्बलः।। (रामायण.६.११७.१५)

[5] दिक्षु सर्वासु गगने पर्वतेषु नदीषु च।
**सहस्रचरणश्श्रीमान् शतशीर्षस्सहस्रदृक्**।। (रामायण.६.११७.२१)

[6] क - मर्त्यमानम्; घ - मर्त्यमन्नम्

[7] क - योगिनाम्; घ - योग्यानाम्

## ८. देवतान्तरोपास्यत्वभङ्गः

**अपरोक्तस्त्रिलोकस्य पादो य इह कर्मभिः।**
**इज्यमानोऽखिलावाप्तिं करोत्यद्भुतसंष्टुवम्**[१]**।**
**साशनानशने चोभे इदं विष्णुर्विचक्रमे।**
**अण्डात्तस्माद्विराट् जज्ञे भूतेन्द्रियगुणाश्रयः।**
**अत्यक्रामत् सताद्विश्वमङ्गारौघमिवानलः।**
**धर्मानुस्थितये**[२] **पूर्वं .......**
**यज्ञमूर्तिरिति प्रोक्तस्ततोऽसौ विश्वरूपधृक्।**
**विराजपुरुषो राजा पुरुषो राजौघ ..........**
**स एव गीयते ब्रह्म गात्रेभ्यो यस्य जज्ञिरे।**
**मन्त्रा यज्ञाश्च पशवः सवनस्पतयः कुशाः।**
**........ मुमुक्षुत्वेन वा पुमान्।**
**सम्यग्गुरूपदेशाच्च यं विदित्वा विमुच्यते।**
**रूपं यद्विश्वरूपाख्यमात्माद्वैतस्य विग्रहः।**
**नित्यप्रबुद्धसत्यादिप्रभावममृतात्मकम्।**
**स एव सर्वः सर्वात्मा सर्वभूतहृदिस्थितः।**
**यस्माज्जगत्सर्वमिदं भूतं स चराचरम्।**
**यच्चेष्टयति लोकेषु चतुर्विंशतिकं गुणम्।**
[३]**विज्ञप्तिमान्तत्प्रकृतिः अक्षरः प्रकृतेः परः।**
**हृदयग्रन्थयस्सम्यक् भिद्यन्ते सर्वसंशयाः।**
**छिद्यन्ते चास्य कर्माणि क्षीयन्ते तं विजानतः।**
**तमेकमक्षरं शान्तं परमानन्दमव्ययम्।**
**विष्णवाख्यममृतं साक्षाद्विज्ञाय परिमुच्यत**' इति प्रपञ्चनात्।

सभापर्वणि चोपबृंह्यते -

[४]'**अव्यक्तोऽव्यक्तलिङ्गस्थो य एष भगवान् प्रभुः।**
**पुरा नारायणो देवः स्वयंभूः प्रपितामहः।।**

---

[१] क - घ - संप्लवम्

[२] क - धर्मानुच्चित्तये; घ - धर्मानुकृतये

[३] क - विज्ञप्तिमात्रप्रकृतिः; घ - विज्ञप्तिमान्तत्प्रकृतिः

[४] महा.सभा.३८.८९३.

**सहस्रशीर्षः पुरुषो ध्रुवोऽव्यक्तस्सनातनः।**
**सहस्रास्यस्सहस्राक्षः सहस्रचरणो विभुः।**
**सहस्रबाहुस्साहस्रो देवो नामसहस्रवान्।।**
**सहस्रमकुटो देवो विश्वरूपो महाद्युतिः।**
**अनेकरूपो देवादिरव्यक्ताद्वै परे स्थितः।।'**
[१]'**असृजत् सलिलं पूर्वं स च नारायणः प्रभुः**' इति।

वाराहे तृतीयाध्याये -

[२]'**सहस्रमूर्धानमनेकबाहुमनेकपादं शशिसूर्यनेत्रम्।**
**क्षराक्षरं क्षीरसमुद्रनिद्रं नारायणं स्तौम्यमृतं परेशम्**' इति।

महाभारते आनुशासनिके सुपर्णवैकुण्ठसंवादे -

'**सहस्रोदरपादाय सहस्रचरणाय च।**
**सहस्रबाहवे चैव साहस्रवदनाय च**' इत्यादि।

तथा वायुप्रोक्ते -

[३]'**एकार्णवे तदा तस्मिन् नष्टे स्थावरजङ्गमे।**
**तदा स भवति ब्रह्मा सहस्राक्षस्सहस्रपात्।**'
[४]'**सहस्रशीर्षः पुरुषो रुक्मवर्णो ह्यतीन्द्रियः।**
**ब्रह्मा नारायणाख्यस्तु सुष्वाप सलिले तदा**'

इति। न चात्र चतुर्मुखस्यैव नारायणाख्यात्वं सहस्रशीर्षत्वादिकं चोच्यत इति भ्रमितव्यम्। उदाहृतश्लोकानन्तरमेव -

[५]'**सत्वोद्रेकात्प्रबुद्धस्तु शून्यं लोकमवैक्षत।**
**इमं चोदाहरन्त्यत्र श्लोकं नारायणं प्रति।।**'
[६]'**आपो नरोऽम्भस्तनव इत्यपां नाम शुश्रुम।**

---

[१] **असृजत् सलिलं पूर्वं स च नारायणः प्रभुः।**
ततस्तु भगवांस्तोये ब्रह्माणमसृजत् स्वयम्।। (महा.सभा.३८.८९३)

[२] वराह.पु.३.१६.

[३] ब्रह्मा.पु.१.१.५.२, कूर्म.पु.१.६.२.

[४] ब्रह्मा.पु.१.१.५.३., कूर्म.पु.१.६.३.

[५] ब्रह्मा.पु.१.१.५.४.

[६] ब्रह्म.पु.६.६२.

## ८. देवतान्तरोपास्यत्वभङ्गः

**अप्सु शेते च यस्मात्स तेन नारायणः स्मृतः।।**'
[१]'**तुल्यं युगसहस्रस्य नैशं कालमुपास्य सः।**
**शर्वर्यन्ते प्रकुरुते ब्रह्मत्वं सर्गकारणात्।।**'
[२]'**ब्रह्मा तु सलिले तस्मिन् वायुर्भूत्वा तदाचरत्।**
**निशायामिव खद्योतः प्रावृट्काले ततस्तु स**' इति [३]कीर्तनात्।

अत्र पुरुषसूक्तप्रतिपाद्यस्य सहस्रशिरसो नारायणाभिधानस्य कल्पादौ स्वापादुत्थितस्य किञ्चित्कालं [४]सर्गार्थब्रह्मत्वकारणपरस्य च प्रसिद्धस्य चतुर्मुखस्य ब्रह्मणस्तावत्कालं वायुभावेन खद्योतवदाकाशचारित्वञ्च विस्पष्टमवगम्यते। ततश्चान्येष्वपि पुराणेषु पृथिव्युद्धरणादिकर्तुस्सलिलशायिनो ब्रह्मणो नारायणाख्यस्य लोकप्रसिद्धत्वात् ब्रह्मण स्वनाभिपद्मसंभवादन्यत्वमध्यवसातव्यम्। एवञ्च पृथिव्युद्धरणादिकर्तुरादिवराहस्य भगवदाविर्भावत्वप्रसिद्धिर्नारायणशब्दप्रसिद्धिश्च न बाधिता भविष्यति। हरिवंशे सूतं प्रति ऋषयः -

[५]'**सहस्रचरणं सूत सहस्रांशं सहस्रशः।**
**सहस्रशिरसं देवं यमाहुर्वै युगे युगे।**'
[६]'**नाभ्यरण्यां समुद्भूतं यस्य पैतामहं गृहम्**' इति।

तत्रैवानन्तराध्याये वैशम्पायनः

[७]'**हन्ति विष्णोस्समस्तास्त्वं शृणु दिव्या प्रवृत्तयः।**'
[८]'**सहस्राक्षं सहस्रास्यं सहस्रचरणं विभुम्।**

---

[१] ब्रह्मा.पु.१.१.५.५, कूर्म.पु.१.६.६.
[२] ब्रह्मा.पु.१.१.५.७.
[३] क - भेददर्शनात्; घ - कीर्तनात्
[४] क - ग - सर्गार्थं ब्रह्मत्वकरणं परस्य; घ - सर्गार्थं ब्रह्मत्वकारणपरस्य
[५] सहस्रशिरसं ब्रह्मन् सहस्रारं सहस्रदम्।
सहस्रचरणं देवं यमाहुर्वै युगे युगे।। (ह.वं.१.४०.२०)
[६] **नाभ्यारण्यां समुत्पन्नं यस्य पैतामहं गृहम्**।
एकार्णवजलस्थस्य नष्टे स्थावरजङ्गमे।। (ह.वं.१.४०.२१)
[७] विष्णोः प्रभावश्रवणे दिष्ट्या ते मतिरुत्थिता।
**हन्ति विष्णोः प्रवृत्तिं च शृणु दिव्यां मयेरिताम्**।। (ह.वं.१.४१.२)
[८] सहस्राक्षं सहस्रास्यं सहस्रचरणं विभुम्।

**सहस्रशिरसं देवं सहस्रकरमव्ययम्।।**'

[१]'**सहस्रजिह्वं साहस्रं सहस्रमकुटं विभुम्**'

[२]इत्यारभ्य [३]'**आहुर्वेदविदो विप्रा यं यज्ञं शाश्वतं प्रभुम्**' इति। तत्रैवान्यत्र [४]'**आदित्यवर्णं तमसः परस्तात्**' इत्यस्य

'**स्रष्टा वेदस्य यज्ञस्य हविषामृत्विजां हरे।**

**निषेद्धा दुष्टसत्वस्य भर्ता त्वं तमसः पर**' इति।

मात्स्ये- [५]'**अहं नारायणो ब्रह्मन् सर्वभूतविनाशनः।**

**अहं सहस्रशीर्षाख्यो यः पादैरभिसंहितः।।**'

[६]'**आदित्यवर्णं पुरुष**' इति। अत्र [७]'**सहस्रशीर्षा पुरुष**' इत्युपक्रमवाक्यं [८]'**आदित्यवर्णं तमसस्तु पार**' इत्युपसंहारवाक्यं चार्थतः परमपुरुषे नारायणे सङ्गमय्य सूक्तमध्यस्थ-

---

सहस्रशिरसं देवं सहस्रकरमव्ययम्।। (ह.वं.१.४१.३)

[१] **सहस्रजिह्वं भास्वन्तं सहस्रमुकुटं प्रभुम्।**
सहस्रदं सहस्रादिं सहस्रभुजमव्ययम्।। (ह.वं.१.४१.४)

[२] सवनं हवनं चैव हव्यं होतारमेव च। पात्राणि च पवित्राणि वेदीं दीक्षां चरुं स्रुवम्।।
स्रुक् सोमं शूर्पमुसलं प्रोक्षणं दक्षिणायनम्। अध्वर्युं सामगं विप्रं सदस्यं सदनं सदः।।
यूपं समित्कुशं दर्वी चमसोलूखलानि च। प्राग्वंशं यज्ञभूमिं च होतारं चयनं च यत्।।
ह्रस्वान्यतिप्रमाणानि चराणि स्थावराणि च। प्रायश्चित्तानि चार्थं च स्थण्डिलानि कुशांस्तथा।।
मन्त्रं यज्ञवहं वह्नि भागं भागवहं च यत्।
अग्रेभुजं सोमभुजं घृतार्चिषमुदायुधम्।। (ह.वं.१.४१.४-९)

[३] **आहुर्वेदविदो विप्रा यं यज्ञे शाश्वतं विभुम्।**
तस्य विष्णोः सुरेशस्य श्रीवत्साङ्कस्य धीमतः।। (ह.वं.१.४१.१०)

[४] पु.सू.२.२.

[५] अहं नारायणो ब्रह्मन् सर्वभूः सर्वनाशनः।
अहं सहस्रशीर्षाख्यैर्यः पदैरभिसंज्ञितः।। (मत्स्य.पु.१६६.५०)

[६] **आदित्यवर्णः पुरुषो** मखे ब्रह्ममयोमखः।
अहमग्निर्हव्यवाहो यादसां पतिरव्ययः।। (मत्स्य.पु.१६६.५१)

[७] पु.सू.१.१

[८] पु.सू.१.१६.

## ८. देवतान्तरोपास्यत्वभङ्गः

वाक्यपदप्रतिपाद्यत्वं कण्ठत उक्तं [1]'**यः पादैरभिसंहित**' इति। उद्योगे [2]'**सहस्रशीर्षं पुरुषं पुराणम्**' इत्यारभ्य [3]'**इन्द्रानुजं तं शरणं प्रपद्य**' इति। हरिवंशे पौष्करप्रादुर्भावे -

[4]'**अहं सहस्रशीर्षाख्यो यो वेदे हरिसंज्ञितः।**
**आदित्यवर्णः पुरुषो मुखे ब्रह्ममयोऽमल**'

इति ब्रह्ममयः ब्राह्मणोत्पादकत्वेन तत्वेन तत्प्रचुरः। [5]'**ब्राह्मणोऽस्य मुखमासीत्**' इत्यस्यार्थो [6]अनुस्मृतः। काशीखण्डे बिन्दुमाधवाविर्भावेऽग्निबिन्दुस्तुतौ -

[7]'**ओं नमः पुण्डरीकाक्ष बाह्यान्तश्शौचदायिने।**
**सहस्रशीर्षा पुरुषः सहस्राक्षस्सहस्रपात्**' इत्यादि।

महाभारते मोक्षधर्मे -

[8]'**केशवो भरतश्रेष्ठ भगवानीश्वरः प्रभुः।**
**पुरुषः सर्वमित्येव श्रूयते बहुधा प्रभुः**'

इत्यत्र 'बहुधा' इत्यनेन [9]कठवल्यां [10]मुण्डके [1]सौबालेऽन्यत्र च [2]'**पुरुष एवेदँ सर्वम्**' इत्यस्याम्नातमभिसंहितम्। तेनेदमेव वचनं सर्वासामुपनिषदां भगवद्विषयत्वे त्वपर्याप्तमुपबृंहणम्। आश्वमेधिके ब्रह्मा -

---

[1] मत्स्य.पु.१६६.५०.

[2] **सहस्रशीर्षं पुरुषं पुराणमनादि** मधायन्तमनन्तकीर्तिम्।
शुक्रस्य धातारमजं च नित्यं परं परेषां शरणं प्रपद्ये।। (महा.उद्योग.७१.६)

[3] त्रैलोक्यनिर्माणकरं जनित्रं देवासुराणामथ नागरक्षसाम्।
नराधिपानां विदुषां प्रधानं **इन्द्रानुजं तं शरणं प्रपद्ये**।। (महा.उद्योग.७१.७)

[4] अहं सहस्रशीर्षाद्यैर्यः पदैरभिसंवृतः। आदित्यो यज्ञपुरुषो देवो यज्ञमयो मखः।
अहमग्निर्हव्यवाहो यादसां पतिरव्ययः।। (ह.वं.३.१०.५२)

[5] ब्राह्मणोऽस्य मुखमासीत्। बाहू राजन्यः कृतः।
ऊरू तदस्य यद्वैश्यः। पद्भ्याँ शूद्रो अजायत।। (पु.सू.१३)

[6] क - अनुसृतः; घ - अनुस्मृतः

[7] स्क.पु.काशी.६०.२५.

[8] महा.शान्ति.२०७.५.

[9] महतः परमव्यक्तमव्यक्तात् **पुरुषः परः**।
पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः।। (कठ.उ.१.३.११)

[10] **पुरुष एवेदं विश्वं** कर्म तपो ब्रह्म परामृतम्।
एतद्यो वेद निहितं गुहायां सोविद्याग्रन्थिं विकरतीह सोम्य।। (मुण्डक.२.१.१०)

[3]‘**विष्णुरेवादिसर्गेषु स्वयंभूर्भवति प्रभुः**’।
[4]‘**एवं हि यो वेद गुहाशयं प्रभुं परं पुराणं पुरुषं विश्वरूपम्।**
**हिरण्मयं बुद्धिमतां परां गतिम् स बुद्धिमान् बुद्धिमतीत्य तिष्ठति**’

इति। अत्र ‘**पुरुष एवेदं सर्वम्**’ इति ‘**सर्व**’ शब्दार्थो ‘विश्वरूपम्’ इति, [5]‘**आदित्यवर्णम्**’ इत्यस्यार्थो ‘हिरण्मय’ इत्युक्तः। ‘बुद्धिमतां परां गतिम्’ इति ‘**अमृतत्वस्येशान**’ इत्यस्य, तत्प्रपञ्चनार्थस्य, ‘**वेदाहमेतम्**’ इति मन्त्रस्य [6]‘**तमेवं विद्वान्**’ इत्यस्य चार्थः। यद्वा अनेन श्लोकेन ‘**वेदाहम्**’ इत्यस्यार्थः ‘एवं वेद’ इति, ‘**एवं विद्वान्**’ इत्यस्य विश्वरूपमिति, ‘**महान्तम्**’ इत्यस्य हिरण्मयमिति, ‘**आदित्यवर्णम्**’ इत्यस्य स बुद्धिमानिति, ‘**अमृत इह भवति**’ इत्यस्य चार्थस्य प्रत्यभिज्ञानात्। तथाश्वमेधिके [7]मानसयज्ञेषु वर्ण्यमानेषु [8]‘**योगयज्ञः प्रवृत्तो म**’ इति योगयज्ञमारभ्य,

[9]‘**ऋत्विगाश्चात्र शंसन्ति नारायणविदो जनाः।**

---

[1] तदाहुः किं तदासीत्तस्मै स होवाच न सन्नासन्न सदसदिति तस्मात्तमः सञ्जायते तमसो भूतादिर्भूतादेराकाशमाकाशाद्वायुः वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी तदण्डं समभवत्। तत्संवत्सर-मात्रमुषित्वा द्विधाऽकरोदधस्ताद्भूमिमुपरिष्टादाकाशं मध्ये **पुरुषो दिव्यः सहस्रशीर्षा पुरुषः** सहस्राक्षः सहस्रपात्। (सु.उ.१)

[2] पु.सू.१.२.

[3] स धीरः सर्वलोकेषु न मोहमधिगच्छति।
**विष्णुरेवादिसर्गेषु स्वयंभूर्भवति प्रभुः**।। (महा.आश्व.४०.१२)

[4] महा.आश्व.४०.१३.

[5] पु.सू.१.१६.

[6] पु.सू.१.१७; २.२.

[7] मनसा गम्यते यच्च यच्च वाचा निगद्यते। श्रोत्रेण श्रूयते यच्च चक्षुषा यच्च दृश्यते।।
स्पर्शेन स्पृश्यते यच्च घ्राणेन घ्रायते च यत्। मनः षष्ठानि संयम्य हवींष्येतानि सर्वशः।।
गुणवत्पावको मह्यं दीव्यतेऽन्तः शरीरगः।। (महा.आश्व.२५.१२-१३)

[8] योगयज्ञः प्रवृत्तो मे ज्ञानवह्निप्रदोद्भवः। प्राणस्तोत्रोऽपानशस्त्रः सर्वत्यागसुदक्षिणः।।
कर्तानुमन्ता ब्रह्मात्मा होताध्वर्युः कृतस्तुतिः।
ऋतं प्रशास्ता तच्छास्त्रमपवर्गोऽस्य दक्षिणा।। (महा.आश्व.२५.१४-१५)

[9] ऋचश्चाप्यत्र शंसन्ति नारायणविदो जनाः।
नारायणाय देवाय यदबध्नन् पशून् पुरा।। (महा.आश्व.२५.१६)

## ८. देवतान्तरोपास्यत्वभङ्गः

**नारायणाय देवाय यदबध्नन् पशून् पुरा**'

इत्यारभ्य [१]'**देवं नारायणं भीरु सर्वात्मानं निबोध म**' इत्यन्तेन पुरावृत्तरूपेण [२]'**अबध्नन् पुरुषं पशुम्**' इत्यस्यार्थं वर्णयता तन्मुखेनेदं सूक्तं भगवद्परमुपबृंहितम्। आरण्यपर्वणि मार्कण्डेयसमाख्यायां [३]'**ब्राह्मणोऽस्य**' इत्यादिमुखेनोपबृंहणम् -

[४]'**ब्रह्म वक्त्रं भुजौ क्षत्रमूरु मे संश्रिता विशः।**
**पादौ शूद्रा भजन्ते मे व्युत्क्रमेण क्रमेण च।।**
**ऋग्वेदस्सामवेदश्च यजुर्वेदोऽप्यथर्वणः।**
**मत्तः प्रादुर्भवन्त्येते मामेव प्रविशन्ति च**' इति।

'**ऋग्वेद**' इत्यादिना [५]'**ऋचः सामानि जज्ञिरे**' इत्यादेरर्थोऽनुसृतः।

मोक्षधर्मे - [६]'**ततः कृष्णो महाबाहुः पुनरेव युधिष्ठिर।**
**ब्राह्मणानां शतं श्रेष्ठं मुखादसृजत प्रभुः।।**'
[७]'**बाहुभ्यां क्षत्रियशतं वैश्यानामूरुतश्शतम्।**
**पद्भ्यां शूद्रशतञ्चैव केशवो भरतर्षभ**' इति।

भीष्मपर्वणि - [८]'**मुखतस्सोऽग्निमसृजत् प्राणाद्वायुमथापि च।**
**सरस्वतीञ्च वेदांश्च वासुदेवो महायशाः।।**'
[९]'**एष लोकान् ससर्जादौ देवान् ऋषिगणैस्सह**' इति।
[१०]'**असृजन्मुखतो विप्रान् बाहुभ्यां क्षत्रियांस्तथा।**

---

[१] तत्र सामानि गायन्ति तत्र चाहुर्निदर्शनम्।
**देवं नारायणं भीरु सर्वात्मानं निबोध तम्**।। (महा.आश्व.२५.१७)

[२] सप्तास्यासन्परिधयः। त्रिः सप्त समिधः कृताः।
देवा यद्यज्ञं तन्वानाः। **अबध्नन् पुरुषं पशुम्**।। (पु.सू.१.७)

[३] पु.सू.१३

[४] महा.वन.१८९.१३-१४.

[५] तस्माद्यज्ञात् सर्वहुतः। ऋचः सामानि जज्ञिरे।
छन्दाँसि जज्ञिरे तस्मात्। यजुस्तस्मादजायत। (पु.सू.१.१०)

[६] महा.शान्ति.२०७.३१.

[७] महा.शान्ति.१०७.३२.

[८] महा.भीष्म.६७.६.

[९] **एष लोकान् ससर्जादौ देवांश्च ऋषिभिः सह**।
निधनं चैव मृत्युं च प्रजानां प्रभवाप्ययौ।। (महा.भीष्म.६७.७)

**वैश्यांश्चाप्यूरुतो राजन् शूद्रान् पद्भ्यां तथैव च**'
इति, [२]'**मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत**' [३]'**तथा लोकानकल्पयन्**' [४]'**ब्राह्मणोऽस्य मुखमासीत्**' इत्यादि द्वारोपबृंहणम्। शङ्खस्मृतौ -

[५]'**स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम्।**
**ध्याननिर्मथनाभ्यानाञ्च विष्णुं पश्येद्धृदि स्थितम्**' इति।

[६]'**एष वै पुरुषो विष्णुर्व्यक्ताव्यक्तस्सनातन**' इति चाधिकृते,

[७]'**वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्।**
**यं एवं विदित्वा न बिभेति मृत्योर्नान्यः पन्था विद्यते चायनाय।।**'

इति '**वेदाहम्**' इत्यृच उपबृंहणम्। यद्वा युद्धकाण्डे '**तमसः परमो धाता शंखचक्रगदाधर**' इति [८]'**आदित्यवर्णं तमसस्तु पार**' इत्यस्योपबृंहणम्। श्रीमद्विष्णुपुराणे तु ध्रुवस्तोत्रे इदं सूक्तं भगवत्परतया स्पष्टमुपबृंहितम् -

[९]'**सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।**
**सर्वव्यापि भुवस्पर्शादत्यतिष्ठद्दशाङ्गुलम्।।**
**यद्भूतं यच्च भव्यं पुरुषोत्तम तद्भवान्।**
**त्वं भो विराट् स्वराट् संम्राट् त्वत्तश्चाप्यधिपूरुषः।।**
**अत्यरिच्यत सोऽधश्च तिर्यक् चोर्ध्वञ्च वै पुरा।**
**त्वत्तो विश्वमिदं जातं त्वत्तो भूतं भविष्यति।।**

---

[१] मुखतः सोऽसृजत् विप्रान् बाहुभ्यां क्षत्रियांस्तथा।
वैश्यांश्चाप्यूरुतो राजन् शूद्रान् वै पादतस्तथा।। (महा.भीष्म.६७.१८)

[२] चन्द्रमा मनसो जातः चक्षोः सूर्यो अजायत।
**मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत**। (पु.सू.१.१४)

[३] नाभ्या आसीदन्तरिक्षम्। शीर्ष्णो द्यौः समवर्तत।
पद्भ्यां भूमिर्दिशः श्रोत्रात्। **तथा लोकानकल्पयन्**। (पु.सू.१५)

[४] पु.सू.१.१३.

[५] शं.स्मृ.७.१७.

[६] **एष वै पुरुषो विष्णुर्व्यक्ताव्यक्तस्सनातनः**।
एष धाता विधाता च पुराणो निष्कलः शिवः।। (शंख.स्मृ.७.२१)

[७] शंख.स्मृ.७.२२.

[८] पु.सू.१.१६.

[९] विष्णु.पु.१.१२.५६-६४.

## ८. देवतान्तरोपास्यत्वभङ्गः

**त्वत्तो यज्ञस्सर्वहुतः पृषदाज्यं पशुस्तथा।**
**त्वत्तो ऋचोऽथ सामानि त्वत्तश्छन्दांसि जज्ञिरे।।**
**त्वत्तो यजूंष्यजायन्ते त्वत्तोऽश्वाः पशवो गजाः।**
**गावस्त्वत्तस्समुद्भूता अण्डजा अवयो मृगाः।।**
**त्वन्मुखाद्ब्राह्मणा जाता बाह्वोः क्षत्रमजायत।**
**वैश्यास्तवोरुजाश्शूद्राः तव पद्भ्यां समुद्गताः।।**
**अक्ष्णोः सूर्योऽनिलः प्राणाश्चन्द्रमा मनसस्तव।**
**प्राणोऽन्तस्सुषिराज्जातो मुखादग्निः पुरन्दरः।।**
**नाभितो गगनं द्यौश्च शिरसस्समवर्तत।**
**दिशश्श्रोत्रात् क्षितिः पद्भ्यां त्वत्तस्सर्वमभूदिदम्**'

इति। अत्र '**पुरुष एवेदम्**' इति मन्त्रोपबृंहणे पुरुषोत्तमशब्दप्रयोगात्तस्य पुरुषशब्द-वाच्यत्वमपि सिद्धम्। आश्वमेधिके च श्रीभगवानेवाह -

[१]'**अहं सहस्रशीर्षा तु सहस्रवदनेक्षणः।**
**सहस्रबाहूदरधृक् सहस्राक्षस्सहस्रपात्।।**
**धृत्वोर्वीं महतीं सर्वामत्यतिष्ठं दशाङ्गुलम्।**
**सर्वभूतात्मभूतस्थस्सर्वव्यापी ततो ह्यहम्**' इति।

हरिवंशे तपश्चर्यायां रुद्रकृतकृष्णस्तोत्रेऽप्युपबृंहितम् -

[२]'**सहस्रशीर्षा पुरुषस्सहस्राक्षस्सहस्रपात्।**
**सहस्रोदरसाहस्री सहस्रात्मा दिवस्पतिः।।**
**भूमिं सर्वमिमां प्राप्य सप्तद्वीपां ससागराम्।**
**अणुस्सर्वत्रगो भूत्वात्यतिष्ठद्दशाङ्गुलम्।।**
**त्वमेवेदं जगत्सर्वं यद्भूतं यद्भविष्यति।**
**त्वत्तो विराट् प्रादुरभूत् सम्राट् चैव जनार्दन।।**
**तव वक्त्राज्जगन्नाथ ब्रह्मणो लोकरक्षकः।**
**प्रादुरासीत् पुरा ब्रह्मन् षट्कर्मनिरतस्सदा।।**
**राजन्यस्तु तथा बाह्वोरासीत् संरक्षणे तथा।**
**उर्वोर्वैश्यस्तथा विष्णोः पादाच्छूद्र उदाहृतः।।**

---

[१] महा.आश्व.पृ.१०००.

[२] ह.वं.३.८८.३३-४३.

**एवं वर्णा जगन्नाथ तव देहात् सनातनात्।**
**मनसस्तव देवेश चन्द्रमास्समपद्यत।।**
**सुखकृत् सर्वजन्तूनां शीतांशुरमृतप्रभः।**
**अक्ष्णोस्सूर्यस्समुत्पन्नः सर्वप्राणिविलोचनः।।**
**यस्य भासा जगत्सर्वं भासते भानुमानसौ।**
**मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत।।**
**नाभेर्व्योम समुत्पन्नं तव देव जनार्दन।**
**द्यौरासीत्तु महाधारा**[१] **शिरसस्तव गोपते।।**
**पद्भ्यां भूमिस्समुत्पन्ना दिशश्श्रोत्रात् जगत्पते।**
**एवं सृष्ट्वा जगत्सर्वं व्याप्य सर्वं व्यवस्थितम्।।**
**व्याप्य सर्वानिमांल्लोकान् स्थितस्सर्वत्र केशवः।**
**ततश्च विष्णुनामासि धातोर्व्याप्तेः प्रवेशनात्**'

इति धातोर्व्याप्तेश्च दर्शनात्। तत्रैव वामनप्रादुर्भावे -

'**व्यक्ताव्यक्तं महद्भूतं भूतभव्यभवो विभुः।**'
[२]'**सहस्रशीर्षा पुरुषस्सहस्राक्षस्सहस्रपात्।**
**शंखचक्रगदापाणिः पीतवासास्सुरारिहा**' इति।

तत्रैव बाणयुद्धेऽध्वरस्तोत्रे - [३]'**नमस्सहस्रशिरसे सहस्रचरणाय च**' '**सहस्राक्ष नमो नित्यं लोकानामभयंकर**' इति। तत्रैव वामनप्रादुर्भावे बलेरन्यैरजय्यत्वमुक्त्वा [४]'**सहस्रशिरसा हन्तुं केवलं शक्य एव हि**' इत्यादि वचनादागतानां ब्रह्मणा विदिताशयेन

[५]'**भविष्यति च वस्सोऽर्थः कांक्षितो यस्सुरोत्तमाः।**
**बलेर्दानवमुख्यस्य यो विजेता भविष्यति**'

इत्याद्युक्त्वा [१]प्रेक्षितानां तदर्थतपश्चर्यायां -

---

[१] क-ग - महाघोरा; घ - महाधारा
[२] ह.वं.३.६४.२७.
[३] नमो ब्रह्मविदे तुभ्यं ब्रह्म ब्रह्मात्मने नमः।
**नमः सहस्रशिरसे सहस्रचरणाय च**।। (ह.वं.३.९०.१७)
[४] **सहस्रशिरसा हन्तुं केवलं शक्यतेऽसुरः।**
तेनैकेन सहस्राक्ष न ह्यन्येन शतक्रतो।। (ह.वं.पु.३.६६.५)
[५] ह.वं.६७.२.

## ८. देवतान्तरोपास्यत्वभङ्गः

[2]'**प्रसादार्थं सुरेशस्य तस्य देवस्य धीमतः।**
**नारायणस्य देवस्य सहस्राक्षस्य भूतले**'

इति पठ्यते। अत्रोपक्रमोपसंहारयोस्सहस्रशीर्षेत्युपबृंहितम्। हरिवंशे बलियुद्धे -

[3]'**सहस्रशीर्षा पुरुषस्सहस्राक्षस्सहस्रपात्।**
**शंखचक्रगदापाणिः पीतवासास्सुरारिहा**'

इति। हरिवंश एव महापुरुषस्तवे [4]'**सहस्रशीर्षा**' '**सहस्रदृक्**' '**सहस्रपाद**' '**सहस्रबाहो**' '**सहस्रमूर्ते**' '**साहस्र**' '**सहस्रशस्त्वामाहुर्वेदा**' इति। भागवते प्रथमस्कन्धे तृतीयाध्याये -

[5]'**पश्यन्त्यदोरूपमदभ्रचक्षुषस्सहस्रपादोरुभुजाननाद्भुतम्।**
**सहस्रमूर्धश्रवणाक्षिनासिकं सहस्रमौल्यंबरकुण्डलोल्लसत्**'

इति। यत्तु श्रुत्यादिनियमितशिवैकान्तस्यापि पुरुषसूक्तस्य श्रुतिस्मृतिदृष्टविनियोगान्तर-निर्वाहाय धनदादिप्रतिपादनप्रकारवत् नारायणप्रतिपादनप्रकारस्यापि कस्यचित् पुराणाद्यभावे पुरुषबुद्ध्यापि कल्पनीयत्वात्। स एव तत्समाराधनादिप्रपञ्चनपर-पुराणागमेषु नियमित इत्यन्यथासिद्धानि उपबृंहणानीति[6] तन्न, ईशानश्रुतिनिषेधात्। किञ्च अस्मिन् [7]समवेतार्थपरवाक्यस्य समवेतार्थपरतया विवरणे हि निर्वाहः। तस्यैवासमवेतार्थस्य पुनः कीर्तने कथं निर्वाह इति [8]न विद्मः। न चात्र निर्वाहापेक्षा। असमवेतार्थप्रकाशनस्य नियमादृष्टार्थत्वेन व्यवस्थापितत्वात्। यच्चोच्यते

---

[1] ग - प्रेषितानाम्; क - घ - प्रेक्षितानाम्

[2] प्रसादार्थं सुरेशाय तस्मै योगाय धीमते।
नारायणाय देवाय सहस्राक्षाय धीमते।। (ह.वं.३.६७.२४)

[3] ह.वं.३.६४.२७.

[4] त्वमेव समुद्रवासाः अजैक्पात् **सहस्रशीर्ष** सहस्रसंमित महाशीर्ष **सहस्रदृक् सहस्रपात्** अधोमुख महामुख महापुरुष पुरुषोत्तम **सहस्रबाहो सहस्रमूर्ते साहस्रास्य** सहस्राक्ष सहस्रभुज सहस्रभुव **सहस्रशस्त्वामाहुर्वेदाः** विश्वेदेव विश्वसंभव सर्वेषामेव देवानां सौभम आदौ गतिः।। (ह.वं.३.६७.९७)

[5] भा.पु.१.३.४.

[6] क - घ - उपबृंहणानीति; ग - उपबृंहितानीति

[7] ग - असमवेतार्थ, क - घ - समवेतार्थ

[8] ग - विद्मः क - घ - न विद्मः

असमवेतार्थानामपि मन्त्राणां तथैव पुराणादिषूपबृंहणं दृश्यते। [1]'**यथा सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्या**' इति मन्त्रस्य

[2]'**सोमं ससर्ज यज्ञार्थं सोमाद्द्यौस्समजायत।**'
[3]'**धरा वह्निश्च सूर्यश्च वज्रपाणिश्शचीपतिः।**
**विष्णुर्नारायणश्श्रीमान् सर्वं सोममयं जगत्**'

इति, तन्न। श्रुतिस्मृत्योः उक्तयोः समवेतार्थत्वात् द्युपृथिव्यादित्यादयो हि कर्मनिर्मिताः, तद्द्वारा सोमसाध्यः विष्णुरपि कर्मभिराराधितः प्रादुर्भवतीति इतिहासादिषु सिद्धम्। अत एवोक्तं वैष्णवे पुराणे -

[4]'**देह्यनुज्ञां महाराज मा धर्मो यातु संक्षयम्।**
**हविषां परिणामोऽयं यदेतदखिलं जगत्**' इति।

तस्मादुपबृंहणानामनन्यथासिद्धत्वात् सिद्धं पुरुषसूक्तस्य भगवत्परत्वं तदेकार्थत्वञ्च, [5]'**येनाक्षरं पुरुषं वेद**' इति श्रुतेः। अतो देवतान्तरोपास्यत्ववादिनो निरस्ताः।

## इति देवतान्तरोपास्यत्वभङ्गः।

---

[1] **यथा सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः**। जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः।। (साम.१.६.१.४.५; २.३.१.१९.१; ९.९६.५)

[2] वर्णाश्रमव्यवस्थाश्च स्थापयामास वै विराट्।
**सोमं ससर्ज यज्ञार्थं सोमाद्यौस्समजायत**। (लिङ्ग.पु.२.१७.६)

[3] चरुश्च वह्निर्यज्ञश्च वज्रपाणिश्शचीपतिः।
**विष्णुर्नारायणश्श्रीमान् सर्वं सोममयं जगत्**।। (लिङ्ग.पु.२.१७.७)

[4] विष्णु.पु.१.१३.२५.

[5] मुण्डक.१.२.१३.

## गुरूपसदनविजये

## ९. अवाच्यत्वभङ्गः

[1]"**तां विद्याम्**' इत्येतावतैव चारितार्थ्ये '**ब्रह्मविद्याम्**' इति ब्रह्मपदं ब्रह्मणोऽपि उपदेश्यत्वसिद्ध्यर्थमुपदेश्यत्वं न वाक्यार्थतयासंसर्गत्वात् किन्तु [2]धात्वर्थतया। तत्र मुख्यत्वरूपप्रकर्षः[3] प्रशब्देन विवक्षितः विवेकरूपप्रकर्षवत् बाधकाभावे विवक्षणीयत्वात्। तेनावाच्यत्वं ब्रह्मणो निराचकार। तथा हि ब्रह्मावाच्यमिति न प्रतिजानीषे उत प्रतिजानीषे। नाद्यः, तत्साधनासंभवात्। द्वितीये ब्रह्मपदवाच्यस्यावाच्यत्वसाधने व्याघातः। लक्ष्यार्थस्य तत्साधने बाधः। ब्रह्मातिरिक्तस्यैव लक्षणाया[4] प्रतीतेः। ब्रह्मपदवेद्यस्य[5] अवाच्यत्व-साधनेऽपि तथा वाच्यलक्ष्यातिरिक्तबोध्यासिद्धेः। ब्रह्मपदेन वाच्यमिति वा लक्ष्यमिति वा बोध्यमिति वोक्तावपि तथा।

किञ्च ब्रह्मपदबोध्यस्य कृत्स्नस्याप्यवाच्यत्वसाधने ब्रह्मपदस्य कुत्रापि मुख्य-वृत्तेरभावेन तत्संबन्धनिमित्तलक्षणाया अभावात् बोधकत्वस्यैव [6]असिद्धेः ब्रह्मपदबोध्यं किञ्चिदवाच्यमित्युक्तौ न [7]निर्धारणासिद्धिः ब्रह्मपदमुख्यार्थविशेष्यमवाच्यमित्युक्तौ बाधः। विशेष्यस्वरूपं विशेषणेन विना न शक्तिगोचर इत्युक्तौ सिद्धसाधनम्। घटादेरप्यवाच्यता-प्रसङ्गश्च। '**शुद्धं ब्रह्म न वाच्यं**' '**निर्विशेषं ब्रह्म न वाच्यम्**' इत्युक्तौ विशेषणेन विना वाच्यं न भवतीति विवक्षायामुक्त एव दोषः। अविद्योपहितभागादन्यभागविवक्षायां ब्रह्मणो व्यापकत्वाभावप्रसङ्गः। अविद्योपहितभागस्य मुख्यार्थतया विवक्षितस्य देशपरिच्छेदवतः कथं [8]ब्रह्मशब्दमुख्यार्थत्वमितिअविद्यानुपहितभागे मानाभावश्च।

---

[1] तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय।
येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्।। (मुण्डक.१.२.१३)

[2] क - ग - पदार्थतया; घ - धात्वर्थतया

[3] क -घ - रूपप्रकर्षः; ग - रूपः प्रकर्षः

[4] क -ग - घ - लक्षणया

[5] क - ग - बोध्यस्य

[6] क - घ - असिद्धेः; ग - असिद्धिः

[7] क - ग - निर्धारणसिद्धिः; घ - निर्धारणासिद्धिः

[8] क - ब्रह्मशब्दमुख्यार्थत्वमपि; ग - ब्रह्मशब्दार्थत्वमपि; घ - ब्रह्मशब्दमुख्यार्थत्वमिति

अपि च ब्रह्मणि प्रवृत्तिनिमित्तसत्वेऽप्यवाच्यत्वमुच्यत उत तदभावात्। आद्यं ब्रह्मणापि दुस्साधनम्। न द्वितीयः, प्रवृत्तिनिमित्तस्य निरतिशयब्रह्मत्वस्य तत्रैव [१]बाधात्। [२]धर्मसमानसत्ताकप्रवृत्तिनिमित्ताभावान्न वाच्यमिति चेत्तर्हि ब्रह्मपदस्य न मुख्यवृत्तिरिति। तस्य ब्रह्मणि लक्षणापि न स्यात्, तस्यास्तादधीन्यात्। अविद्योपहिते प्रवृत्तिनिमित्तस्य धर्मिसमसत्त्वलाभात् स एव मुख्यार्थ इति चेन्न। उपाधेरधर्मित्वादुपाधेयस्य सत्यत्वाच्च धर्मिसमत्वं [३]वाच्यं निषिध्यत इति चेन्न। तस्य प्रपञ्चसमानयोगक्षेमस्य पृथक् साधनवैयर्थ्यात्। अन्यथा कारणत्वस्यापि निषेधप्रसङ्गात्। अस्तु ब्रह्मवित् प्रद्वेषेण तस्याप्रामाणिकत्वबोधनार्थं तथा निषेधः। तथापि सत्वादीनां मिथ्यात्वेऽपि यथा ब्रह्म सत्यं ज्ञानमानन्दञ्च तथा वाच्यत्वस्य मिथ्यात्वेऽपि ब्रह्म वाच्यमेव स्यात्। अन्यथा लक्ष्यमपि न स्यात्। वाच्यत्वस्य मिथ्यात्वेऽपि न लक्षणासिद्धिः। एवञ्च श्रुतिप्रत्याशाप्युत्सारिता। तत्राप्युक्तन्यायेन ब्रह्मावाच्यमिति प्रतिपादनासंभवेन श्रुतेरन्यपर्यायात्।

अपि च [४]'**अनुप्रविश्य नामरूपे व्याकरवाणि**' इत्यनुप्रवेशस्य नामव्याकरणनिमित्ततोक्तिः[५] नामवाच्यत्वसिध्यर्थमेव। रूपव्याकरणनिमित्तता तु **सद्विद्याविजये** निरूपयिष्यते।

'**वचसां वाच्यमुत्तमम्**' [६]'**तस्योदिति नाम**' [७]'**यन्नाम तन्नाम**' [८]'**ब्रह्मैव वाचः**' [९]'**परमं व्योम**' इत्यादि सुप्रसिद्धम्। [२]'**नताः स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वती**' इत्यादिभिः श्रुतिरुपबृंहिता च -

---

[१] क - ग - भावात्; घ - बाधात्

[२] क - ग - धर्मि; घ - धर्म

[३] क - वाच्यत्वम्; घ - वाच्यम्

[४] सेयं देवतैक्षत, हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मना **अनुप्रविश्य नामरूपे व्याकरवाणीति**। (छा.उ.६.३.२)

[५] क - निमित्तत्वोक्तिः; घ - निमित्ततोक्तिः

[६] तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी, **तस्योदिति नाम**, स एष सर्वेभ्यः पाप्मभ्य उदितः, उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद। (छा.उ.१.६.७)

[७] अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते, सैवर्क्, तत्साम, तदुत्थम्, तद्यजुस्तद्ब्रह्म। तस्यैतस्य तदेव रूपम्, यदमुष्य रूपम्; यावमुष्य गेष्णौ तौ गेष्णौ **यन्नाम तन्नाम**। (छा.उ.१.७.५)

[८] स यो **वाचं ब्रह्मेत्युपास्ते**, यावद्वाचो गतम्, तत्रास्य यथाकामचारो भवति यो **वाचं ब्रह्मे**त्युपास्ते। अस्ति भगवो वाचो भूय इति। वाचो वाव भूयोऽस्तीति। तन्मे भगवान् ब्रवीत्विति। (छा.उ.७.२.२)

## ९. अवाच्यत्वभङ्गः

[३]"**तत्र पूज्यपदार्थोक्तिः परिभाषासमन्वितः।**
**शब्दोऽयं नोपचारेण ह्यन्यत्र ह्युपचारतः**'

इत्याद्यनुगृह्णन् भगवान् पराशरः कथमवाच्यतोक्तिममृष्येत्। पूज्यपादार्थोक्तीति योगोऽभिहितः। परिभाषेति रूढिः।

न च [४]"**यतो वाचो निवर्तन्त**' इति श्रुतिविरोधः। तस्यानन्दापरिच्छेदतात्पर्यकत्वात् प्रकरणेन तथा प्रतीतिः[५]। [६]"**सैषानन्दस्य मीमांसा**' इति ब्रह्मानन्दो हि मीमांस्यतयोक्तः[७]। सैषेत्युक्तेर्मनुष्यानन्दादिनिरूपणमेव ब्रह्मानन्दमीमांसेत्यवगतः। तन्निरूपणस्य ब्रह्मानन्दार्थत्वं तदुत्कर्षप्रतिपादनेनैवेति शब्दस्वारस्यादवगम्यते। तत्र [८]"**स एको ब्रह्मण आनन्द**' इत्युक्तेः

---

[१]

[२] **नताः स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वति।**
तमाद्यन्तमशेषस्य जगतः परमं प्रभुम्।। (विष्णु.पु.१.१४.२६)

[३] विष्णु.पु.६.५.७७.

[४] **यतो वाचो निवर्तन्ते**। अप्राप्य मनसा सह। **आनन्दं ब्रह्मणो विद्वान्**। (तै.उ.२.९)

[५] क - प्रतीतेः

[६] **सैषानन्दस्य मीमांसा भवति**। युवा स्यात् साधु युवाध्यायकः। आशिष्ठो दृढिष्ठो बलिष्ठः। तस्येदं पृथिवी सर्वा वित्तस्य पूर्णा स्यात्। स एको मानुष आनन्दः। **ते ये शतं** मानुषा आनन्दाः। स एको मनिष्यगन्धर्वाणामानन्दः। श्रोत्रियस्य चाकामहतस्य। **ते ये शतं** मनुष्यगन्धर्वाणामानन्दाः। स एको देवगन्धर्वाणामानन्दः। श्रोत्रियस्य चाकामहतस्य। **ये ते शतं** देवगन्धर्वाणामानन्दाः। स एकः पितृणां चिरलोकनामानन्दः। श्रोत्रियस्य चाकामहतस्य। **ते ये शतं** पितृणां चिरलोकलोकनामानन्दाः। स एक आजानजानां देवानामानन्दः। श्रोत्रियस्य चाकामहतस्य। **ते ये शत**माजानजानां देवानामानन्दाः। स एकः कर्मदेवानां देवानामानन्दः। ये कर्मणा देवानपियन्ति। श्रोत्रियस्य चाकामहतस्य। **ते ये शतं** कर्मदेवानां देवानामानन्दाः। स एको देवानामानन्दः। श्रोत्रियस्य चाकामहतस्य। **ते ये शतं** देवानामानन्दाः। स एक इन्द्रस्यानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतमिन्द्रस्यानन्दाः। स एको बृहस्पतेरानन्दः। श्रोत्रियस्य चाकामहतस्य। **ते ये शतं** बृहस्पतेरानन्दाः। स एकः प्रजापतेरानन्दः। श्रोत्रियस्य चाकामहतस्य। **ते ये शतं** प्रजापतेरानन्दाः। **स एको ब्रह्मण आनन्दः**। श्रोत्रियस्य चाकामहतस्य। स यश्चायं पुरुषे। यश्चासावादित्ये। स एकः। स य एवंवित्। अस्माल्लोकात् प्रेत्य। एतमन्नमयमात्मानमुपसंक्रामति। एतं प्राणमयमात्मानमुपसंक्रामति। एतं मनोमयमात्मानमुपसंक्रामति। एतं विज्ञानमयमात्मानमुपसंक्रामति। एतमानन्दमयमात्मानमुपसंक्रामति। तदप्येष श्लोको भवति। (तै.उ.२.८)

[७] क - मीमांस्यतयाभिहितः; घ - मीमांस्यतयोक्तः

[८] तै.उ.२.८.

पूर्वानन्दवत्परिच्छेदबुद्धिनिराकरणाय षोडशवर्णस्वर्ण एकवर्णवदुत्कर्षैकदेशो निरूपितः। अखण्डोत्कर्षस्तु नैव[१] मीमांसायास्तदुक्तेश्च गोचर इत्युच्यते '**यतो वाचो निवर्तन्त**' इति।

यद्वा किमितोऽपि ब्रह्मानन्दस्योत्कर्षः। किं वा एतावदेव यद्यस्ति तर्हि तावानप्युत्कर्षोऽब्जभुवोऽप्युपर्युपरि [२]"**ते ये शतम्**' इत्यनुक्रमात् पुरुषान् परिकल्प्य मीमांस्यतामित्यत्राह '**यतो वाच**' इति। यद्यप्ययमर्थो निगदेनैवावगम्यते तथापि परैरर्थान्तरस्योत्प्रेक्षितत्वात् तन्निषेधार्थं स[३] एव मया पुनरुक्त इति द्रष्टव्यम्। यदि स्वरूपस्य वाङ्मनसागोचरत्वं विवक्षितं स्यात् तदा [४]"**आनन्दं ब्रह्मणो विद्वान्**' इत्युक्तेः कथं सामञ्जस्यम्। तन्निवृत्तौ हि वृत्तिव्याप्यत्वमपि न सिद्ध्येत। अतो मनोनिवृत्तिरुत्कर्षपरिच्छेदार्थं मीमांसाविषयेति वाच्यम्। अतो वाङ्निवृत्तिरपि परिच्छेदविषयैव युक्ता। किञ्च [५]"**अप्राप्य**' इति प्रकर्षेण आप्त्यभाव[६] उच्यते। तेनाप्तिमात्रं सिद्धम्। अपि च तं प्राप्तवत एव ततो निवृत्तिः। [७]न हि सूत्र एव स्थिते देवदत्ते मालवकान्निवृत्त इति वक्तारो भवन्ति। मालवकं गत्वा निवृत्ते तु त्वरितं वक्तारो भवन्ति। तस्माद्वाङ्मनसे ब्रह्मानन्दमीमांसां प्राप्याखण्डोत्कर्षस्य मीमांसाविषयत्वाभावात् ततो निवृत्त इत्यर्थः। निवृत्तिपदस्यौपचारिकत्वेऽपि [८]प्रयोगस्य केनचिदाकारेण प्राप्तवत एवाकारान्तरेणाप्राप्तौ स्वारस्यसिद्धिः। निरुक्तमीमांसामुखेनानन्दं प्राप्तवतोः वाङ्मनसयोरुपरि मीमांसामुखेनाप्राप्तिर्हि निवृत्तिपदेन विवक्ष्यते। वाङ्मनसनिवृत्त्युपादानं [९]हीयत इति निर्दिश्यते। तत्र कथं लक्षणा। न हि तस्यान्यो मुख्यार्थोऽस्ति। सर्वनाम्नां हि प्रकृतमेव मुख्यार्थः। अत इदमेव वाक्यं '**यतो निवर्तन्ते**' '**अप्राप्य मनसा सह**' इति पदैर्वाच्यत्वं साधयति। अवाच्यत्वे विवक्षिते '**यतो निवर्तन्त**' इत्येतावदेव हि वक्तव्यम्।

---

[१] क - नैवम्; घ - नैव)

[२] तै.उ.२.८.

[३] क - च

[४] तै.उ.२.४,२.९.

[५] तै.उ.२.४,२.९.

[६] क - प्राप्त्यभाव

[७] क - यद्यप्राप्तवतोऽपि निवृत्तिः तर्हि

[८] क - तत्प्रयोगस्य; घ - प्रयोगस्य

[९] क - ह्रियत; ग - हीयत

अप्राप्येति व्यर्थम्। एकदेशं प्राप्य कृत्स्नप्राप्तावसामर्थ्यात् [1]निर्वृत्ता इत्युक्तौ हि सार्थक्यम्। '**यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्**' इति शब्दधियोर्मितिः । आनन्दशब्दस्य परैस्स्वरूपानन्दपरत्वाभिधानादिदमुक्तम्। वस्तुतस्त्वेषा श्रुतिरानन्दगुणपरा '**आनन्दं ब्रह्मण**' इति व्यतिरेकनिर्देशात् ।

ननु [2]'**आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म**' इति त्वां च माञ्चान्तरा [3]कमण्डलुमितिवत् नामरूपयोर्मध्ये ब्रह्मेति तदुभयसंबन्धराहित्यं प्रतीयत इति चेन्न। '**ह वा**' इत्यनुवादात् सद्विद्या प्रत्यभिज्ञायते। तत्रानुप्रविश्य नामरूपव्याकरणश्रवणात् नामरूपव्याकरणस्यानुप्रवेशनिबन्धनत्वस्य नामरूपयोर्ब्रह्मपर्यन्तत्वं विनानुपपत्तेः तदवश्यंभावे ब्रह्मणस्तत्प्रयुक्तदोषाः प्रादुष्युरित्यत्राह '**ते यदन्तरा**' इति। नामरूपाभ्यां द्वारनिरपेक्षसंबन्धश्चिदचितोरिव नास्तीत्यर्थः। अन्यथा पूर्ववद्यत्पदानन्वयः नामरूप-व्याकरणविषयनामनिवृत्तावपि ब्रह्मादिनामनिवृत्त्यसिद्धेश्च।

[4]'**यद्वाचानभ्युदितम्**' इति न वाग्विषयत्वं निषिध्यते। तेन [5]'**येन वागभ्युद्यत**' इति वाक्यशेषे वाक्प्रेरकत्वस्य प्रतिपादनात् वाक्प्रेर्यत्वमेव निषिध्यते। नानन्याधिपतित्वं प्रतिपाद्यते। अन्यथा पूर्ववत् यत्पादद्वयानन्वयात्।

नन्वत्र [6]वद्धातोरिदं रूपम्। एवञ्च ब्रह्मणा वागुच्यते ब्रह्म न वाचोच्यत इति चेन्न। विधिनिषेधयोर्वैरूप्यप्रसङ्गादुच्चारणं विधीयते। शक्तिर्निषिध्यत इति वाग्विषयत्व-निषेधे लक्षणाया अपि निषेधप्रसङ्गः। शक्तिविषयतया निषेधसंकोचे परिच्छेद-विषयतासंकोचे[7] कः प्रद्वेषः। लक्षणाविषयतयैव वा संकोचः किन्न स्यात्। युक्तश्चायमेव वाच्यत्वनिषेधवत् बाधकाभावात् प्रमाणान्तरानुगुण्याच्च ब्रह्मणः सर्वशब्दवाच्यत्वं **सद्विद्यादिषू**पपादितम्। ततश्चावाच्यविषया लक्षणा वाच्ये [8]अनुपपत्तेः। अतो

---

[1] क - ग - निवृत्तौ

[2] **आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म** तदमृतँ स आत्मा। (छा.उ.८.१४.१)

[3] ग - कमण्डल्यः; घ - कमण्डलुमितिवत्

[4] **यद्वाद्वाचानभ्युदितं येन वागभ्युद्यते।**
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते।। (केन.उ.१.४)

[5] केन.उ.१.४.

[6] क - वदि

[7] क - ग - विषयतया संकोचे

[8] क -ग - अनुपपन्नैव; घ - अनुपपत्तेः

लक्षणाविषयतया निषेधसंकोचो ज्यायान् या '**यद्वाचानभ्युदितम्**' इति श्रुतिस्सापि महीयसी लक्षणां प्रतिषेधन्ती वाच्यत्वे मानमेव न। किञ्च '**यद्वाचा**' इति '**येन**' इत्यनुसारात् वाक्प्रकाश्यत्वं न निषेध्यन्तस्याप्रसिद्धेः। वाचः प्रकाशत्वाभावात् [1]तत्करणकत्वज्ञानगोचरत्वनिषेधे येनेत्यपि ज्ञानकरणत्वं विवक्ष्येत। अन्यथा अस्वारस्यात् करणत्वञ्च ब्रह्मणोऽसिद्धमेव। [2]**अस्मदाचार्या** अनुगृह्णन्ति -

**'ब्रह्मण्यशब्दवाच्ये स्याद्वचसां वाच्यमुत्तमम्।**
**इत्यादिमानविद्वेषो वाच्यत्वोपहितस्य[3] चेत्।।**
**स्वरूपस्यापि [4]वाच्यत्वं तदन्तर्भावतो भवेत्।**
**[5]उपधानेन शून्यस्यावाच्यत्वे व्याहतिर्भवेत्।।**
**वाच्यत्वं ब्रह्मणो वाच्येऽनुपधाने न लक्षणा।**
**समानसत्ववाच्यत्वाभावे तौल्यं घटादिना।।**
**निमित्तोपहिते शब्दस्वरूपं चेन्न गोचरः।**
**यतो वाचो निवर्तन्ते श्रुतिस्तु गुणगोचरा।।**
**स्वरूपगोचरत्वेऽपि कथं शक्तिर्निवार्यते।**
**अप्राप्येति निषेधे तु कथं मृष्येत लक्षणाम्।।**
**निर्देश्य वृत्तिमात्रस्य निषेधे व्याहतिस्ततः।**
**शक्तेर्निषेधश्चेत्तर्हि लक्षणा वा निषिध्यताम्।।**
**लक्षणाया निषेधे हि वाच्यत्वश्रुत्यनुग्रहः।**
**तात्पर्यमपरिच्छेदे श्रुतेः प्रकरणात्ततः।।**
**मनसा सममाम्नानां निवृत्तिर्दुर्वचा गिरः।**
**इष्यते हि परा वृत्तिः परैरपि परात्मनि।।'**

अयमर्थः - अवाच्यत्वे प्रमाणविरोधः। उपहितस्य वाच्यत्वान्न विरोध इति चेत् किं तर्ह्यवाच्यम्। अनुपहितमिति चेत् किं तदनुपहितम्। किं स्वरूपमेव। किं वोपधानशून्यं

---

[1] क - तत्करणकत्व; ग - वाक्करणकत्व

[2] **अस्मदाचार्यः** प्रथममहाचाचार्यः। वेदान्तविजयग्रन्थकारस्तु तदनुजपौत्रः स्वपुत्रत्वेन स्वीकृत्तोऽध्यापितश्चेति विज्ञेयम्।

[3] क - ग - वाच्यतोपहितस्य

[4] क - वाच्यत्वम्; ग - वाच्यत्वे

[5] क - उपधानेन; ग - उपाधानेन

## ९. अवाच्यत्वभङ्गः

स्वरूपं किं वोपधानाभावः। आद्ये उपहितस्य वाच्यत्वे स्वरूपस्यापि तत्प्रवेशेन वाच्यत्वमनिवार्यम्। द्वितीयेऽपि किमुपहितस्वरूपमेवोपधानशून्यं विवक्षितं किं वा ततोऽन्यत्। आद्ये व्याघातः। यदि चोपहितस्याप्युपधानस्यापि पारमार्थिकतया पारमार्थिकोपधानशून्यत्वान्न व्याघातः। तथापि तादृशं ब्रह्म वाच्यमेवेति कथमवाच्यता। द्वितीयमसिद्धमनङ्गीकृतञ्च। एतेन तृतीयमपि निरस्तम्। ब्रह्मणोऽवाच्यत्वाविरोधाच्च। यदि चोपहितान्तर्भावेन स्वरूपस्य वाच्यत्वेऽपि घटादिवद्धर्मिसमानसत्ताकवाच्यत्वाभावमात्रेण वाच्यत्वाभावं मन्यसे तर्हि ब्रह्मावाच्यमिवालक्ष्यमपि स्यात् लक्षणावैयर्थ्यं च। यदि प्रवृत्तिनिमित्तोपहितप्रतीतेश्शक्त्यधीनत्वेऽपि स्वरूपमात्रप्रतीतेश्शक्त्यधीनत्वाभावाच्छब्दजन्यस्वरूपमात्रगोचरवृत्तये स्वरूपलक्षणेति ब्रूषे तर्हि घटाद्यविशेषः न हि [१]घटत्वाद्युपहितशक्तिस्तदनुपहितं बोधयति। '**यतो वाच**' इति श्रुतिर्गुणापरिच्छेदविषया। स्वरूपगोचरत्वेऽपि वाङ्मात्रनिवृत्तिप्रतीत्या कथं शक्तिनिवृत्तिः। '**अप्राप्य**' इति शक्तिनिवृत्तिः प्रतीयत इति चेन्न। लक्षणाया अपि संबन्धत्वात् 'यत' इति निर्दिश्य निषेधे व्याघातः। शक्तिमात्रनिषेधे विपरिवर्तावपि[२] सुवचः। [३]तथा हि '**वचसाम्**' इत्याद्यनुग्रहश्च। तस्मात् प्रकरणानुसारादपरिच्छेद एव तात्पर्यम्।

किञ्च वाङ्निवृत्तिवदेव मनोनिवृत्तिरपि वाच्येति तृतीयश्लोके ब्रह्मणो वाच्यत्वञ्च भवेदिति हि अन्वयः। अनुपधानेऽवाच्य इत्यन्वयः। समानसत्ववाच्यत्वाभावेन लक्षणेत्यन्वयः न गोचरः। तौल्यं घटादिनेत्यन्वयः। [४]'**ब्राह्मणः परीक्ष्य**' इत्यनेन वेदाप्रामाण्यवादिनिरासोऽप्यभिप्रेतः। अप्रमाणशब्देनाप्रामाण्यवादिन एके, इतरे पुनः प्रमाणशब्देन। ते हि शैलूषवद्वैदिकभूमिकां परिगृह्य वेदप्रामाण्यं वदन्त इव प्रविश्य वेदस्य व्यावहारिकार्थविषयत्वेनाप्रामाण्यापरपर्यायं प्रामाण्यमुक्त्वा कार्त्स्न्येन तथोक्तौ वैदिकैः बहिष्कारो भवितेति बुद्ध्या कस्यचित्तत्त्वावेदकत्वं वदन्त इव वैदिकगोष्ठीम् [५]अध्यारूढस्यापि तत्ववेदकतया अभिमतत्वमस्यादेस्संसर्गबोधकत्वम् [६]अप्यपहृत्य

---

[१] क - घटत्वाद्युपहित; ग - घटत्वाद्युपलक्षित

[२] क - परिवर्तोऽपि; ग - विपरिवर्तावपि

[३] क - ग - तथा सति

[४] **परीक्ष्य** लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्।
नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्।। (मुण्डक.१.२.१२)

[५] क - ग - अध्यारुह्य तस्यापि तत्त्वावेदकतया; घ - अध्यारूढस्यापि तत्त्ववेदकतया

[६] क - घ - अप्यपहृत्य; ग - अपहृत्य

पदार्थस्यैव वाक्यार्थतां वदन्तः पौनरुक्त्यप्रसङ्गेन तदपि त्याजयन्तो बोधकत्वमेव नास्ति। कुतः प्रामाण्यमिति [१]व्यञ्जयन्ति। तत्र पूर्वनिरासः पूर्वकाण्डे विस्तृतोऽनुसन्धेयः। पाश्चात्यनिरासविस्तरस्त्वद्वैतविद्याविजयेऽनुसन्धेयः।

## इति अवाच्यत्वभङ्गः।

**इत्थं स्वानुचरैर्न्यायैर्निराकृत्यविरोधिनः।**
**तद्विज्ञानश्रुतिस्सार्धं तैर्जयत्यक्षरादिभिः।**

**इति श्रीवाधूलकुलतिलकश्रीनिवासाचार्यपादसेवासमधिगतपरावरतत्त्वयाथात्म्येन**
**तदेकदैवतेन तच्चरणपरिचरणपरायणेन**
**तत्प्रसादलब्धमहाचार्यापरनामधेयेन**
**रामानुजदासेन विरचिते**
**वेदान्तविजये**
**गुरूपसदनविजयः प्रथमः समाप्तः ।।**

**वाधूलश्रीनिवासार्यतनयं विनयाधिकम्।**
**प्रज्ञानिधिं प्रपद्येऽहं श्रीनिवासमहागुरुम्।।**

**चण्डमारुतवेदान्तविजयादिस्वसूक्तिभिः।**
**वेदान्तरक्षकायास्तु महाचार्याय मङ्गलम्।।**

---

[१] क - वञ्चयन्ति; ग - घ - व्यञ्जयन्ति





Dr. K.K.C. Lakshmi Narasimhan hails from a learned brāhmana family of Teṇkalai Vaiṣṇavite from Cholasimhapuram who were traditionally invested with responsibility of sampradāya care and promotion [for being the family member in lineage of the renowned Dasarathi (Mudaliyāṇḍān): the nephew of Sri Ramanuja right from the time of Śrī Rāmānuja. He was privileged to have his training in Sanskrit and thus acquired Vyākaraṇa Śiromaṇi and Śikṣā Śāstri (B.Ed) as well as M.A., and Ph.D. both in Ancient Indian culture. He has already authored a book 'Vaikhānasa Iconography.'

Dr. K.K.C.S. Badhri Narayanan, younger brother of the above, was privileged to have his training in Sanskrit and thus acquired Vyākaraṇa Śiromaṇi and Śikṣā-Sāstri (B.Ed) as well as M.A., M.Phil and Ph.D. His Ph.D. Thesis 'Brahmavidyāvijaya' has already been published recently. He is currently associated with his brother in editing and publishing of other works of Caṇḍamāruta Mahācārya.



Both of them have already worked to bring out a valuable book"Ghaṭikācāla Māhātmyam' recently, which includes also simple translation of the book. In the Project of the publication of the treatises of Mahācārya, currently, Gurūpasadanavijaya' is presented. Advaitavidyāvijaya is the next project and its publication is expected soon.

